Digitized by Madhuban Trust, Delhi



अथ पञ्चमे खण्डे*—

रेवतीर्न-इति तृचात्मकं† प्रथमं सूक्तम्—

तत्र, प्रथमा ।

३र २ ३ २ ३ १ २ ३ १ २
रेवतीर्नः सधमाद इन्द्रे सन्तु तुविवाजाः ।

३ २ ३ २ ३ १ २
क्षुमन्तो याभिर्मदेम ॥ १‡ ॥

"क्षुमन्तः" अन्नवन्तः "याभिः" गोभिः सह "मदेम" हृष्येम "इन्द्रे" "सधमादे" अस्माभिः सह हर्षयुक्ते सति "नः" अस्माकं ता गावः "रेवतीः" क्षीराज्यादि-धनवत्यः "तुविवाजाः" प्रभूत-बलाय "सन्तु" ॥ [रेवतीः—रयि-शब्दात् मतुपि "रयेर्मतौ बहुलम् ( ६, १, ३४ वा० )" —इति सम्प्रसारणम्, परपूर्वत्वे, "छन्दसीरः ( ८, २, १५ )"—इति मतुपो वत्वम्, "वा च्छन्दसि ( ६, १, १०६ )"—इति पूर्वसवर्णदीर्घः, "रे-शब्दाच्च मतुप उदात्तत्वं वक्तव्यम ( ६, १. १७६ वा० )"—इति रे-शब्दादुत्तरस्यापि भवतीति पूर्वमेवोक्तम् । सधमादे—मद इति योगे चौरादिकः, सह मादयतीति सधमादः "सधमादस्थयोश्छन्दसि ( ६, ३, ९६ )"—इति सह-शब्दस्य सध आदेशः, थाथादिना ( ६, २, १४४ )—उत्तर-पदान्तोदात्तत्वे प्राप्ते "परादिश्छन्दसि

---

* 'इदानीं' दृष्टानि'—इति वि० ।

† 'रेवतीषु वारवन्तीयं दृष्टं भवति'—इति वि० ।

‡ ऋ० शा० २, २, १, ९ ( १भा० ३५३पृ० )=ऋ० वे० १,२,२०,२ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



बहुलम् (६, २, १९९)"—इति उत्तरपदाद्युदात्तत्वम्। तुविवाजाः—बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् (८, २, १)। द्युमन्तः—दु चु रु कु शब्दे (अदा० प०), अस्मात् क्विपि तुगभावश्छान्दसः, "ह्रस्वनुड्भ्यां मतुप् (६, १, १७६)"—इति मतुप उदात्तत्वम्। मदेम—मदी हर्षे (दि० प०), व्यत्ययेन शप्, अदुपदेशाल्लसार्वधातुकानुदात्तत्वे शपः पित्त्वादनुदात्तत्वम्, ततो धातुस्वरः शिष्यते॥ १॥

अथ द्वितीया।

२ ३ २ ३ १ २ ३ १ ३ १ २ ३ १
आघत्वावात्मनायुक्तस्तोतृभ्योधृष्णवीयानः।
३ २उ ३ २ ३१ २ २
अक्षोरक्षन्नचक्रयोः॥ २ *॥

हे "धृष्णो!" धार्ष्ट्ययुक्तेन्द्र!† "त्वावान्" त्वत्सदृशो देवताविशेषः, "त्मना" आत्मना अस्मदनुग्रह-बुद्ध्या युतः "ईयानः" अस्माभिर्याच्यमानः "स्तोतृभ्यः" स्तोतॄणामनुग्रहाय तदभीष्टमर्थं "घ" अवश्यम्‡ "आ अक्षोः" आनीय प्रक्षिपतु। तत्र दृष्टान्तः—"चक्र्योः" रथस्य चक्रयोः "अक्षं न" यथा अक्षं प्रक्षिपति तद्वत्॥ त्वावान् वतुप्प्रकरणे "युष्मदस्मद्भ्यां छन्दसि सादृश्य उपसङ्ख्या

* ऋ० वे० १,२,३०,४।

† 'धृष्णो—धारण-स्वभावः'—इति वि०।

‡ 'घ—इति पद-पूरणः'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



नम् ( ५ २, ९४ वा० )"—इति वतुप् "प्रत्ययोत्तर-पदयोश्च ( ७, २, ९८ )"—इति मपर्यन्तस्य त्वादेशः, "आ सर्वनाम्नः ( ६, ३, ९१ )"—इति दकारस्यात्वं, वतुपः पित्त्वादनुदात्तत्वे ( ३, १, ४ ) प्रातिपदिक-स्वरः शिष्यते । त्वना—"मन्त्रे-ष्वाङ्यादेरात्मनः (६, ४, १४१ )"—इत्याकार-लोपः । धृष्णो—ञि धृषा प्रागल्भ्ये, "त्रसिगृधि-धृषि क्षिपेः क्नुः, आम-न्त्रितानुदात्तत्वम् । ईयानः-ईङ् गतौ, ( दि० आ० )छन्दसि लिट् ( ३, २, १०५ ), तस्य "लिटः कानज्वा ( ३, २, १०७ )" —इति कानजादेशः, "अचिश्नु धातु ( ६, ४, ७७ )"—इत्या-दिना इयङादेशः,"चितः ( ६, १, १६३ )"—इत्यन्तोदात्तत्वम् । ऋणोः—ऋण गतौ ( तना० उ० ) लङि व्ययेन तिपः सिपि ( ३, १, ८५ ), "इतश्च ( ३, ४, ९७ )"—इतीकारलोपः, "तनादि-कृञ्भ्य उः ( ३, १, ७९ )",—सार्वधातुकगुणः ( ७, ३, ८४ ), "बहुलम्छन्दस्यमाङ्योगेऽपि"--इत्यड़ागमा-भावः, विकरण-स्वरेणान्तोदात्तत्वम् । अत्तम्—"अत्तस्यादेवनस्य ( फि० २, १२ )"—इत्याद्युदात्तत्वम् । चक्रोः—अकारस्यैका-रम्छान्दसः ( ३, १, ८५ )" ॥ २ ॥

अथ तृतीया ।

१र   २र   ३ १र   ३र   ३ २
आयद्द् वःशतक्रतवाकामञ्जरितृणाम् ।
३ २उ ३ १र २र
ऋणोरत्तन्नशचीभिः ॥ ३ * ॥ १४

हे "शतक्रतो" इन्द्र ! "यत्" "द्वः" धनं कामितार्थ-

---

* ऋ० वे० १,२,३,५ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



रूपम् स्तोतृभिः आसव्यमस्ति तं कामं "जरितॄणां" स्तोतॄणा-मनुग्रहाय "आ ऋणाः" आनीय प्रक्षिपसि । तत्र दृष्टान्तः— "शचीभिः" कर्मभिः शकटोचित-व्यापार-विशेषैः "अक्षं न" यथा अक्षं प्रक्षिपति तद्वत् ॥ [शचीभिः—शची-शब्दः शार्ङ्गरवादित्वात् ( ४, १, ७३ ) ङीबन्तत्वादाद्युदात्तः ( ३, १, ४ )॥ ३ ॥ १४

२ २र र र १ २
॥ वारवन्तीयोत्तरम् ॥ रेवतीर्न्नौहोहायि । सा

३ ५ २ २१ ५ १ ०
धामा२३४हायि । इन्द्रायिसा२३४हा । तुतुविवा३४ ।

३र ४र ५ २ ३ ५ २ ३ ५ २१
औहोवा । इहा२३४हायि । उज्जवा२३४जाः । त्तुम

२ १ ७ २ ३र ४र ५ १ ३ ५
न्तः । याभिर्मदा३४ । औहोवा । इहा२३४हायि ।

३र २ ५र ५ २र र र
औहो३१२३४ । मा । एहियाईहा ॥ (१) आघत्वावा ७

र १ २ ३ ५ ३र १ ५
औहाहायि । त्मानायु२३४क्ताः । स्तोतृभ्यो२३४हायि ।

१ र २ ३र ४र ५ १ ३ ५ २ ०
धृष्णवीया३४ । औहोवा । इहा२३४हायि । उज्जवा

५ २ १र २ १ ७ २ ३र ४र ५ १ ३
२३४नाः । ऋणोर । हान्नचक्रा३४ । औहोवा । इहा

५ ३र २ ५र ५
२३४हायि । औहो३१२३४ । योः । एहियाईहा ॥(२)



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२र र र १ २ ३ ५ २र १
आयहुवाऔहोहायि । शातक्रा२३४ताउ । आकामा२३

५ १ १ ३र ४र ५ १ ३ ५
४५हायि । जरितॄ३४ । औहोवा । इहा२ ३ ४ हायि ।

२ ३ ५ २ १र २ १ ७ २ ३र २र ५
उक्थवा२३४णाम् । रुशोर । चान्नशचा३४ । औहोवा ।

१ ३ ५ २र १ ५र ५
इहा२३४हायि । औहो३१२३४ । भोः । एह्वियाइहा ।

४
होऽ५ई । डा(३) ॥ ७ * ॥ [१] १४

सुरूपकृत्नुमिति तृचात्मकं द्वितीयं सूक्तम्,

तत्र, प्रथमा ।

३ २ ३ १ २ ३ १ २ ३ १ २
सुरूपकृत्नुमूतयेसुदुघामिवगोदुहे ।

२ ३ २ ३ २
जुहूमसिद्यविद्यवि ॥ १ † ॥

"सुरूपकृत्नुं," शोभन-रूपोपेतस्य कर्मणः कर्त्तारमिन्द्रं "ऊतये" अस्मद्रक्षणार्थम् "द्यवि द्यवि" प्रतिदिनं "जुहूमसि" आह्वयामः ॥ [द्यो-शब्दः प्रातिपदिक-स्वरेणान्तोदात्तः(फि० १,१), "नित्य वीप्सयोः(८,१,४)"—इति द्विर्भावः, 'तस्यपरमाम्रेडितम्

---

* ऊ० गा० ३प्र० १ख० ७सा० ।

† छ० आ० २,२,१,१ ( १भा० २६६पृ० )=ऋ० वे० १,४,७,१ ।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



(८, १, २) "अनुदात्तञ्च (८, १, २)"—इति द्वितीयस्यानुदात्तत्वम्। जुह्मसि—इत्यत्र "इदन्तोमसि (७, १, ४६)"—इति इकार आगमः, प्रत्यय-स्वरेण (३, १, ३) इकारउदात्तः।] आह्वाने दृष्टान्तः—"गोदुहे" गोधुगर्थं [ गां दोग्धीति गोधुक्; सत्सू द्विषेत्यादिना (३, २, ३१) क्विप्, कृदुत्तरप्रकृतिस्वरत्वम् (६,२, १३९)] "सुदुघाम् इव" सुष्ठु दोग्ध्रीं गामिव यथा लोके यो दोग्धा तदर्थं तस्य आभिमुख्येन दोहनीयां गामाह्वयन्ति तद्वत् [सुष्ठु दुग्धे इति सुदुघा, "दुहः कब्घश्च (३,२,७०)"—इति कप् प्रत्ययः हकारस्य च घकारः, कित्वाद् गुणाभावः (१, १, ५), कपः पित्त्वादनुदात्तत्वे धातुस्वरेणोकार उदात्तः(६,१,१६२)॥१॥

अथ द्वितीया।

१ २ ३ २ ३ १ २ ३ १ २
उपनःसवनागहिसोमस्यसोमपाःपिब।

३ २उ ३ २ ३ १ २
गोदाइद्रेवतोमदः॥ २ *॥

हे "सोमपाः" सोमस्य पातरिन्द्र ! सोमं पातुं "नः" अस्मदीयानि "सवना" सवनानि त्रीणि "उप" समीपे "आ गहि" आगच्छ [ सवना—सूयते सोम एष्विति सवनानि सुपो डादेशः(७,१,३९) टिलोपश्च(६,४,१४३),"लिति(६,१,१९३)-इति त्ययात् पूर्वस्या-"

---

* ऋ० वे० १,४,०,२।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



कारस्य उदात्तत्वम्। गहि—इत्यत्र गमेः "बहुलञ्छन्दसि (२,४,७३)—इति शपो लुक्; हेर्ङित्त्वादनुदात्तोपदेशेत्यादिना (६,४,३७) मकार-लोपः; "अतोहेः (६,४,१०५)"—इत्याभीय-शास्त्रीरे लुकि कर्त्तव्ये "असिद्धवदत्राभात् (६,४,२२)"—इति आभाच्छास्त्रीयो मकार-लोपोऽसिद्धवद् भवति]। आगत्य च "सोमस्य" सोमं "पिब", "रेवतः" धनवतः तव "मदः" हर्षः "गोदा इत्" गोप्रद एव, त्वयि हृष्टे सति अस्माभिर्गावो लभ्यन्त इत्यर्थः ॥२॥

अथ तृतीया।

१ २ ३ १ २   २ १ २   ३ २
अथाते अन्तमानांविद्यामसुमतीनाम्।
२ ३ १ २ ३ १ २
मानोअतिख्यआगहि ॥ ३ * ॥ १५

"अथ" सोमपानानन्तरं हे इन्द्र! "ते" तव "अन्तमानाम्" अन्तिकतमानामतिशयेन तव समीपवर्त्तिनां "सुमतीनां" शोभन-मति-युक्तानां शोभन-प्रज्ञानां पुरुषाणां मध्ये स्थित्वा "विद्याम" वयं त्वां जानीयाम [यद्वा, सुमतीनां शोभन-बुद्धीनां कर्मानुष्ठान-विषयाणां लाभार्थमित्यध्याहारः बहुव्रीहि-पक्षे पूर्वपद-प्रकृति-स्वरापवादो "नञ्-सुभ्याम् (६,२,१७२)"—इत्युत्तर-पदान्तोदात्तः। कर्मधारय-पक्षेऽपि अव्यय-पूर्वपद-प्रकृति-स्वरापवाद-कृत्स्वरेणान्तोदात्ततैव (६,२,१३९)। अतो मतुपि ह्रस्वान्तोदात्ताच्च सुमति-शब्दात् परस्य नामो "नाम-

* ऋ० वे० १, ४, ७, ३।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



न्यतरस्याम् (६,१,१७७)"—इत्युदात्तत्वम् ]। त्वमपि "नः" अस्मान् "अति" अतिक्रम्य "माख्यः" अन्येषां त्वत्स्वरूपं मा प्रकथयः [ख्या प्रकथने (अदा० प०)—इत्यस्य लुङि "अस्यतिवक्तिख्यातिभ्योऽङ् (३,१,५२)"। आगहि—गमेः शपो लुकि ङित्त्वादनुदात्तोपदेशेति (६,४,३७) मकार-लोपस्यासिद्धवदत्राभादिति (६,४,२२) असिद्धवद्भावात् "अतो हेः (६,४,१०५)"—इति लुङ् न भवति॥ २॥ १५

उभेयदिन्द्ररोदसीति-तृचात्मकं तृतीयं सूक्तं;

तत्र, प्रथमा।

३ १र २र ३ १ २ ३ २ ३ १ २
उभेयदिन्द्ररोदसीआपप्राथोषाइव।

३ १ २ ३ १ २ ३ १ ३ ३ २
महान्तन्त्वामहीनाꣳसम्राजञ्चर्षणीनाम्॥

३ १र २र ३ १र २र
देवीजनित्र्यजीजनद्भद्राजनित्र्यजीजनत्॥ १ *॥

हे "इन्द्र!" "उभे" "रोदसी" द्यावापृथिव्यौ "यत्" यः त्वम् "आ पप्राथ" स्वतेजसा आपूरयसि [प्रा पूरणे, आदादिकः (प०). छान्दसो लिट् (३,२,१०५)] "उषा इव" यथा उषाः स्व-भासा सर्वं जगदापूरयति तद्वत् त्वं "महीनां" महतां देवानामपि "महान्तम्" अधिकं "चर्षणीनां" मनुष्याणामपि

* ऋ० भा० ४,२,४,१० (१भा० ७७१पृ०)=ऋ० वे० ८,७,२२,१।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"सम्राजम्" ईश्वरम् इन्द्रं "त्वा" त्वाम् "देवी" देवनशीला "जनित्री" साधु-जनयित्री अदितिः "अजीजनत्" अतः कारणात् सा "भद्रा" कल्याणी प्रशस्ता "जाता" [ जनेर्ण्यन्तात् साधुकारिणि तृन् (३,२,१३४), "जनिता मन्त्रे (६;४,५३)"—इति इड़ादौ णि-लोपो निपात्यते, ऋन्नेभ्यइति ङीप् ( ४, १, ५ ) ॥ १ ॥

अथ द्वितीया ।

२ १  २ ३ १ २ ३ २  ३  १ २
दीर्घꣳह्यङ्कुशंयथाशक्तिम्बिभर्षिमन्तुमः ।
१ २  २ २ ३ २ ३ १र  २र
पूर्वेणमघवन्पदावयामजोयथायमः ।
३१र  २र  ३१र  २र
देवीजनित्र्यजीजनद्भद्राजनित्र्यजीजनत् ॥ २ * ॥

"दीर्घम्" आयतम् "अङ्कुशं" सृणिं "यथा बिभर्षि" एव मायतां "शक्तिं" हे "मन्तुमः" मन्तु ज्ञाने, तद्वन् ! ["मतुवसो रुः (८, ३, १ )"—इति सम्बुद्धौ नकारस्य रुत्वम्] ईदृशेन्द्र ! बिभर्षि धारयसि [डु भृञ् धारण-पोषणयोः जौहोत्यादिकः, श्लौ "भृञामित् ( ७, ४, ७६ )"—इत्यभ्यासस्येत्वम् ] हे "मघवन्" धनवन्निन्द्र ! यथा "पूर्वेण" देहस्य पूर्वभागे वर्त्तमानेन "पदा"

---

* ऋ० वे० ८, ७, ११, ५ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



पादेन "अजः" छागः "वर्यां" शाखां आकर्षति तथा पूर्वोक्तया शक्त्या आक्राम: शत्रून् [नियच्छसि--यमेर्लेटाड़ागमः, "बहुलं छन्दसि (२, ४, ७३)"—इति शपो लुक्]। गतमन्यत् ॥ २ ॥

अथ तृतीया।

१ १ ३ १र २र ३ २
अवस्मदुर्हणायतोमर्त्तस्यतनुहिस्थिरम्।

३ १र २र ३ २ ३ १ २ ३ १ २
अधस्पदन्तमीङ्कृधियोअस्माँ अभिदासति॥

३ १र २र ३ १र २र
देवीजनित्र्यजीजनद्भद्राजनित्र्यजीजनत्॥ ३* ॥१६

"दुर्हणायतः" दुःखप्रद-हरणमाचरतः "मर्त्तस्य" मनुष्यस्य शत्रोः "स्थिरं" दृढं बलम् "अव तनुहि" अवततं नीचीनं कुरु। "स्म"—इति पूरकः। "तम्" शत्रुम् "ईम्" एनम् अधस्पदं पादयोरधस्ताद्वर्त्तमानं "कृधि" कुरु। "यः" शत्रुः "अस्मान्" "अभिदासति" उपक्षिपति†। समानमन्यत् ॥३॥१६

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य सप्तमस्याध्यायस्य पञ्चमः खण्डः ॥ ५ ॥

---

* ऋ० वे० ८, ७, २१, ३।

† 'अभिदासति—हिंसां करोति'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ षष्ठे खण्डे*—

परिस्वानइति-द्वृचात्मके प्रथमं सूक्तम्,

तत्र, प्रथमा ।

१ २३ १ २ ३ २ ३ २ ३ १ २
परिस्वानोगिरिष्ठाःपवित्रेसोमोअक्षरत् ।
१ २ ३ १ २
मदेषुसर्वधाअसि ॥ १ † ॥

अयं "सोमः" "पवित्रे" दशापवित्रे "पर्यक्षरत्" परितः क्षरति । कीदृशः सन् ? "स्वानः" शब्दायमानः ["सुवानः"-इति बह्वृचानां पाठः] सूयमानः "गिरिष्ठाः" गिरिस्थायी ग्रावसु वर्त्तमान इत्यर्थः । हे सोम ! स त्वं "मदेषु" मादकेषु सोमेषु "सर्वधा असि" सर्वस्य धाता दाता च भवसि ॥ १ ॥

अथ द्वितीया ।

२उ ३ १ २ ३ २उ ३ १ २ ३ १र १र
त्वंविप्रस्त्वङ्कविर्मधुप्रजातमन्धसः ।
१ २ ३ १ २
मदेषुसर्वधाअसि ॥ २ ‡ ॥

---

* "इदानीमार्भवो वक्तव्यः । तत्र च वैदन्वत-प्रभृतीनि सामानि, ब्राह्मणोक्तार्थानि'—इति वि० ।

† छ० आ० ५,२.४,९ ( २भा० २६पृ० )=ऋ० वे० ९, ८, ८, १ ।

‡ ऋ० वे० ९, ८, ८, २ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



हे सोम! "त्वं" "विप्रः" विविधं प्रीणयिता विप्रसदृशो वा त्वञ्च "कविः" मेधावी, अतस्त्वम् "अन्धसः" अन्नात् जातं "मधु" मधुरसं प्रयच्छसीति शेषः ॥ २ ॥

अथ तृतीया।

१र २र३ १ २ ३ १ २ ३ १ २
त्वेविश्वसजोषसोदेवासःपीतिमाशत।

१ २ ३ १ २
मदेषुसर्वधाअसि ॥ ३ * ॥ १७

हे सोम! "त्वे" त्वयि "पीतिं" पानं "विश्वेदेवासः" सर्वे देवाः "सजोषसः" समान-प्रीतयः सन्त "आशत" प्राप्नुवन् ॥ ३ ॥ १७

३ र ४ २ ४
॥ तृतीयंवैदन्वतम् ॥ पाऽ५रि। स्वानो३गा३यिरि

५ २ १ र१र २ १र ३ २१ २ १ २र १
ष्ठाः। पवित्रेसो। मोअक्षरात्। पवित्रे। सोमो२३।

४ ५ ३ ४ २ ४ ५ २ १
क्षारात् ॥(१) तूऽ५वम्। विप्रा३स्तू३वङ्कवायिः। मधु

२ १ २ २ २ १ २ १ र ४ ५
प्रजा। तमन्धसाः। मधुप्रजा। तमा२३। धासाः ॥(२)

० र ४ २ ४र ५ २र१र २ १ २ ३र
तूऽ५वे। विश्वे३सा३जोषसाः। देवासःपायि। तिमा

---

* ऋ० वे० ६, ८, ८, ३।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



शता। देवेसःपी। तिमा२३। शाता। औयि।
मदौ। वा३४३ओ३४वा। षुवा। सर्वधाः। असायि।
मा२दा२३४औहोवा। ए३। षुसर्वधाअसी२३४५॥८*॥[१]

॥ वैदन्वताद्यम्॥ पारौ। स्वानोगिरिष्ठाः। पवा
२यित्रे२३४सो। मोअच्छारा२त्॥(१) तूवाम्। विप्र
स्त्वङ्कविः। मधू२प्रा२३४जा। तमन्धामासा२ः॥(२)
तूवे। विश्वेसजोषसः। देवा२सा२३५ःपी। तिमाशा
ता२। मदायिषूसा३। ई३या३। वंधो२३४वा। आ
५सोइहायि॥ ९ †॥ [२]

॥ चतुर्थवैदन्वतम्॥ औ३होयि। इहाइहायि।
औ२हो२३४वा। परायिस्वा२३४नो। गिरा२३४यिष्ठाः।

---

* ऊ० गा० ३प्र० २ख० ८सा०।

† ऊ० गा० ३प्र० २ख० ९सा०।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ १ ५ १ ३ ५ १ ३
पावित्रे२३४सो । सोअक्षा२३४रात् ॥(१) तुवंवा२३४यि

५ २ ३ ५ २ ३ ५ २ ३
प्रः । तुवङ्का२३४वीः । मधुप्रा२३४जा । तमन्धा२३४

५ २ ३ ५ २ ३ ५ २र ३
साः ॥(२) तुवंवा२३४यिश्वे । सजोषा२३४साः । देवासा

५ २ ३ ५ २ ३ ५ २
२३४:पी । तिर्माश्चा२३४ता । मदायिषू२३४सा । वंधा

१ ५ ऽ २ १२१र२१ ३
आ२३४सो । औ३होयि । इहाहाहायि । औ२होर

२ १२ ११११
३४५वा६५६ । ए३ । उपा२३४५(३) ॥ १० * ॥ [३]

२ र १ २र १
॥ ऐध्मवाहाद्यम् ॥ परिस्तुवाइहा । नोगायि । रा

२ ३ ५ ३ ५ २ रररऽ१ २
यिष्ठाओ२३४वा । ई२३४हा । पवित्रेसोमो३आ । हा

२ ५ ३ ५ २ १ २१
रादो२३४वा । ई२३४हा ॥(१) तुवंविप्रइहा । तुवाम् ।

२ ३ ५ ३ ५ २ र ऽ१
कावाओ२३४वा । ई२३४हा । मधुप्रजाता३मा । धा

२ ३ ५ ३ ५ २र १ २१
साओ२३४वा । ई२३४हा ॥(२) तुवेविश्वइहा । सजो ।

२ ३ ५ ३ ५ २रर र १
षासाओ२३४वा । ई२३४हा । देवास:पीती३मा । आ

---

* ऊ० गा० ३प्र० २ध० १०सा०



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



ताऔ२३४वा । ई२३४द्दा । मदायि । षूसाऔ२३४ वा । ई२३४द्दा । वंधाः । वंधा२आ२३४५सा६५६यि । ई२३४द्दा(३) ॥ ८ * ॥ [४]

॥ सᳪहितम् ॥ परिस्तुवानः । गा २यिरिष्ठाः । पवा २यि । न्वे२३सो । मोआ २ह्वारात् । तुवंविप्रस्तु । वाᳪ २कवायिः । मध २ । प्रा२३जा । तमा २न्धासाः । तुवेविश्वे स । जो २षसाः । देवा २ । सा२३ःपी । ति सा २आता । मा२३दायि । षू २सा । वंधा२३ः । हा उवा३ । आ२३४सौ(३) ॥ ६ * ॥ [५]

॥ जराबोधीयम् ॥ परिस्तुवोवा । नोगिरिष्ठाः । पवा यिन्वे२३सो । मोअह्वारात् ॥(१) तुवंविप्रोवा । तूवङ्क वायिः । मधूप्रा२३जा । तमन्धासाः ॥(२) तुवेविश्वो

* ऊ० गा० ८प्र० १ख० ६सा० ।
† ऊ० गा० ६प्र० १ख० ६सा० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ १ २ २ १ २२ १ २ २ १
वा। साजोषसाः। देवासा२३:पो। तिमाशाता। म

२ ४ ५२ ३ २
दायिषू१सा२३वा। धाः। असो३४५ई। डा(३)॥१८*॥[६]

२ १ १ २२
॥ सुह्वपोत्तरम्॥ परिसुवौहो२। इया। नोगिरा

१ १२ १ २२ १
यिष्ठा२:। पवित्रेसौहो२। इया। सोमचारा२त्॥(१)

२ १ २ १ १
तुवंविप्रौहो२। इया। तुवङ्कावा२यिः। मधुप्रजौहो२।

१ २ १ २२ १ १ २
इया। तमन्धासा२:॥(२) तुवेविश्वौहो२। इया। स

२ १ २ २ १ १ २ २ १
जोषासा२:। देवास:पौहो२। इया। तिमाश्राता२।

२ १ १ २ १२ २ १
मदेषुसौहो२। इया। वधाआ२३सा३४३यि। ओ२३

४५ई। डा(३)॥ २† ॥[७]

२२ २ २ २
॥ हाविष्मतम्॥ हाउपरिस्वानोगिरिष्ठाहाउ। प

१ २ २ १ २ ३ ५ २२
वित्रेसो३। मोअचा२३४रात्॥(१) हाउतुवंविप्रस्तुव

१ २ १ २ ३ ५ २२
ङ्कविर्हाउ। मधुप्रजा३। तामन्धा२३४साः॥(२) हाउ

* ऊ० गा० ११प्र०१ ख० १८सा० ।
† ऊ० गा० १४प्र० १ख० १३सा० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



र र र र २र १र २ १ २ ३
तुवेविश्वे सजोषसोद्दाउ। देवासःपो३। तायिमाशा२

५ २ १ २ २ १र
३४ता। ऐ२हो१आ२३यिहो। मदायिषू३सा। वंधाः।

३ ५र र २ १ ३ १ १ १ १
आ२सार३४औहोवा। हविष्मते२३४५(३)॥ ८ *॥ [८]

३ ४ ५ र र २ ३ ५
॥ आम्मदम्॥ परिसुवानऐ। होऐहो२ ३ ४ या।

१ १ ऽ २ १ र र र १
गिरिष्ठाऐ२होऐ२हो३या। पवित्रे सोमोअक्षरदै२होऐ

ऽ १ ३ ४ ५ र २ ३ ५ १
२हो३या॥(१) तुवंविप्रस्तुऐ। होऐहो२३४या। वङ्क

१ ऽ २ १ र १ २
विरै२होऐ२हो३या। मधुप्रजातमन्धसऐ२हो३या॥(२)

१४र ५ र र २ ३ ५ १र ऽ २
तुवेविश्वे सऐ। होऐहो२३४या। जोषसऐ२हो३या।

१र र र र १ ऽ २ १ २
देवासःपीतिमाशतऐ२होऐ२हो३या। मादायिषुसा३१

२ १ ५ ४
२३। वंधो२३४वा। आपुसोहायि(३)॥ ९ †॥ [९]

---

* ऋ० गा० १४प्र० १ख० ८सा०।

† ऋ० गा० १५प्र० १ख० ९सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ १ ४र र ५
॥ हावस्तुनिधनम् ॥ परिस्तुवा२३नोगिरिष्ठाहाउ ।
१ २र र र १ २ १ १ २
प।वित्रे सो । मोआक्षा१रा२३त् । होवा३हायि ॥(१)
१ ४ ५ १ २र १ २
तुवंवा२३यिप्रस्तुवङ्कविर्हाउ । माधुप्रजा । तमान्धा१
१ २ २ २१र ४र र
सा२३ः । होवा३हायि ॥(२) तुवेवा२३यिश्वे सजोहाउ ।
१ र२ र १ र १ २ २ १
हायिवासःपी । तिमाश्चा१ता२३ । होवा३हायि । म
२ १ १ २ १र २
हायिषू१सा२३ । होवा३हा । वंधाः । आ२सा२३४
५र र २ २र १ २ १ १ १ १
औहोवा । ए३ । हावमू२३४५(३) ॥ १० * ॥ [१०]

१ २ १
॥ प्रतीचीनेडङ्काशीतम् ॥ परिस्तुवानः । गा२यिरि
१ २र र र १ ७ १र २
ष्ठाः । पावित्रे सो । मोआक्षरा२३४त् । हाहोयि ॥(१)
१ २ १ २र १ ७
तुवविप्रस्तु । वा२ङ्कवायिः । माधुप्रजा । तमान्धसा
५र २ १ र २ र १
२३४ः । हाहोयि ॥(२) तुवे विश्व स । जो२षसाः । हा

* ऊ० गा० १५प्र० १अ० १०सा० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



यिवासःपी। तिमाशता२३४। हाहोयि। मदेषुसार्वा
इधाः। असा। औ३होवा। ई॒डा(३)॥ ११ *॥[११]

॥ हाविष्कृतम्॥ परिसुवानोगाहाउरायिष्ठाः। प
वित्रेसो। मोआहा२३रात्॥(१) तुवंविप्रस्तुव९हाउ
कावायिः। मधुप्रजा। तमन्धा२३साः॥(२) तुवेवि
श्वेसजोहाउषासाः। देवासःपायि। तिमाशा२३ता।
मदा२होश्यि। षू२३सा। वंधाः। आ२सा२ ३४ औ
होवा। हविष्कृते२३४५(३)॥ १२ †॥ [१२]

॥ गौषूक्तम्॥ परिसुवानोगौ। हौहोवाहायि। रि
ष्ठाः। पवित्रेसोमऔ२। ऊवायि। ऊवा२यि। हा
रा२त्॥(१) तुवंविप्रस्तुवौ। हौहोवाहायि। कवायिः।

---

* ऊ० गा० १५प्र० १ख० ११सा०।

† ऊ० गा० १५प्र० १ख० १२सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



र २ १ १
मधुप्रजातमौ२। ऊवायि। ऊवा२यि। धासा२ः ॥(२)

१ र १ र १ र र २ १ र र र
तुवेविश्वे सजौ। द्दौद्दोवाद्दायि। षसाः। देवासःपी

२ १ १ १ र
तिमौ२। ऊवायि। ऊवा२यि। मा ता२। मदेषुस

२ १ १ १ र
र्वधौ२। ऊवायि। ऊवा२यि। माता२। मदेषुस

२ १ १ १
र्वधौ२। ऊवायि। ऊवा२यि। आसा२३यि। द्दो

२ ५र र २ १र २ ३ १ १ १ १
२वा२३४औद्दोवा। अग्निराऊता२३४५ः(३) ॥ ७* ॥[१३]१७

ससुन्वे—इति-प्रगाथात्मकं द्वितीयं सूक्तम्,

तत्र, प्रथमा।

१ २ ३ १र २र ३ २ ३ १ २ १ १र २र
ससुन्वेयोवमूनांयोरायामानेतायइडानाम्।

२ ३ १ २ ३ २
सोमोयस्सुक्षितीनाम्॥ १ † ॥

"सः" सोमः "सुन्वे" अभिषुवे ऋत्विग्भिः, यः सोमः वसूनां धनानाम् "आनेता", यश्च "रायां" रान्ति प्रयच्छन्ति चौरादिकमिति रायो गावः तेषा मानेता, यश्च "इडानाम्" अन्नानाञ्च, यश्च सोमः "सुक्षितीनां" सुनिवासानां शोभन-मनुष्य-युक्तानां गृहाणाम् आनेता विद्यते, सोऽभिषुतोऽभूदिति ॥ १ ॥

* ऊ० गा० १..प्र० २ख० ७गा०।

† ऋ० सा० ६, २, ४, ५ (२भा० २३३पृ०)=ऋ० वे० ७, ५, १९, १।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीया।

१ २ ३ २ ३ २ ३ १ २ ३१ ३ १ २ ३ १ ३ १ २
यस्यतइन्द्रःपिबाद्यस्यमरुतोयस्यवार्यमणाभगः।

१ २र ३ १र २र ३ १ २ ३ २ ३ १ २ ३ २
आयेनमित्रावरुणाकरामहएन्द्रमवसेमहे ॥ २ ॥ १८

हे सोम! "यस्य" प्रसिद्धस्य "ते" तव रसम् "इन्द्रः" "पिबात्" पिबति [ पा पाने (भ्वा० प०), लेटयड़ागमः ] "यस्य" यञ्च सोमं "मरुतः" पिबन्ति, "वा" अपिच "अर्यमणा"† एतन्नामकेन देवेन सह "भगः"‡ देवः "यस्य" यं सोमं पिबति, "येन" सोमेन "मित्रावरुणा"¶ मित्रावरुणौ वयम् "आ करामहे" अभिमुखीकुर्म्महे। तथा "महे" महते "अवसे" रक्षणाय येन च सोमेन "इन्द्रम्" अभिमुखीकुर्महे, तं त्वाम-भिषुणोमीत्यर्थः ॥ २ ॥ १८

१ २ १२र २ १
॥ दीर्घम् ॥ सास्। त्वेयोवसू२३नाम्। योरा२

१ २र १ २ १ २ १ २
यामा२। नेतायइडा२३ज्ञाम्। सो२३माः। यःसुचि

---

* ऋ० वे० ७, ५, १९, ४।

† सुपांसुलुगित्याले (७, १, ३९) रूपम्।

‡ "भगो व्याख्यातः (३, १६)। तस्य कालः प्रागुत्सर्पणात् तस्यैषा भवति— * * *। अन्धो भग इत्याहुरनुत्सृप्तो न दृश्यते। प्राशित्रं मस्याक्षिणी निर्जघानेति च ब्राह्मणं जनं गच्छतीति वा जनं गच्छत्यादित्य उदयेन"—इति निरु० द० ६, १३-१४।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ ५ ५ १ १ १
तार३४यिनो६हायि ॥(१) सोमाः । यःसुचितार ३ यि
२ १ १ र १ २ १
नाम् । यास्वा२ताई२ । द्रःपिबाद्यस्यमरू२३ताः । या
१ र १ ० १ २
स्वा२ताई२ । द्रःपिबाद्यस्यमरू२३ताः । या२ ३ स्वा ।
१र २ १र ५ ५ १ २ १र र
वार्य्यमणाभा २ ३ ४गो६हायि ॥(२) यास्वा । वार्यमणा
२ १ १ १र र २ १र २
भा२३गाः । आये२नामी२ । त्वावरुणाकरामा२३हा
१ १ र र १र २ १
यि । आये२नामी२ । त्वावरुणाकरामा२३हायि । आ
२ १ २र १ ५ ५
२३यिन्द्राम् । अवसेमा२३४वो६हायि(३) ॥ १९* ॥ [१]

१ १ २ ४ २ ३ ५ १र १
॥ सफम् ॥ ससुन्वे३यः । वासू२३४नाम् । योरा
र १ २ २ २ ५ १र
या२म् । आनायिता३या३ः । इडा३२३ ४ नाम् । सो
१ २ ४ २ ५
नाः । याःसू३क्षी३ । ता३४५ुयिनो६हायि(१) ॥१४†॥[२]१८

* ऊ० गा० ३प्र० २ख० ११सा० ।

† ऊ० गा० ११प्र० १ख० १४सा० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



तंवइति-तृचात्मकं तृतीयं सूक्तम् ;

तत्र, प्रथमा ।

१ २  २ १२  ३ २३ १२
तंवःसखायोमदायपुनानमभिगायत ।
२ ३ १२३ १ २  ३ १ २
शिशुन्नहव्यैःस्वदयन्तगूर्त्तिभिः ॥ १ * ॥

हे "सखायः" ऋत्विजः ! "वः" यूयं "मदाय" देवानां मदार्थं "पुनानं" पूयमानं तं सोमम् "अभि गायत" अभिष्टुत । "तम्" इमं सोमं "शिशुं न" शिशुमिव अलङ्कारैः चीरादिभिश्च स्वादू-कुर्वन्ति, तद्वत् "हव्यैः" हविर्भिः मिश्रणैः "गूर्त्तिभिः" स्तुति-भिश्च "स्वदयन्त" स्वादूकुर्वन्ति ॥ १ ॥

अथ द्वितीया ।

२३१२ ३ २ ३१ २  ३ १ २
संवत्सइवमातृभिरिन्दुर्हिन्वानोअज्यते ।
३ १२ १२३ २ ३ १२
देवावीर्मदोमतिभिःपरिष्कृतः ॥ २ † ॥

"हिन्वानः" प्रेर्यमाणः "इन्दुः" सोमः वसतीवरीभिः "समज्यते" सम्यक् सिक्तो भवति ‡ । तत्र दृष्टान्तः—"वत्स-

---

* ऋ० आ० ६, १, १, ४ (२भा० १०८पृ०) = ऋ० वे० ७, ५, ८, १ ।

† ऋ० वे० ७, ५. ८, १ ।

‡ 'इन्दुः हिन्वानः याप्यमानः, अज्यते अज वंपते मनीषिभिः'—इति नि०



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



इव" वस्त्रो यथा "मातृभिः"* गोभिः समक्तो भवति, तद्वत्। कीदृशः? "देवावीः" देवानां रक्षकः, "मदः" मदकरः "मतिभिः" स्तुतिभिः "परिष्कृतः" अलङ्कृतः [ भूषणार्थे "सम्पर्युपेभ्यः (६, १, १३७)"—इति सुड़ागमः, "परिनिविभ्यः (८,३,७०)"—इति सुटः षत्वम् ॥ २ ॥

अथ तृतीया।

१ १र २र ३ १ २ ३ १र २र ३ १ २
अयन्दक्षायसाधनोयꣳशर्धायवीतये।

३ २ ३ २ ३ १ २ ३ २
अयन्देवेभ्योमधुमत्तरःसुतः ॥ ३ † ॥ १९

"अयं" सोमः "दक्षाय" बलाय वर्द्धनाय वा "साधनः" साधयिता भवति, तथा "अयं" सोमः "शर्द्धाय" बलाय "वीतये" देवानां भक्षणार्थं च भवति, "सुतः" अभिषुतः, "अयं" सोमः "देवेभ्यः" इन्द्रादिभ्यः "मधुमत्तरः" अतिशयेन माधुर्य-युक्तो भवति अत्यन्तं मदकरो भवतीति वा ॥ ३ ॥ १९

२ २ ५ २
॥ कार्णश्रवसम् ॥ तां२३४वः। सा२३४खा। सा२

५ २र १ २ १र २ र २
३४खा। योमदा२३या। पूनानम। भिगाया२३ता।

---

* 'मातृभिः—तृतीया-बहुवचनमिदं चतुर्थी-बहुवचनस्य स्थाने द्रष्टव्यम्'-इति वि०।

† ऋ० वे० ७, ५, ८, ३।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ २ १ २ ३र २ १ २ ३र २
भ्रायिघ्नुन्नह । व्यःस्वदया२३ । तगूर्त्तिभा३४३यिः ॥(१)

२ ५ २ ५ २ १र २ १
सा२३४व । त्वा२३४ई । वमातृ२३भायिः । आयिन्दु

२ र र १ २ १ २र१र १र २ २
र्च्चिन्वा । नोअज्या२३तायि । दायिवावीर्मा । दोमति

१ २ ३ २ ३ ५ ३
भा२३यिः । परिष्कृता३४३ः ॥(२) आ२३४यम् । दा२३

५ २१र २ १ २ र १र २
४क्षा । यसाधा२३नाः । आयꣳश्रद्वां । यवीता३३या

१ २र१र २र ३ २ १ २ ३ २ १
यि । आयन्देवे । भ्योमधुमाधतरःसुता३४३ः । ओ२३

४५ई । डा(३) ॥ १२ * ॥ [१]

२ र १र १ र १
॥ सुज्ञानम् ॥ तंवःसखा । योमदाया । पुनाना]

र १ २ १ र १
मा२ । भिगायता । भ्रिघ्नुन्नाद्धाद्धा२ । व्यैःस्व । दां

५र र १र २ १ १११
२या२३४औद्धोवा । तगूर्त्तिभिरे३उपा२३४५(१) ॥१०†॥[२

* ऊ७ गा० ३प० १ख० १२सा० ।

† ऊ० गा० ८प्र० १ख० १०सा० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



॥ काश्यीतम् ॥ तंवःसखा। योमदा२३या३४। पुनानमा। भिगाया२३ता३४। शिशुन्नहा। व्यैःसूदयन्तगू। तां२यि। भा२३४। औहोवा। ऊ२३४पा(१) ॥ ११ * ॥ [३] १९

सोमाःपवन्तइति-त्र्यचात्मकं चतुर्थं सूक्तम् ;

तत्र, प्रथमा।

१ २    ३१२३ १२   ३ १२

सोमाःपवन्तइन्दवोस्मभ्यङ्गातुवित्तमाः।

३ १   ३ १   २३१   २   ३२ ३२   ३ १ २

मित्राःस्वानाअरेपसःस्वाध्यःस्वर्विदः ॥ १ † ॥

"गातुवित्तमाः" अतिशयेन मार्गस्य लम्भकाः "इन्दवः" दीप्ताः "सोमाः" "पवन्ते अस्मभ्यम्" अस्मदर्थं चरन्ति आगच्छन्ति वा। कीदृशाः? "मित्राः" देवानां सखिभूताः, "स्वानाः" सुवानाः अभिषूयमाणाः "अरेपसः" पाप-रहिताः, अतएव "स्वाध्यः" शोभन-ध्यानाः "स्वर्विदः" सर्वज्ञाः स्वर्ग-प्रापका वा ॥ १ ॥

---

* ऊ० गा० ८प्र० १अ० ११सा० ।

† ऋ० सं० ९, २, १, ४=( १भा० १५९ पृ० )—ऋ० वे० ७, ५, १, ५ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीया ।

१ ३ १ २ ३ २ ३ १ २ ३ १ २
तेपूतासोविपश्चितःसोमासोदध्याशिरः ।
१ २ ३ १ २ ३ १ २ ३ १ २ ३ २ १
सूरासोनादर्शतासोजिगत्नवोध्रुवाघृते ॥ २ * ॥

"पूताः" पवित्रेण परिपूताः, "विपश्चितः" मेधाविनः, "दध्याशिरः" दध्यामिश्रणाः, "घृते" वसतीवर्याख्ये उदके "जिगत्नवः" गमन-शीलाः "ध्रुवाः" तत्र स्थैर्य्येण वर्त्तमानाः "ते" "सोमासः" सोमाः "सूरासः न" सूर्या इव "दर्शतासः" पात्रेषु सर्वैर्दर्शनीया भवन्ति† ॥ २ ॥

अथ तृतीया ।

३ २ ३ १ २ ३ १ २ ३ १ ८ २ ८ ३ २
सुषाणासोव्यद्रिभिश्चितानागोरधित्वचि ।
१ २ ३ १ २ ३ ० ३ १ २ ३ १ २
इषमस्मभ्यमभितःसमस्वरन्वसुविदः ॥ ३ ‡ ॥ २०

"गोः" अनुडुहः "अधित्वचि" अधिषवण-चर्म्मणि "चिताना" ज्ञायमाना "अद्रिभिः" ग्रावभिः विविधैः "सुष्वाणासः" स्तूयमानाः "वसुविदः" वसुनो लम्भकाः "एते" सोमाः अस्मभ्यम्

* ऋ० वे० ७, ५, ३, १ ।

† 'दर्शतासः—सर्वस्य द्रष्टारः'—इति वि० ।

‡ ऋ० वे० ७, ५, ३, १ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"इषम्" अन्नम् अभितः "समस्वरन्" सम्यक् शब्दयन्ति प्रयच्छन्तीति यावत्* ॥ ३ ॥ २०

५र र ३ १ ४ ५
॥ गौरीवितम् † ॥ सोमाः । पवा३ । तइन्दवाः ।

१ र १ १ र र २ ४
अस्मभ्यङ्गातुवित्तमा२३ः । मायितास्वाना३१२३ः । अ

१र २ ४ ५
रे५पसाः । सूवाधिया३१२३ः । सुवोवा । वा५यिदोई

५ ५र र २र २ ४ ५ १र र र
हायि ॥(१) तेपू । तासो३ । विपश्चिताः । सोमासो

र १र र २ ४ र १
दध्यागिरा२३ः । सूरासोना३१२३ । दशा५तासाः । जा

२ ४ ५ ४ ५
यिगत्नवा ३ १ २ ३ः । ध्रुवोवा । घा५र्त्तोईहायि ॥(२)

५र ३र १ ४ ५ १ र र र
सुम्रा । णासो३ । वियद्रिभायिः । चितानागोरधित्व

१ २ ४ १
चा२३यि । आयिषमस्मा३१२३ । भ्यमा५भिताः । सा

४ ४
मस्वरा३१२३न् । वसोवा । वा५यिदोईहायि(३) ॥१३‡॥[१]

---

* 'समस्वरन्— उन्मादयन्'—इति वि० ।

† "महागौरीवितम्"—इति ख० पु० पाठः ।

‡ ऊ० गा० ३प्र० २ख० १९सा० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



॥ मधुश्च्युन्निधनम् ॥ सोमाःपवन्तइन्दवा३ए। अस्म भ्यङ्गा३तुवित्तमा३ः। हा३हा। औ३हो३वा। आयिही २। मित्रास्स्वाना३अरेपसा३ः। हा३हा। औ३हो ३वा। आयिही२। स्ववाधिया३ः। हा३हायि। औ ३हो३वा। आयिही२। सुवः। वा२यिदा२३४औहो वा ॥(१) तेपूतासोविपश्चिता३ए। सोमासोदा३धाआ शिरा३ः। हा३हा। औ३हो३वा। आयिही२। सू रासोना३दार्शतासा३ः। हा३हा। औ३हो३वा। आ यिही२। जा।यिगत्नवा३ः। हा३हायि। औ३हो३वा। आयिही२। ध्रुवाः। धा२र्त्ता२३४औहोवा ॥(२) सु षाणासोवियद्रिभा३यिरे। चितानागो३राधित्वचा३। हा३हा। औ३हो३वा। आयिही२। इषमस्मा३भ्या





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५ १ र २ १
वः । एहिया । आ । अभ्यञ्जातू । वि । तमा२ः ।

१र र १र २ ४ ५ १र
एहिया२ । मित्रास्वानाआ३रे३ । पा२३४सा: । ऐ

१र र १ २ ४ २
हा२यि । एहिया२ । सुवाधियाःमू३वा३ः । वा३४५यि

५ १र१ २ ४ऽ ५ २
दो६हायि ॥(१) तेपू३१ । ता ३ सो । विपः । चा३

४ ५ १ र र ःर
यितः । एहिया । सो । मामोदधायि । आ ।

१ १र र र १र २ ४ ५
गिरा२ः । एहिया२ । सूरासोनादा३र्गो३ । ता२३४सा: ।

२र १र १ २ ४ २
ऐहा२यि । एहि या२ । जिगत्नवोभ्रू३वा३ः । घा ३

५ २ २ २ ४ऽ ५
४ ५ त्तो६हायि ॥(२) सुषा३१ । णा३सो । विय ।

२ ४ ५ १ र र र २ १
द्रा३यिभिः । एहिया । चायि । तानागोरा । धि । त्वचा

१र १ २ ४ ५
२यि । एहिया२ । इषमस्माभ्या३मा३ । आ२३४यिता: ।

२र १र १ २ २
ऐहा२यि । एहिया२ । समस्वरान्वा ३ ह्व ३ । वा ३

५
४ ५ यिदो ६ हा यि(३) ॥ १६ * ॥ [५]

---

* ऊ० गा० १५प्र० २ख० १६सू०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२र र २ १
॥ आन्धीगवम् ॥ सोमाःपवन्तआ१यिन्दावाः। अ

र २ १ १ र २ १र १र
स्माभ्यम्। गातूर३वा। ऊम्मा२१ऽ२। तमामित्रास्स्वा

१र २र १ २ १ १ १ १ १ १ २ १ २
नाअरेघसा२३४५ः। सूवा३उवा। धी२याः। स्व२३वाः।

१ २ ४ ५ २र र र र २ १र
विदा। औ३ह्रोवा॥(१) तेपूतासोविपा१श्चायिताः। सो

र २ १ १ र र २र १
मासः। दधा२३आ। ऊम्मा२१ऽ२। श्रिरःसूरासोन

२ १र २ १ १ १ १ १ २ २ १
दृशतासा२३४५ः। जायिगा३उवा। त्ना२वो। ध्रू२३

२ १ २ ४ ५ २ र र र
वाः। वृता। औ३ह्रोवा॥(२) सुष्वाणासोविया१द्रा

२ १र र र २ १
यिभायिः। चितानाः। गोरा२३धा। ऊम्मा२१ऽ२।

१र २१ २ १ २ १ १ १ १ १ १ २ १
त्वचीषमस्मभ्यमभिता२३४५ः। सामा३उवा। स्वा२रा

२ १ २ ४ ५
न्। वा२३स्व। विदा। औ३ह्रोवा। ह्रो५ई।

डा(३) ॥ १७* ॥ [६]

२र र २ १ २
॥ निषेधम् ॥ सोमाःपवन्ता३इन्दवाः। अस्माभ्य

---

* ऊ० गा० १५प्र० २ख० १७गा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ २ १ १ २ १ ४ ५ २
ङ्गा । तुविक्तमा२ः । इहा३ । मायिवा३स्खानाः । ह्वो

२ ३ १ २ १ २ १ २ १ २ ४ ५
ह्वोर३४हा । अरेपा२३साः । इहा३ । सूवा३धीयाः ।

२ १ ५ ३ २ ४ २ २ २ २ २
ह्वाहो२३४ह्वा । सुवा३र्वा५यिदा६५६ः ॥(१) तेपूतासो

१ २ १ २२१ १ २ १ १ २
वा३यिपश्चिताः । सोमासोदा । धियाश्चिरा२ः । इहा

१ २ ४ ५ २ ३ ५ १ १ २
३ । ह्वरा३सोना । हाह्वो२३४हा । दर्श्चता २ ३ साः ।

१ २ १ २ ४ ५ २ ३ ५ १ २
इहा३ । जायिगा३त्नावाः । ह्वाह्वो२३४हा । ध्रुवा३

४ २ २ २ २ २ १
धा५र्त्ता६५६यि ॥(२) सुषाणासोवा३यद्रिभायिः । चिता

२२ १ २ १ १ २ १ २ ४ ५
नागोः । अधित्वचा२यि । इहा३ । आयिषा३मास्मा ।

२ ३ ५ २ १ २ १ २ १ २ ४
ह्वाह्वो२३४हा । भ्यमभा२३यिताः । इहा३ । सामा३स्ख

५ २ ३ ५ ३ २ ४ ३ १ १ १
रान् । ह्वाह्वो२३४ह्वा । यमू३वा५यिदा६४६ः । ह्वे२३४

१
५(३) ॥ १८ * ॥ [७]

२२ २ १ २ २२ १ १
॥ क्रौञ्चाद्यम् ॥ सोमाःपवीह्वो । ताइन्दवाः । अस्म

* ऊ० गा० १५प्र० २ख० १८गा० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



भ्यङ्गा३। तूवा३यिता५मा६५६ः। मित्रास्खानीद्वो। आरेपसाः। सुवाधिया३ः। सूवा३यिर्वा५यिदा६५६ः ॥(१) तेपूतासौद्वो। वीपश्चिताः। सोमासोदा३। धात्रा३ श्चा५यिरा६५६ः। सूरासोनौद्वो। दर्शतासाः। जिग त्नवो३। ध्रूवा३घा५र्त्ता६५६यि ॥(२) सुष्वाणासौद्वो। वीयद्रिभायिः। चितानागो३ः। आधा३यित्वा५चा६५ यि। द्रुषमस्मौद्वो। भ्यामभिताः। समस्वरा३न्। वा सू३वा५यिदा६५६ः(३) ॥ १ * ॥ [८]

॥ यज्ञायज्ञीयम् ॥ सोमाऽ५ःप। वा ३ न्ता ३ इन्दा वाः। आस्मभ्यङ्गा। तूवायित्ता३माः। मित्रा २स्वा। नाआर२३र। ऋम्मायि। पा३साः। सूवाधियःसुवा२ विदाउ ॥(१) दास्तायि। पूतासोविपश्चितःसोमासोदा।

---

* ऊ० गा० १६प्र० १ख० १सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ १ २ र १र १ २ १
धा३आआ३यिराः। सूरा२सः। नदा२३र्मा। ऊम्मा

२ २ १ र ३ २ १
यि। ता३साः। जायिगत्नवोधृवार२घृताउ॥(२) तायि

२ १र र र र र २ १ २ २
सू। ष्वाणासोव्यद्रिभिश्चितानागोः। आ३धायित्वा३चा

१ १ २ १ २ २
यि। इषार्२म। स्तभ्यार३मा। ऊम्मायि। भा३यिताः।

१ ३ २ १ १ १
सामस्वरन्वसूर्२विदाउ। वा३४५(३)॥ १४ *॥ [९] २०

अथायापवेति-तृचात्मकं पञ्चमं सूक्तम्,

तत्र, प्रथमा।

२ २ ३ १ २ १र २र
अयापवापवस्वेनावसूनि

२ १ २ १ १ २ ३ १ २
मा७ंश्चत्वइन्दोसरसिप्रधन्व।

२ २ २ २ ३ २ ३ २ ३ १
ब्रध्नश्चिद्यस्यवातीनजूतिं

२ ३ १ २ ३ १ २ ३ १ २
पुरुमेधाश्चित्तकवेनरन्धात्॥ १ †॥

हे सोम! "अया" अनया "पवा" पवमानया "धारया" "एना" एनानि "वसूनि" धनानि "पवस्व" चर [पवा—

* ऊ० गा० २२प्र० १ख० १४गा०।

† ब० का० ६, १, ५, ९ (१भा० १४२ पृ०)=ऋ० वे० ७, ४, २१, २।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



पूञ् पवने ( क्र्या० प० ) "अन्येभ्योऽपि दृश्यन्ते ( ३,२,१७८ )" —इति विच् प्रत्ययः, आर्द्धधातुक-लक्षणो गुणः, "सावेकाच ( ६, १, १६८ )"—इति तृतीयाया उदात्तत्वम् ]। तथा हे "इन्दो !" त्वं "मांश्चत्वे" मन्यमानानां चातके "सरसि" उदके वसतीवर्याख्ये "प्रधन्व" प्रगच्छ। "यस्य" सोमस्य शोधने सति "ब्रध्नश्चित्" सर्वेषां प्रज्ञापको मूलभूतो वा आदित्योऽपि "वातः न" वायुरिव "जूतिं" वेगं प्राप्तः सन् किञ्च "पुरुमेध-श्चित्" बहुविध-यज्ञ इन्द्रोऽपि "तकवे" [ तकतिर्गति-कर्मसु पठितः ( निघ० २, १४, ६९ ), अस्मादौणादिक उन् प्रत्ययः ] सोमं गच्छत ; मह्यं "नरं" कर्मनेतारं पुत्रं "धात्" ददातु प्रयच्छतु। स त्वं प्रधन्वेति पूर्वेण सम्बन्धः॥

"यस्य"-"अत्र"—इति पाठौ, "जूतिं"-"जूतः"—इति, "धात्"-"दात्"—इति च॥ १॥

अथ द्वितीया।

३ १ २ ३ १ २ ३ १ २ २
उतनएनापवयापव

१ २ ३ २ ३ १ २ ३ २
स्वाधिश्रुतेश्रवाय्यस्यतीर्थे।

३ २ ३ १ २ ३ १ र २ र
षष्टिꣳसहस्रानैगुतोवसूनि

२ २उ ३ १ २ ३ १ २
वृत्तन्नपक्वन्धूनवद्रणाय॥ २*॥

---

* ऋ० वे० ७, ४, २१, २।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



हे सोम! "उत" अपिच "अवाय्यस्य" सर्वैः अवनीयस्य तव "स्रुते" प्रसिद्धे [ यद्वा, षष्ठ्यर्थे चतुर्थी स्रुत-शब्दस्य ] "तीर्थे" स्थाने "नः" अस्माकं स्वभूते यज्ञे "एना" अनया "पवया" पूयमानया "धारया" अधिकं "पवस्व" चर। "नैगुतः" नीचीनं गन्तवे* [ न शब्दायन्त इति निगुतः शत्रवः, तेषां हन्तृत्वेन सम्बन्धी ] सोऽयं सोमः "षष्टिं" षष्टि-सङ्ख्याकानि "सहस्रा" सहस्राणि "वसूनि" धनानि "रणाय" शत्रूणां जयार्थं धनवत् अस्मानकम्पयत् प्रायच्छदिति यावत्। कथमिव? "वृक्षं न पक्वं" पक्व-फलं वृक्षं यथा कम्पयति फलार्थी, तद्वत् ॥२॥

अथ तृतीया।

२ ३ १ २ ३ २ ३ १ २ ३ १र
महीमे अस्यवृषनामशूषे
२र ३ १ २ ३ १ २
माᳬस्वत्वेवापृशनेवावधत्रे।
१ २ ३ १ २ ३ २ ३ २ ३
अस्वापयन्निगुतःस्नेहयच्चापा
२ ३ २३ १ २ ३ २
मित्राᳬअपाचितोअचेतः॥ २ † ॥ २१

"मही" महते प्रभूते "वृषनाम" [सुपां सुलुगिति ( ७, १. ३९) सुपो लुक्] वृषनामनी वर्षण-नमने, शराणां वर्षणं, शत्रूणां नम-

---

* 'नैगुतः—निगुतानां नितरां गोपितानाम्'—इति वि०।

† ऋ० वे० ७, ४, २१, ४।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



नम्, "इमे एते द्वे कर्मणी अस्य" सोमस्य "शूषे" सुखकरे* भवतः ; ते कर्मणी "मांश्चत्वे" [अश्वनामैतत् (निघ० १,१४,१८)] अश्वैः क्रियमाणे युद्धे† तत्साध्यत्वाद् युद्धमिह गृह्यते ] "वा" अपिवा "पृशने" स्पर्शन साध्ये बाहु-युद्धे "वधत्रे" शत्रूणां हिंसन-साधने भवतः । सऽयं "निगुतः" नीचैः शब्दायमानान् शत्रून् "अस्वापयत्" असूषुपत् अवधीदित्यर्थः । किञ्च "स्नेहयत्" प्राद्रवयत् सङ्ग्रामाच्छत्रून् । अथ प्रत्यक्षः । हे सोम ! स त्वम् "असिन्वान्" शत्रून् "अपाचेत" अपगमय । तथाच "अपाचितः" अग्नि-चयन मकुर्वतः नास्तिकांश्च‡ "इतः" अस्मच्छकाशात् अपाचेत अपगमय [अञ्चतिर्गतिकर्मा (भ्वा० प०)] ॥ ३ ॥ २१

२र १ २ १ २ १ ४
॥ औष्ठायम् ॥ औहोहायि । अयोहायि । पवा

र र २१ २ ऽ २ ० २ ऽ १
वस्वैनाक्षत्र२३नी । औ३होयि । इहा । ई३या । मा

१ र २१ २ ऽ २ ३ २
स्त्वइन्द्रोसरसिप्रधार२३न्वा । औ३हायि । इहा । ई३

२ र १ र २१ २ ऽ २
या । मा३स्त्वइन्द्रोसरसिप्रधार२३न्वा । औ ३ हायि ।

---

* 'शूषे—सुखप्रापकाः अथवा शूषे शोषणाय'—इति वि० ।

† 'मांश्चत्वे—संहननीयत्वाय'—इति वि० ।

‡ 'अपाचितः—पतिता चेतना भवन्ति' -इति वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



इहा । ई३या । अग्नस्विद्यस्यवातोनजूर२३तीम् । औ३
होयि । इहा । ई३या । पुरूमेधाश्चित्तकवेनरा२३धा
त् । औ३होयि । इहा । ई२ । या२३४ । औहोवा ॥(१)
औहोहायि । उतोहायि । नएनापवयापवा२३स्वा । औ
३होयि । इहा । ई३या । अधिश्रुतेश्रवायियस्यतार२प
यिर्थायि । औ३होयि । इहा । ई३या । षष्ठिꣳसह
स्रानैगुतोवस्व२३नी । औ३होयि । इहा । ई३या । वृ
त्रपक्रन्धूनवद्रणा२३या । औ३होयि । इहा । ई२ ।
या२३४औहोवा ॥(२) औहोहायि । मद्दोहायि । मे
अस्यवृषनामस्तु२३षायि । औ३हायि । इहा । ई३या ३
माꣳश्चत्विवापृश्ननेवावधार३चायि । औ३हायि । इहा ।
ई३या । अस्यापयन्निगुतस्नेह्या२३त्वा । औ ३ होयि ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ २ ५ २ १ र र र र २ १ २
इहा । इ३या । अपामित्राᳬअपाचितोअचा२३यिताः ।

५ २ २ २ १ ३ ५र र
औ३होयि । इहा । इ२ । या २३४ । औहोवा ।

१ १र ३ २
ए३ । दौदिह्नो१(३) ॥ १७ * ॥ [१]

१र २र ३र २ १ २ २
॥ इहवद्वासिष्ठम् ॥ औहोवाहा ३ होयि । इहा ।

१र २ १ र २ ३ ४ ५ २र १ २
अयापवा । पवस्वै । नावसूना । माᳬस्वत्वआयि । दो

१ १ ३ ४ ५ २ १ २ १ र २ ३ ४
३स्वर । सिप्रधन्वा । अभ्रस्विद्या । स्याइवा । तोनजू

५ २ १र २ १ २ २ ४
तीम् । पुरुमेधाः । चित्तक । वा३४३यि । ना३रा५

२ १ २ १ २ ३ ४ ५ २
न्वा६५६त् ॥(१) उतनए । ना३पव । यापवस्वा । अ

१ २ १र २ ३ ४ ५ २ १
धिश्रुतायि । श्रवायि । यस्यतायिर्थायि । षष्ठिᳬसद्दा ।

२ १ र २ ३ ४ ५ २ २ १र २
स्वा३नैगु । तोवेसूनी । बृहन्नपा । क्धून । वा३४३त् ।

२ ४ २ १ र र २ १ २ २
रा३णा५या६५६ ॥ (२) मह्नीमित्रा । स्या३वृष । नाम

४ ५ २र १ र २ १ र २ ३ ४ ५ २
अूषायि । माᳬस्वत्वेवा । पुम्रने । वावधन्वायि । अ

---

* ऊ० गा० ३प्र० २ख० १७बा० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१र २ १ २ ३ ४ ५ १र २र ३र २ १
स्वापयात्। निगुतः। स्ने हयच्चा। औहोवाहाइचोयि।
१ २ १र २ १र २ २ ४
इहा। अपामिन्वाए। अपाचि। तो२४३। आ२चा

५यिता६५६:(३) ॥ १० * ॥ [२]

१ र १ १ २र र १
॥ वार्त्रतुरम् ॥ अयापवोवा पावस्वैना। वसू२३
२ १र र २ १ २ १ २ १
नी। माएश्चत्वइन्दोसरसि। प्रधा२३न्वा। ब्रधश्चिद
२ १ १ ३ ह १ २ १
स्य। वा। तोनाजू२३४तोम्। पुरु। मायि। धाश्चि
१ ४ २ ५ २
त्ताका२३। वा२३यिना३। रो२३४५धोई हायि ॥(१) उत
१ २ १ २ र १ २ १ र र
नओवा। नापवया। पवा२३स्वा। अधिश्रुतेश्रवायि
२ १ २ १ २ १ २र १र २
य। स्यता२३यिर्थायि। षष्टिएसहस्रानै। गू। नोवा
२ ५ १ २ १ १ ४
स्२३४नी। वृनाम्। ना। पाकन्धूना२३। वा२३द्रा
२ ५ २ र १ २ १ २र
३। णा२३४५योई हायि ॥(२) महीमओवा। स्यात्रृषना।
१ २ १र र र र र १ २
मधूर२३षायि। माएश्चत्वेवापृश्नेवा। वधा२३त्रायि।

---

* ऋ० गा० ८प्र० २ख० १०गा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ र २　१ २　१　२ ३　५　१
अस्नापयन्त्रिगुतः। स्रे। हायार३४चा। अपा। मा

२ १　१ ४　२
यि। चा२अपाचार३यि। तो२३आ३। चा३४५यितो

५
६हायि(३)॥ १* ॥ [३] २१

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य सप्तमस्याध्यायस्य

षष्ठः खण्डः ॥ ६ ॥

---

अथ सप्तम-खण्डे—

प्रथमतृचे†, प्रथमा।

२ ३ २ ३ १ २ ३ २ ३ २ ३ १ २　३क २र
अग्ने त्वन्नो अन्तमउतत्राताशिवोभुवोवरूथ्यः ॥ १ ॥ ‡

हे "अग्ने!" "वरूथ्यः" वरणीयः सम्भजनीयः। यद्वा, वरूथैः परिधिभिर्वृतः त्वं "नः" अस्माकम् "अन्तमः" अन्तिकतमः "भुवः" भव। "उत" अपिच "त्राता" रक्षकः "शिवः" सुखकरश्च भव॥

"भुवः"-"भव"—इति पाठौ ॥ १ ॥

---

* ऊ० गा० १३प्र० १ख० १सा०।

† 'दज्ञापश्चिषमग्निष्टोभसाम'—इति वि०।

‡ छ० आ० ५, १, १, २ (१भा० ८९८ पृ०)=ऋ० वे० ४, १, १६, १।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीया।

१ २ ३ १र २र ३ १ २ ३ १ २ ३ १ २
वसुरग्निर्वसुश्रवा अच्छानक्षिद्युमत्तमो रयिन्दाः ॥ २* ॥

"वसुः" वासकः "अग्निः" सर्वेषामग्रणीः "वसुश्रवाः" व्याप्तान्तस्त्वं † "अच्छ" आभिमुख्येन "नक्षि" अस्मान् व्याप्नुहि। "द्युमत्तमः" अतिशयेन दीप्तिमान् त्वं "रयिं" पश्वादिलक्षणं धनं "दाः" अस्मभ्यं देहि ‡॥

"द्युमत्तमः"-"द्युमत्तमम्"—इति पाठौ ॥ २ ॥

अथ तृतीया।

१ २ ३ १ २ ३ १ २ ३ १ २
तन्त्वा शोचिष्ठ दीदिवः सुम्नाय नूनमीमहे सखिभ्यः ॥३¶॥ २२

हे "शोचिष्ठ" अतिशयेन शोचिष्मन्! "दीदिव" स्वतेजोभिर्दीप्ताग्ने! "तं" "त्वा" त्वां "सुम्नाय" सुखाय [सुम्नमिति सुखनामैतत् (निघ० ३, ६, १७)] तदर्थं "सखिभ्यः" समानख्यातिभ्यः पुत्रेभ्य § सुखार्थंच "नूनम्" "ईमहे" याचामहे ॥ ३ ॥ २२

* ऋ० वे० ४, १, १६, २।

† 'वसुश्रवाः—अन्नेन धनेन च सम्पन्नः'—इति वि०।

‡ 'रयिन्दाः—रयिं धनं ददातीति रयिन्दाः,—इति वि०।

¶ ऋ० वे० ४, १, १६, ४।

§ 'सखिभ्यः-ऋत्विग्भ्यः'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ २ १ १ १
॥ गूहम्॥ ओग्नायि । त्वन्नोर२३आ । ऊम्मा २ ३ ।
५ १ १ २र१र २१र० ३ १ १ १ १ २ १र
तार३४माः । उतत्रातान्निवोभुवा२३४५ः । श्निवोभुवार
४ ५ ४ ५ १ २ १
३ः । वरोवा । था५योऽहायि॥(१) वाम्हः । अ । ग्ना
२ १ ५ १र२ १
यिर्वा२३सू । ऊम्मा२३ । आ२३४वाः । अच्छानक्षिद्युम
२३ १ १ १ १ २ १ ४ ५ ४
त्तमा२३४५ः । द्युमत्तमा२३ः । रयोवा । आ५यिन्दो
५ १ २ १र २ १
६हायि॥(२) तान्त्वा । शो । चायिष्ठा२३री । ऊम्मा
५ २१र २र१र२ ३ १ १ १ १ २
२३यि । दी२३४वाः । सुम्नायनूनमीमहा२३४५यि । न
.१र ४ ५ ४ ५
मीमहा२३यि । सखोवा । भा५योऽहायि(३) ॥१८*॥[१]
३ २ र ५
सत्रासाहीयम्॥ अग्ना३४यि । त्वन्नोअन्तमः । ओ
५ २ १ १ १ २ १ ऽ
ईवा । उतत्रा२ता । ग्ना२यिवो । भुर३वाः । वरो
२र ३र २ १ ५ ५ ३ २
३हो । वाहा३४३यि । था२३४योऽहायि॥(१) वह्व३४ः ।
र ५ ५ २ १र १ १
अग्निर्वसुश्रवाः । ओईवा । अच्छाना२हायि । द्यू२मा ।

* ऊ० गा० ३प्र० २ख० १८गा० ।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ १ ऽ २र ९र २ १ ५
ना२३माः । रयौ३ह्वों । वाहा३४३यि । आ२३४यिन्द्रो

५ ३ २ र र ५ र
ई हायि ॥(२) तन्वा३४ । ओचिष्टदीदिवः । ओई वा ।

२ १र १ १ २ १ ऽ १र
सुम्नाया२नू । ना२माथि । मा२३हायि । सखौ३ह्वों ।

२र २
वाहा३४३यिईहायि(३) ॥ १५ * ॥ [२] २२

अथ द्वितीय-तृचे† —

प्रथमा ।

२ ३उ ३ १ २ ३ १ २ ३ १ २ ३ २
इमानुकम्भुवनासीषधेमेन्द्रश्चविश्वेचदेवाः ॥ १‡ ॥

"इमा" इमानि परिदृश्यमानानि भुवनानि "नु" क्षिप्रं "सीषधेम" साधयेम वशीकरवाम । "कम्"—इति पूरकः [यद्वा, इमानि सर्वाणि भूतजातानि अस्मभ्यं कं सुखं सीषधेम साधयन्तु ; पुरुषव्यत्ययः (३, १, ८५) ] । "इन्द्रश्च" "विश्वे" सर्वे अन्ये "देवाः च" स्तुत्या प्रीत्या "इमम्" अर्थम् साधयन्तु ॥

"सीषधेम"-"सीषधाम"—इति पाठौ ॥ १ ॥

---

* ऊ० गा० ११प्र० २ख० १५सा० ।

† 'गौतमस्य अद्भ्युः'—इति वि० । सामैतद्रुगामस्य ।

‡ ऋ० शा० ५, २, २, ६ (१भा० ६०२पृ०)=ऋ० वे० ८, ८, १५, १ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीया।

यज्ञञ्चनस्तन्वञ्चप्रजाञ्चादित्यैरिन्द्रःसहसीषधातु ॥२*॥

"नः" अस्माकं "यज्ञं" ज्योतिष्टोमादिकञ्च यागं "तन्वं" शरीरञ्च "प्रजां" पुत्रादिकाञ्च "आदित्यैः" अदिति-पुत्रैः अन्यै-र्देवैः सह वर्त्तमानः "इन्द्रः" "सीषधातु" साधयतु ॥

"सहसीषधातु"-"सहचीक्षपानि"—इति पाठौ ॥ ९ ॥

अथ तृतीया।

आदित्यैरिन्द्रःसगणोमरुद्भिरस्मभ्यम्भेषजाकरत् ॥३†॥२३

"आदित्यैः" अदिति-पुत्रैः मित्रादिभिः "मरुद्भिः" च "सगणः" गण-सहितः "इन्द्रः" "अस्माकम्" अस्मभ्यम् "भेष-जानि" औषधानि "करत्" करोतु ॥

"भेषजाकरत्"-"भूत्ववितातनूनाम्"—इति पाठौ ॥३॥२३

* ऋ० वे० ८, ८, १५, २।

† ऋ० वे० ८, ८, १५, ३।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथैकर्गात्मकं सूक्तं प्रवोर्चोपेति, चतुरक्षरात्मिका*
कात्विदियमृग्रूपा ; यथा बह्वृचानां
"भद्रन्नोअपिवातयमनः"—इत्येक
एव पाद ऋगात्मकश्च
तद्वत् † ॥

१ २र
प्रवोर्चोप ॥ १ ॥ २४

हे ऋत्विग्यजमानाः ! "वः" यूयम् "उप" समीपे "प्रार्च्च"
प्रकर्षेणेन्द्रं पूजयत ॥ १ ॥ २४

२१ र ७
॥ उद्वंशपुत्रम् ॥ प्रवाः । आयिन्द्रायवृत्रहान्तमा

२ १ र र १ २ २ १ २
२३या । वायिप्रायगाथङ्गा१या२ता । याञ्जुजीवा३ ।

२ १ २ १
उप् । षाऽ२तोऽ३ऽ५हायि ॥(१) अर्चा । ताअर्क्कमरु

---

* वस्तुतस्तु "प्रवोर्चोप"—इति नैषा चतुरक्षरात्मिका ऋक् प्रत्युत छन्दआर्चिक-श्रुतायाः "प्रवइन्द्रायवृत्रहन्तमाय (५, १, १० । १भा० ८९५पृ० )"—इत्यस्याः प्रतीकं "प्रवः"—इति, किञ्च "अर्चन्त्यर्कम्मरुतःस्वर्का (५,०,१,९ । १भा० ८९४पृ० )"—इत्यस्याः प्रतीकम् "अर्च"—इति. तथैव "उपप्रक्षेमधुमतिक्षियन्तः ( ५, १, १, ८ । १भा० ८९३पृ० )"—इत्यस्याः प्रतीकम् "उप"—इति, एवमेव सम्पन्नं "प्रवोर्चोप"—इति, ऊहगान-तृतीयप्रपाठकान्तिमसुद्वंश पुत्रनाम ( १००पृ० ) सामैवास वञ्चमान मन्यथा तस्य मूलीभूत-ऋचस्यालाभ एव सर्वथा स्यात् । अन्यत्राप्यदर्शनात् ।

† 'उद्वंशपुत्रोऽन्त्यावाकसाम । "प्रवइन्द्राय"—"अर्चन्त्यर्कम्"—"उपप्रक्षे"—एषमृचश्छन्दसिका-भाष्ये उक्तार्थः'—इति वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



७ २ १ र २ २ १ १ ऽ
ताःसुवार३र्काः। आस्तोभतिश्रुतो१यू३वा। सआ३उ
२ २ १ २ १
वा३। उप्। आ॑ऽ२यिन्द्रो३५द्दायि ॥(२) उपा। प्रा
र ७ २ १ र २२ २
स्रोमधुमतायिच्चिया २ ३ न्ताः। पूष्येमरयिन्धा१इम्मा३द्दा
१ ऽ २ २ १
यि। तआ ३ उवा ३। उप्। आ॑ऽ २ यिन्द्रो ३ ५
२
द्दायि(३) ॥ १९ *॥ [१] २४

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य सप्तमस्याध्यायस्य
सप्तमः खण्डः † ॥ ७॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थ-महेश्वरः॥ ७॥

॥ इति चतुर्थस्यार्द्धः प्रपाठकः॥

इति श्रीमद्राजाधिराज-परमेश्वर-वैदिकमार्गप्रवर्त्तक-श्रीवीर-
बुक्क-भूपाल-साम्राज्य-धुरन्धरेण सायणाचार्य्येण
विरचिते माधवीये सामवेदार्थ-प्रकाशे
उत्तराग्रन्थे सप्तमोऽध्यायः‡ ॥ ७॥

---

* ऊ० गा० ६प्र० २अ० १९सा०।

† 'षष्ठखण्डः समाप्तः। इष्ट्वा(?)खण्डः समाप्तः'—इति वि०।

‡ 'इति चतुर्थप्रपाठकस्य प्रथमार्द्धः'—इति वि० पदकारादिसम्मतग्रन्थसम्मतश्च।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थ-महेश्वरम् ॥ ८ ॥

॥ अथाष्टमाध्याय आरभ्यते* ॥

तत्र,

प्रकाव्यमिति प्रथमे खण्डे—

द्वादशर्चे† प्रथमे सूक्ते—

प्रथमा ।

१ २र ३ १ २ ३ २
प्रकाव्यमुशनेवब्रुवानो

३ २ ३ १ ३ १ २
देवोदेवानाञ्जनिमाविवक्ति ।

१ २ २ १ २ ३ २
महिव्रतःशुचिबन्धुःपावकः

३ १ २ ३ २ ३र २र ३ १ २
पदावराहोअभ्येतिरेभन् ॥ १ ‡ ॥

"उशनेव" एतन्नामक ऋषिरिव "काव्यं" कवि-कर्म स्तोत्रं "ब्रुवाणः" उच्चारयन् "देवः" स्तोता "देवानाम्" इन्द्रादीनां "जनिमा" जन्मानि "प्र विवक्ति" प्रकर्षेण ब्रवीति [ वच परि-

---

* 'इदानीं छन्दोमा वक्तव्याः । ते च त्रयः व्यूढच्छन्दस्कानुष्टुभः प्रतिपदो भवन्ति त्रिष्टुभां लोकजगत्यः जगतीनां गायत्र्यः । ब्राह्मणेन ऋषय उक्ताः'—इति वि० ।

† 'प्रकाव्यमुशनेव ब्रुवाण इति द्वादशर्चो भवति । चतुर्विंशस्तोमिकश्छन्दसङ्गः' —इति वि० । द्वादशार्चः खण्ड इति यावत् ।

‡ छ० आ० ६, १, ४, २ ( १ भा० १०९४० )=ऋ० वे० ७, ४, १२, २ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



भाषणे (अदा० प०) व्यत्ययेन विकरणस्य श्लुः (२, १, ३९), "बहुलञ्छन्दसि (७, ४, ७८)"—इत्यभ्यासस्येत्वम्], "महिव्रतः" प्रभूतकर्म्मा, "शुचिबन्धुः" [बध्नन्ति प्रचूनिति बन्धूनि तेजांसि बलानि वा] दीप्ततेजस्कः, "पावकः" पापानां शोधकः, "वराहः" वरञ्च तदहश्च वराहः ["राजाहः सखिभ्यष्टच् (५, ४, ९१)"—इति टच् समासान्तः; तस्मिन्नहनि अभिभूयमानत्वेन तद्वान्; अर्श आदित्वान्मत्वर्थीयोऽच् (५, २, १२७)] तादृशः सोमः "रेभन्" रेभनं शब्दं कुर्वन्, "पदा" पदानि पात्राणि "अभ्येति" अभिगच्छति; यद्वा, यथा कश्चन वराहः पदा पादेन भूमिं विक्रममाणः शब्दं करोति तद्वत्॥ १॥

अथ द्वितीया।

२ ३    २ ३ १ २ ३ २उ ३<br>
प्रहꣳसासस्तृपला*वग्नुमच्छा†

२उ ३ १ २<br>
मादस्तंवृषगणाअयासुः।

३   २ ३   १ २   ३ १ २<br>
आङ्गोषिण‡म्पवमानꣳसखायो

३ १ ० ३ १२   १२    ३ २<br>
दुर्मर्षंवाणम्प्रवदन्तिसाकम्¶॥ २ §॥

---

* "तृपलं"—इति<br>
† "मन्युम्"—इति<br>
‡ "आङ्गूष्य"—इति<br>
¶ "साकं प्रवदन्ति वाणम्"—इति च<br>
(*, †, ‡, ¶) छ०-पाठाः।

§ ऋ० वे० ७, ४, ११, २।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"हंसासः" शत्रुभिर्हन्यमाना हंसाइव आचरन्तो वा* "वृषगणाः" एतन्नामका ऋषयः† "अमात्" शत्रूणां बलात् बाधिताः सन्तः "तूपला" तूपलं [ सुपां सुलुगिति सोराकारादेशः (७, १, ३९)। तूपल-शब्दः क्षिप्र-वाची, तदुक्तं यास्केन —"तूप्रप्रहारी क्षिप्रप्रहारी (निरु० नै० ५, १२)"—इति ] क्षिप्रं प्रहारिणं‡ "वग्नुम्" अभिषव-शब्दम्¶ "अच्छ" अभिलक्ष्य§ "अस्तं" यज्ञगृहं "प्रायासुः" प्रायासिषुः प्रगच्छन्ति। ततः "सखायः" स्तुत्य-स्तोतृत्व-लक्षणेन सम्बन्धेन सखिभूताः स्तोतारः "अङ्गोषिणं" सर्वैरभिगन्तव्यं‖ [ यद्वा, अङ्गोषिणं स्तोत्रार्हं ], "दुर्मर्षं" शत्रुभिः दुर्धरं दुःसहम्; एवंविधं "पवमानं" सोमम् उद्दिश्य "वाणं" वाद्यविशेषं** "साकं" सहैव "प्र वदन्ति" प्रवादयन्ति तदुपलक्षितं गानं कुर्वन्तीत्यर्थः॥ २॥

---

* 'हंसासः—आदित्य-रश्मयः'—इति वि०।

† 'वृषगणाः—सेक्तारः सङ्घाताः'—इति वि०।

‡ तूपला—लोक-द्वयस्य पालकाः'—इति वि०। "सोमो वेन्द्रो वा"—इति निरु० नै० ५, १२।

¶ 'वग्नुं—वचनम्'—इति वि०।

§ 'अच्छ—आप्तुम्'—इति वि०।

‖ 'अङ्गोषिणम्—उष दाने दीप्तौ च * * * दीप्तं सोमं'—इति वि०।

** 'वाणं—वादित्र-विशेषम्, यथा वाणस्य शततन्त्रीकस्य जायते शब्दः तद्वत् सोमस्य जायमानस्य महान् शब्दः'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ तृतीया।

१ २          ३ १ २ ३ २उ
सयोजत*उरुगायस्यजूतिं

२   १ २          ३ १र  २र
वृथाक्रीडन्तम्मिमतेनगावः।

१    १ २    ३ १ १ ३
परीणसङ्कृणुतेतिग्मशृङ्गो

२ ३  २ ३ १ २ ३ १ २  १ २
दिवाहरिर्द्दृदृशेनक्तमृज्रः॥ २ † ॥

"सः" सोमः "उरुगायस्य" बहुभिः स्तुत्यस्य आत्मनः‡ "जूतिं" गतिं¶ "योजते" युनक्ति अन्तरिक्षे प्रेरयति। "वृथा क्रीडन्तम्" अनायासेन विहरन्तं गच्छन्तं सोमं "गावः" अन्धो गन्तारः "न मिमते" न परिच्छिन्दन्ति मातुं न शक्नुवन्तीत्यर्थः। किञ्च "तिग्मशृङ्गः" [ शृणवन्ति हिंसन्ति तमांसीति शृङ्गाणि तेजांसि ] तीक्ष्ण-तेजस्कः "परीणसं" [ बहुनामैतत् ( निघ० ३, १, ७ ) बहुविधं तेजः§ "कृणुते" करोतु अन्तरिक्षे वर्त्तमानो यः सोमः "दिवा" अहनि "हरिः" हरितवर्णः "ददृशे" दृश्यते

---

* "सरंहत"—इति ऋ० पाठः।

† ऋ० वे० ७, ४, १२, ३।

‡ 'उरुगायस्य—बहुविधस्य गानस्य'—इति वि०।

¶ 'जूतिं—प्रतिशब्दम्'—इति वि०।

§ 'परीणसं—परि समन्ताद् गावो नीयन्ते परीणसः, तम्'—इति वि०।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



न प्रकाशत इत्यर्थः, "नक्तं" रात्रौ तु "ऋज्रः" ऋजुगामी* विसृष्टः प्रकाशयुक्तो दृश्यते†॥ [ददृशे—दृशेः कर्मणि लिटि रूपम्॥ ३॥

अथ चतुर्थी।

२ ५ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
प्रस्वानासोरथाइवार्वन्तोनश्रवस्यवः।
१ २ ३ १ २
सोमासोरायेअक्रमुः॥ ४‡॥

"स्वानासः" अभिषव वेलाया मुपरवेषु¶ शब्दं कुर्वन्तः "सोमासः" सोमाः "रथा इव" यथा शब्दं कुर्वन्तो रथाः तथा, "अर्वन्तो न" यथा शब्दं कुर्वन्तो अश्वाः तथा, "श्रवस्यवः" अन्नुष्य: सकाशादन्नमिच्छन्तो "राये" यजमानानां धनाय "प्राक्रमुः" प्रगच्छन्ति॥ ४॥

अथ पञ्चमी।

३ २ ३ १ २ ३ १२ ९२
हिन्वानासोरथाइवदधन्विरेगभस्त्योः।
१ २ ३ १ २
भरासःकारिणामिव॥ ५ §॥

---

* 'ऋजुः—ऋ गतौ नञ्को भवति'—इति वि०।

† 'एतदुक्तं भवति—दिवाभिषिक्तः सोमो रात्रिपर्यायेषु पुनर्निषिच्यते, योऽभिषवं करोति तस्यायं दोषः सम्पद्यते'—इति वि०।

‡ ऋ० वे० ६, ७, ३४।

¶ यूपस्य गर्त्ता उपरवा उच्यन्ते। तद्विधायकञ्चैतत् कात्यायन-सूत्रम्—"दक्षिणस्याविसोऽधः प्रउगं खनत्युपरवानथ्यादि करोत्यवटवदिति (८, ४, २५)"। यथा यूपस्यावटः क्रियते तथामाप्युपरवनामकांश्चतुरो गर्त्तानखिलीकार मारभ्य परिलेखन पूर्वकं कुर्यादिति च तदर्थः। § ऋ० वे० ९, ७, २४।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"रथाइव" युद्धदेशं प्रति यथा रथाः तथा* "हिन्वानासः" यागदेशं प्रति गच्छन्तः† सोमाः ऋत्विजां "गभस्त्योः" बाह्वोः "दधन्विरे" धीयन्ते। तत्र दृष्टान्तः—"भरासः" भराः "कारिणामिव"‡ यथा भारवाहानां बाह्वोर्धीयन्ते तद्वत् ॥ ५ ॥

अथ षष्ठी।

१ २ ३ १र २र ३ १ २ ३ १ २
राजानोनप्रशस्तिभिःसोमासोगोभिरञ्जते।
३ २३ ३ २ ३ १ २
यज्ञोनसप्तधातृभिः ॥ ६ ¶ ॥

"सोमासः" सोमाः "प्रशस्तिभिः" प्रशस्ताभिः स्तुतिरूपाभिः वाग्भिः "राजानो न" यथा राजानः§ "सप्तधातृभिः"‖ सप्त-होत्राभिः "यज्ञो न" यथा च यज्ञः तथा "गोभिः" गोर्विकारैः पयोभिः "अञ्जते" अज्यते संस्क्रियत इति ॥ ६ ॥

---

* 'रथाइव—गमन-स्वभावाः'—इति वि०।

† 'हिन्वानासः—पूयमानाः'—इति वि०।

‡ 'कारिणाम् इव—कारिणः रथ-वाहकाः अथवा भराः सङ्ग्रामाः सङ्ग्राम-कारिणः—इति वि०।

¶ ऋ० वे० ६, ७, ३४।

§ 'राजानो न—न शब्द उपमार्थीयः राजान इव, राजानो यथा प्रशस्तिभिः वध्यन्ते सेव्यन्ते तद्वत् सोमासः गोभिरिज्यते; उदकैः क्षीरैर्वा'—इति वि०।

‖ 'सप्तधातृभिः—सप्त वषट्कारिणो सप्त धातारः अथवा सप्त छन्दांसि सप्त धातारः'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ सप्तमी ।

१ २ ३ १ ३ १ २ ३ १ २ ३ १ २ ३ २

परिस्वानासइन्दवोमदायबर्हणागिरा ।

१ २ ३ १ २

मधोअर्षन्तिधारया ॥ ७ * ॥

"स्वानास:" सुवानाः अभिषूयमाणाः "इन्दवः" सोमाः "बर्हणा" महत्या "गिरा" स्तुति-रूपया वाचा युक्ताः सन्तः "मदाय" मदार्थं "मधोः" मधुर-रसस्य "धारया" "परि अर्षन्ति" परितो गच्छन्ति ॥

"परिस्वानास:"–"परिसुवानासः"—इति पाठौ, "मधोः" -"सुताः"—इति च ॥ ७ ॥

अथ अष्टमी ।

२ १ २ ३ १ २ ३ १ २ ३ २ ३ १ २

आपानासोविवस्वतोजिन्वन्तउषसोभगम् ।

२ ३ २ ३ १ १

सूराअण्वं वितन्वते ॥ ८ † ॥

"विवस्वतः" दीप्तिमतः इन्द्रस्य "आपानासः" आपानभूताः "उषसः" "भगं" शोभां "जिन्वन्तः" प्रेरयन्तः "सूराः" सरन्तः‡

* ऋ० वे० ९, ७, ३४ ।

† ऋ० वे० ९, ७, २८ ।

‡ 'सूराः—सूर्या इव दीप्तिमन्तः'—इति वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



सोमाः "अवयं वि तन्वते"* अभिषव-वेलाया मुपरवेषु शब्दं कुर्वन्ति ॥

"जिन्वन्तः"-"जनम्"—इति पाठौ ॥ ८ ॥

अथ नवमी।

२ ३ १ २   ३ २ ३ १ २   ३ १ २
अपद्वारामतीनाम्प्रत्नाऋण्वन्तिकारवः।

२ ३ १ २   ३ १ २
वृष्णोहरसआयवः ॥ ९ † ॥

"मतीनां कारवः" स्तुतीनां कर्त्तारः "प्रत्नाः" पुराणाः "वृष्णः" सेचकस्य सोमस्य "हरसः"‡ आहर्त्तारः "आयवः" मनुष्याः ऋत्विजः "द्वारा" यज्ञस्य द्वाराणि "अप ऋण्वन्ति" विवृण्वन्ति ॥ ९ ॥

अथ दशमी।

३   १ २   २ १ २   ३ १ २
समीचीनासआशतहोतारःसप्तजानयः।

२ १र २र ३ १ २
पदमेकस्यपिप्रतः ॥ १० ¶ ॥

---

* 'अयवं वितन्वते—सूक्ष्मं वितानं कुर्वन्ति'—इति वि०।

† ऋ० वे० ९, ७, ३५।

‡ "हरसः"—इति तु ऋग्वेदीयपाठः, सामवेदीयस्तु "हरसे"—इति, पद-ग्रन्थे तथैव दर्शनात्, व्याख्यातञ्चैवमेव विवरणकृतापि—'हरसे दीप्त्यै'—इति।

¶ ऋ० वे० ९, ७, ३५।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"समीचीनासः" समीचीनाः* "जानयः" जाति-सङ्घाः "एकस्य" सोमस्य "पदं" स्थानं "पिप्रतः" पूरयन्तः "सप्त होतारः"† यज्ञे "आयत" व्याप्नुवन्ति ॥

"आयत'-"आसत"—इति पाठौ, 'जानयः"-"जामयः" —इति च ॥ १० ॥

अथैकादशी।

२ ३ १ २ ३ १ २ ३ १ २ २ १ २ ३ २
नाभानाभिन्नआददे चक्षुषासूर्य्यन्दृशे ।
२ १र २ ३ १ २
कवेरपत्यमादुहे ॥ ११ ‡ ॥

"नाभिं" यज्ञस्य नाभिभूतं सोमं "नः" अस्माकं "नाभा" नाभौ अहम् "आददे" सोमं पीत्वा नाभि-स्थाने करोमीत्यर्थः। किमर्थम्? "चक्षुषा" "सूर्यं" "दृशे" द्रष्टुम्। किञ्च, "कवेः" क्रान्त-कर्म्मणः सोमस्य "अपत्यम्" अंशुम् "आ दुहे" आ पूरयामि¶ ॥

"चक्षुषासूर्यन्दृशे"—"चक्षुषित्सूर्यंसचा"—इति पाठौ ॥ ११ ॥

---

* 'समीचीनासः—समीचीन-गुणाः सोमाः'—इति वि०।

† 'होतारः—देवानामाह्वातारः। सप्त जानयः—सप्त जनाः, वषट्कारिण—: होता, मैत्रावरुणः, ब्राह्मणाच्छंसी, पोता, नेष्टा, अच्छावाकः, आग्नीध्र इति' —इति वि०।

‡ ऋ० वे० ६, ७, २५।

¶ 'कवेः अपत्यम् आदुहे—कविर्मेधावी ब्राह्मणः तस्यापत्यत्वं गच्छति सोमः, तेन निष्पादितत्वात्। आदुहे दुहते दशापवित्रात् सोमम्'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वादशी।

३ १ ३ १ ३ २ ३ १ २ ३ १ ३ १ २ ३ २
अभिप्रियन्दिवस्पदमध्वर्युभिर्गुहाहितम्।
१ २ ३ १ २
सूरःपश्यतिचक्षसा ॥ १२ * ॥ १

"सूरः" सुवीर्यः इन्द्रः "चक्षसा" चक्षुषा "दिवः" दीप्तस्य आत्मनः "प्रियं पदम्" अध्वर्युभिः "गुहा" गुहायां हृदये "हितं" निहितं पीतं सोमम्† "अभि पश्यति" ॥

"प्रियम्"-"प्रिया"—इति पाठौ‡ ॥ १२ ॥

२ २ २ २ १ २ ऽ
॥ पार्थम् ॥ ओ३हो३होयि। प्रकावियाम्। उश
२ २१४ ५ २२ २ १२ १ १ २ ३४
ने। वब्रुवाणाः। देवोदेवा। ना३ञ्जनि। माविव
५ २ १ २ १ २ ३ ४ ५ २ २ १
क्ती। मह्निव्रताः। शुचिव। धूःपवाकाः। पदावरा।
२ १ २ २ ४
हो३अभि। आ३४३यि। तीरा५ यिभा ६ ५ ईन् ॥(१)
२ १२ २ १ २ २ ३ ४ ५ २ २ १
प्रहꣳसासाः। तृपला। वग्नुमच्छा। अमादस्ताम्।
२१ २ ३ ४ ५ २ २ १ २ १ २
वृषग। णाअयासूः। अङ्गोषिणाम्। पवमा। नꣳ

---

* ऋ० वे० ९, ७, ३५।

† 'गुहायां द्रोणकलशे हितं सोमाख्यं पदम्'—इति वि०।

‡ "चक्षसा"—"चक्षुषा"—इति च शोध्यम्।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



सखायाः । दुर्मर्षंवा । णा३म्प्रव । दा३४३ । तीऽस्ता

पूकाई५ई म् ॥(२) सयोजतायि । उरुगा । यस्यजूतीम् ।

वृथाक्रीडा । जा ३ म्मिम । तेनगावाः । परीणसाम् ।

कृणुते । तिग्मशृङ्गाः । ओ३हो३होयि । दिवाहरा

यिः । ददृशे । ना३४३ । क्ता३मा५ओ३ई५ईः(३) ॥५*॥ [१]

॥ वाराहम् ॥ हाउहाउ । ऊप । प्रकावियाम ।

उशने । वब्रुवाणाः । देवोदेवा । ना३ञ्जनि । सौ

विवक्ती । मदिव्रताः । शुचिबा३ । धूःपवाकाः । पदा

वरा । वो३ अभि । आ ३ ४ ३ यि । तीऽरा५यिभा६

४ ६न ॥(१) प्र दऽसासाः । तृपला । वग्नुमच्छा । अ

मादस्ताम् । वृषग । णा अयासूः । अङ्गोषिणाम् ।

पवमा । नऽसखायाः । दुर्मर्षंवा । णा३ं प्रव । दा

---

* ऊ० गा० ६प्र० २ख० ५गा० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ ५ १ १र २ १
३४३ । तो३सा५का६५ई६म् ॥(२) सयोजतायि । उह
र २ ३ ४ ५ २ १र र २ १ १ २
गा । यस्यजूतीम् । वृथाक्रीडा । ता३म्मिम । तेंन
४ ५ २१र २ १ र २ ३ ४ ५ २र
गादाः । परीणसाम् । कृणुते । तिग्मशृङ्गाः । हाउ
र १ १ १र २१ र २ २
हाउ । ऊप् । दिवाहरायिः । दहशोनां३४३ । का
४
३मा५र्त्ता६५६ः(३) ॥ १८ * ॥ [२]

२ र १ २ १र
॥ प्रवङ्गार्गवम् ॥ प्रकाावियाम् । उशनेवा । ब्रू
१र २र र १र २र १ १
२वाणाः । देवोदेवा । नाञ्जनिमा । वा२यिवक्तायि ।
२ १ २ १ १र २ र १
महिव्रताः । शुचिबन्धः । पा२वाकाः । पदावरा ।
२र १ १र १ २ १र
होषभियायि । तो२भा३नाउ ॥(१) प्रहꣳसासाः ।
२ १ र १ २ र १ २ १
तृपलावा । मृ२मच्छा । अमादस्ताम् । वृषगणाः ।
१र २ र १ २ १ र १र
आ२यासूः । अङ्गोषिणाम् । पवमानाम् । सा२खा
२ १ २ १ १र २ १
याः । दुर्मर्षंवा । णंप्रवदाः । तो२साका३माउ ॥(२)

---

* ऊ० गा० १६प्र० २ख० १९सा० ।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



सयोजताथि। उरुगाया। स्वा२जूतीम्। वृथाक्रीडा। तम्मिमते। ना२गावाः। परीणसाम्। क्रणुतेताथि। ग्मा२श्चङ्गाः। दिवाचराथिः। दद्दशेना। क्ता२मृश्रा ३१उ। वा२३४५ः(३) ॥ ३ * ॥[३]

॥ कुत्ससारथीयम् ॥ हो४वा। उऊवा३। होवा। प्रकाावियाम्। उश्नने। वब्रुवाणाः। देवोदेवा। ना ३ञ्जनि। माविवक्ती। मह्विव्रताः। शुचिब। धूःप बाक्ता। पदावरा। हो३अभि। ऐतिरेभान्॥(१) प्र वंसासाः। तृपला। वग्नुमच्छा। अमादस्ताम्। वृष ग। णायआसूः। अङ्गोषिणाम्। पवमा। नंसखा याः। दुर्म्मर्षंवा। णा३प्रव। दन्तिसाकाम् ॥(२) स योजताथि। उरुगा। स्वस्जूतीम्। वृथाक्रीडा। ता

* ऊ० गा० ११प्र० १ष० १गा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ २ ३ ४ ५ २ १ २ २ १ २ १ २ २ २
इम्मिम। तैनगावाः। परीणसाम्। कृणुते। तिग्म

४ ५ २ १ २ २ १ २ १ २ २ ३ ४ ५ २
शृङ्गाः। दिवाहरायिः। दहशे। नक्तमृजाः। हो४

५ २ २ ४ ५ ५
वा। उऊवाइ। होवाइहाउवा(३) ॥ ६ * ॥ [४] १

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य अष्टमस्याध्यायस्य
प्रथमः खण्डः ॥ १ ॥

---

अथ द्वितीयखण्डे —

असृग्रमिति द्वादशर्चं† प्रथमं सूक्तम् ;

तत्र, प्रथमा।

१ २ ३ १ २ ३ १ २ २ २ ३ १ २ २ १ २
असृग्रमिन्दवःपथाधर्मन्नृतस्यसुश्रियः।

२ १ २ ३ १ २
विदानाअस्ययोजना ॥ १ ‡ ॥

"अस्य" अनेन यजमानेन कृतान् "योजना" तद्देवता-योग्यान् सम्बन्धान् "विदानाः" जानन्तः "सुश्रियः" शोभन-श्रयणाः "असृग्रम्" हविर्द्धानात् सृज्यन्ते ॥

"योजना"-"योजनम्"—इति पाठौ ॥ १ ॥

---

* ऊ० गो० १२प्र० २ख० ६सा०।

† 'द्वितीयो द्वादशर्चः'—इति वि० खण्डः-इति यावत्।

‡ ऋ० वे० ६, ७, १८।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीया।

२उ ३ १ २ ३ २ ३ १ २३१र ३र
अधारामधोअग्रियोमहीरपोविगाहते।
३ २ ३ २ ३ १ २
हविर्हविःषुवन्द्यः॥ २ †॥

"हविःषु" हविषां मध्ये "वन्द्यः" स्तुत्यः "हविः" हविरात्मकः यः सोमः "महीः" महतीः "अपः" वसतीवरीः "विगाहते", तस्य "मधोः" सोमस्य "अग्रियः" मुख्या धाराः प्रपतन्तीत्यर्थः॥

"मधोः"--"मध्वः"—इति पाठौ॥ २॥

अथ तृतीया।

२३१ २ ३ २ ३१र २र ३१२
प्रयुजावाचोअग्रियोवृषोअचिक्रदद्वने।
२ ३ २ ३ १ ३ २ २
सद्माभिसत्योअध्वरः॥ ३ ‡॥

"अग्रियः" हविषां मध्ये मुख्यः सोमः "युजाः" युक्ताः "वाचः" प्रकरोतीत्यर्थः। एतदेव दर्शयति—"वृषः"¶ कामानां वर्षकः "सत्यः" सत्यभूतः "अध्वरः" हिंसा-वर्जितः सोमः

* "हविष्षु"—इति ख० ग० पु०-पाठः।

† ऋ० वे० ९, ७, २८।

‡ ऋ० वे० ९, ७, २८।

¶ "वृषोअचिक्रदत्"—इति मूलस्य "वृषः", "अचिक्रदत्"—इति छेदमवलम्ब्य व्याचष्टे सायणः, परमेष पदग्रन्थ-विरुद्धः तत्र "वृषा", "उ", "अचिक्रदत्"—इति छेद-दर्शनात्; अतएव विवरणकार आह—'वृषा सेक्ता, उ इति पदपूरणः'—इति।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"सद्म" यज्ञगृहं "अभि" प्रति "वने" उदके अचिक्रदत् शब्दं करोतीत्यर्थः ॥

"वृषोअचिक्रदत्"—"वृषावचक्रदत्"—इति पाठौ ॥ ३ ॥

अथ चतुर्थी।

२ ३ १र  २र ३ २ ३ १ २ ३ १र २र

परियत्काव्याकविर्नृम्णापुनानोअर्षति।

१र ३ १ २

स्वर्वाजीसिषासति॥ ४ * ॥

"कविः" क्रान्तकर्मा सोमः "नृम्णा" नृम्णानि बलानि† "पुनानः" शोधयन् "काव्या" काव्यानि कवि-कर्माणि स्तोत्राणि "यद्" यदा "परि अर्षति" परिगच्छति, तदा "स्वः" स्वर्गं "वाजी" बलवान् अन्नवान्चेन्द्रः‡ "सिषासति" यागं प्रत्यागन्तुं स्वकीयं बलं सम्भक्तुमिच्छति ॥

"पुनानः"--"वसानः"—इति पाठौ ॥ ४ ॥

अथ पञ्चमी।

१२  ३ २उ ३ २ ३ १ २

पवमानोअभिस्पृधोविशोराजेवसीदति।

१ २ ३ १ ३ ३ १ २

यदीमृण्वन्तिवेधसः ॥ ५ ¶ ॥

---

* ऋ० वे० ९, ७, २८।

† 'धनन्या धनेन'—इति वि०।

‡ 'वाजी—वेगवान्, अथवा चरुपुरोडाशादि-लक्षणेनान्नेनान्नवान् स्वर्गलोकं यजमानस्य साधयति'—इति वि०।

¶ ऋ० वे० ९, ७, २९।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"यद्" यदा "ईम्" एनं* सोमं "वेधसः" कर्मणां कर्त्तारः ऋत्विजः† "ऋण्वन्ति" प्रेरयन्ति, तदा "पवमानः" चरन्नेव सोमः "स्पृधः" स्पर्द्धमानान् याग-विघ्नकारिणः राक्षसादीन् "अभि सीदति" नाशयितुमभिगच्छति। तत्र दृष्टान्तः—"विशः राजा इव" यथा राजा विशः स्पर्द्धमानान् मनुष्यान् नाशयितु-मभिगच्छति तद्वत् ॥ ५ ॥

अथ षष्ठी।

२ ९ १२१ २ १२उ २ १ २
अव्यावारेपरिप्रियोहरिर्वनेषुसीदति।
३ १ २ ३२
रेभोवनुष्यतेमती ॥ ६ ¶ ॥

"हरिः" हरितवर्णः "प्रियः" देवानां प्रियतम एव सोमः "वनेषु" उदकेषु§ सम्पृक्तः "अव्याः" अवेः "वारे" वाले "परि सीदति" किञ्च "रेभः" अभिषव-वेलायाम् उपरवेषु शब्दं कुर्वन् "मती" मत्या स्तुत्या‖ "वनुष्यते" सेव्यते ॥ ६ ॥

---

* 'ईम्—इति पदपूरणः'—इति वि०।

† "वेधाः"—इति मेधावि-नामसु निघण्टौ दृश्यते (३, १५)

‡ "अव्यो"—इति ऋ०-पाठः।

¶ ऋ० वे० ९, ७, २९।

§ 'वनेषु उदकेषु सीदति, अथवा वनेषु काष्ठमयेषु द्रोणकलशेषु अध्वरसभादिषु सीदति'—इति वि०।

‖ 'मती—बुद्धा ऋत्विग्यजमानानाम्'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ सप्तमी।

२ ३ १र २र ३ १ २ ३ १र २र

सवायुमिन्द्रमश्विनासाकम्मदेनगच्छति।

२ ३ १ २ ३ १ २

रणायोअस्यधर्मणा* ॥ ७ † ॥

"यः" यजमानः "अस्य" सोमस्य "धर्मभिः"‡ कर्मभिः क्रयणाभिषवादिभिः "रणा"¶ रमते, "सः" यजमानः "वायुम्," "इन्द्रम्," "अश्विना" अश्विनौ च "मदेन" "साकं" सह "गच्छति" प्राप्नोति ॥ ७ ॥

अथाष्टमी।

२ ३ १र २र ३ २ ३ १ २ ३ १ २

आमित्रेवरुणेभगेमधोःपवन्तऊर्मयः§।

३ १ २ ३ १ २

विदानाअस्यशक्मभिः ॥ ८ ‖ ॥

---

* "धर्मभिः"—इति ऋ० पाठः।

† ऋ० वे० ९, ७, ९।

‡ धर्मभिरिति ऋग्वेदीयपाठमवलम्ब्यैवेदं प्रतीक-ग्रहणं व्याख्यानञ्च; विवरणकृद्व्याख्यानन्तु सामवेदीयम् तथाहि—'धर्मणा कर्मणा'—इति।

¶ "रणाः" दीर्घान्तश्रुतिः "द्व्यचोऽतस्तिङः (६, ३, १३५)"—इति तत्र दीर्घः।

§ "मित्रावरुणाधर्मभिः"—इति ऋ०-पाठः।

‖ ऋ० वे० ९, ७, ९।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



येषां यजमानानां "मधोः" सोमस्य "ऊर्मयः" तरङ्गाः "मित्रावरुणा"* मित्रावरुणौ देवौ "भगं"† भगाख्यं देवञ्च प्रति "पवन्ते" चरन्ति, ते यजमानाः "अस्य" सोमस्य इदं सोमं "विदानाः" जानन्तः "अक्मभिः" सुखैः‡ सङ्गच्छन्तइति शेषः ॥ ८ ॥

अथ नवमी।

२ १ २ ३ २उ ३ १ २ ३ १ २
अस्मभ्यꣳरोदसीरयिम्मध्वोवाजस्यसातये।
२ ३ १२ ३ १ २
अवोवसूनिसञ्जितम् ॥ ९ ¶ ॥

हे "रोदसी" द्यावापृथिव्यौ ! युवां "मध्वः" देवानां मादयितुः "वाजस्य" सोमात्मस्यान्नस्य "सातये" लाभाय§ "अस्मभ्यं" "रयिं" धनं "अवः" अन्नञ्च‖ "वसूनि" वासकान्यन्यान्यपि पश्वादीनि "सञ्जितं" सञ्जयन्तं** प्रयच्छतमित्यर्थः ॥ ९ ॥

---

*, † ऋग्वेदीयपाठानुसारेणेदं प्रतीकग्रहणम्। विवरणकृता तु गृह्यते—'मित्रे, वरुणे, भगे-सप्तम्येकवचनं चतुर्थ्येकवचनस्य स्थाने द्रष्टव्यम्, मित्राय, वरुणाय, भगाय'—इति।

‡ 'अक्माभिः—अक्तैः कर्मभिः'—इति वि०।

¶ ऋ० वे० ६, ७, १९।

§ 'सातये—दानार्थम्'—इति वि०।

‖ अवः—अन्नं यशो बलं वा'—इति वि०।

** 'संयतं—सम्यक् यतम्'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ दशमी।

२ ३१२ ३ १३१ २ ३१ १
आतेदक्षम्मयोभुवंवन्हिमद्यावृणीमहे।
२ ३१२३ १ २
पान्तमापुरुस्पृहम्॥ १० *॥

हे सोम! यष्टारो वयं "ते" तव स्वभूतं "दक्षं" बलम् "अद्य"† अस्मिन् यागदिने "आ" आभिमुख्येन "वृणीमहे" सम्भजामहे। कीदृशम्? "मयोभुवं" सुखस्य भावकम् "वह्निं" धनादीनां प्रापकम् "पान्तं" शत्रुभ्यो रक्षकम् "पुरुस्पृहं" बहुभिः स्पृहणीयं कामानाम्॥ १०॥

अथैकादशी।

२ १ १२ १२ ३ २उ ३ १ २ ३ १ २
आमन्द्रमावरेण्यमाविप्रमामनीषिणम्।
२ १ १ २३ १ २
पान्तमापुरुस्पृहम्॥ ११ ‡॥

हे सोम! "मन्द्रं" मदकरं स्तुत्यं वा त्वाम् "आ वृणीमहे" "वरेण्यं" सर्वैर्वरणीयं सम्भजनीयञ्च; किञ्च "विप्रं" मेधाविनं त्वां तथा "मनीषिणं" मनसईषा मनीषा तद्वन्तं स्तुतिमन्तं वा त्वामावृणीमहे [प्रत्येकं विशेषणापेक्षया आ-इत्युपसर्गः

* ऋ० आ० ६, १, २, १ (२ भा० ५६ पृ०)=ऋ० वे० ७, २, ६, ५।
† मूले तु "निपातस्य च (६, ३, १३६)"—इति दीर्घान्तः "अद्या"—इति।
‡ ऋ० वे० ७, २, ६, ४।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



न्तत:* ; किञ्च "पान्तं" सर्वेषां रक्षकम् "पुरुस्पृहं" बहुभिः स्पृहणीयं च त्वां सम्भजामहे ॥ ११ ॥

अथ द्वादशी।

२ ३१र १र३ र३१२ ३१
आरयिमासुचेतुनमासुक्रतोतनूष्वा।
२१ १२३१२
पान्तमापुरुस्पृहम् ॥ १२ † ॥ २

हे "सुक्रतो" शोभन-प्रज्ञ सोम ! त्वदीयं "रयिं" धनम् वयम् "आ"‡ वृणीमहे। किञ्च, "सु चेतुनम्" [चिती सञ्ज्ञाने (भ्वा० प०) भावे औणादिक उन प्रत्ययः] सुज्ञानञ्च। किञ्च "तनूषु" अस्मत्पुत्रेषु च धनं सुज्ञानञ्च त्वम् "आ" विधेहि यद्वा पुत्रार्थं वयमावृणीमहे। तथा "पान्त" सर्वस्य रक्षकं "पुरुस्पृहं" बहुभिर्यष्टृभिः काम्यमानं त्वां सम्भजामहे ॥ १२ ॥ २

इति सामवेदार्थ-प्रकाशे उत्तराग्रन्थस्य अष्टमस्याध्यायस्य द्वितीयः खण्डः ¶ ॥ २ ॥

---

* विवरणकारस्त्वन्यथैव व्याचष्टे—'आमन्द्रम्—आनुपूर्व्येण मन्द्रं बलम्'—इति, 'आवरेण्यम्—आभिमुख्येन वरेण्यं तत्'—इत, 'आविप्रम—अतिशयेन विपश्चितम्'—इत्यादि च।

† ऋ० वे० ७, २, ६, ५।

‡ अत्राप्यन्यथा व्याख्यातं विवरणकृता—'आरयिम्—आभिमुख्येन धनवन्तम्'—इत्यादि।

¶ 'उक्तं वक्ष्यिष्यमाणम्'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ तृतीय-खण्डे,*प्रथम-तृचे—

प्रथमा।

२ १ २ ३ १ १ ३ १ २ ३ १
मुर्द्धानन्दिवोअरतिम्पृथिव्या

२ ३ २ ३ २ उ १ २ ३ २
वैश्वानरमृतआजातमग्निम्।

३ १ ३ २ ३ १ २ ३ १ २
कविꣳसम्राजमतिथिञ्जनाना

३ १ ३ १ २ ३ १
मासन्नःपात्रञ्जनयन्तदेवाः॥ १ †॥

"मूर्द्धानं" शिरोभूतं, कस्य? "दिवः" द्युलोकस्य, "पृथिव्याः" प्रथितायाः भूमेः "अरतिं" गन्तारम् [यद्वा, गन्तव्यं स्वामिनं], "वैश्वानरं विश्वेषां नराणां सम्बन्धिनम्, "ऋते" [ऋतमिति सत्यस्य यज्ञस्य वा नाम (निघ० ३,१०,६)। निमित्त-सप्तम्येषा (२,३,३६वा०)]ऋतनिमित्तम् "आ" आभिमुख्येन जातं सृष्ट्यादावुत्पन्नं "कविं" क्रान्तदर्शिनं "सम्राजं" सम्यग्राजमानं "जनानां" यजमानानाम् "अतिथिं" हविर्वहनाय सततं गन्तारं [यद्वा, अतिथिवत् पूज्यम् "आसन्" आसनि [द्वितीयार्थे सप्तमी (२,१,८५), अग्नि-लक्षणेनास्येन हि देवा हवींषि भुञ्जते] "नः" अस्माकं "पात्रं" पातारं रक्षकं वैश्वानरमग्निं

* 'इदानीमाग्न्यानि'—इति वि०।

† ऋ० खा० १, २, २, ५ (१ भा० २०४ पृ०) = य० वे०७, २४ = ऋ० वे० ४, ५, ८, १।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"देवाः" स्तोतारः ऋत्विजः देवा एव वा "आ जनयन्त" यद्वाभिमुख्येन अजीजनन् अरण्योः सकाशात् उदपादयन्॥

"आसन्नःपात्रम्"-"आसन्नापात्रम्"—इति पाठौ ॥ १ ॥

अथ द्वितीया।

१र २र ३ १ २ ३
त्वांविश्वेअमृतजायमानꣳ

२ १२ ३ २ ३ १र २र
शिशुन्नदेवाअभिसन्नवन्ते ।

२१ १२ १ १ २ ३
तवक्रतुभिरमृतत्वमायन्

१र२ ३२३ १र २र
वैश्वानरयत्पित्रोरदीदेः ॥ २ * ॥

हे "अमृत" मरण-रहिताग्ने ! "विश्वे देवाः" स्तोतारः "जायमानम्" अरण्योः सकाशात् उत्पद्यमानं त्वां "शिशुं न" पुत्रमिव "अभि सं नवन्ते" अभिसंस्तुवन्ति [ यद्वा, दीव्यन्तीति देवा रश्मयः ते सर्वे जायमानं त्वामभिसन्नवन्ते अभिगच्छन्ति, यथा पितरः पुत्रमभि गच्छन्ति ], अपि च हे वैश्वानर अग्ने ! "यद्" यदा "पित्रोः" पालयित्र्योः द्यावा-पृथिव्योर्मध्ये "अदीदेः" दीप्यसे, तदानीं "तव" त्वदीयैः "क्रतुभिः" कर्मभिः ज्योतिष्टोमादिभिर्यागैः "अमृतत्वम्" देवत्वम् "आयन्" यजमानाः प्राप्नुवन्ति ॥ २ ॥

---

* ऋ० वे० ४, ५, ९, ४ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ तृतीया ।

१ २ ३ १ २ १२ ३ २
नाभिंयज्ञानाᳬसदनᳬरयीणां

३ १ २ ३ २ ३ १र २र
महामाहावमभिसन्नवन्त ।

२ २ ३क १र २ १ २
वैश्वानरᳬरथ्यमध्वराणां

२ १ २ ३ १ २ ३ २
यज्ञस्यकेतुञ्जनयन्तदेवाः ॥ २ * ॥ ३.

"नाभिं यज्ञानां"†, "सदनं रयीणां" धनानां स्थानमेक-निलयं, "महां" महान्तम् "आहावम्" आह्वयन्ते अग्निनाहुतय इत्याहावः तादृशं [यद्वा, वृष्ट्युदक-धाराणामाहाव-स्थानीय मेव-भूतम्] अग्निम् "अभि सं नवन्त" स्तोतारः सम्यक् स्तुवन्ति । तथा "वैश्वानरं" विश्वेषां नराणां सम्बन्धिनम् अध्वराणां यज्ञानां "रथ्यं" रथिनं, यथा रथी स्व-रथं नयति तद्वन्नेतारं वंहितारं गमयितारं‡ "यज्ञस्य" "केतुं" प्रज्ञापकम्¶ एवं-विधमग्निं "देवाः" स्तोतार ऋत्विजो देवा एव वा§ "जन-यन्त" जनयन्ति मन्थनेनोत्पादयन्ति ॥ २ ॥ ३

* ऋ० वे० ४, ५, ८, १ ।

† 'नाभिं यज्ञानां—प्रबन्धन सदनम्'—इति वि० ।

‡ 'रथ्य'—रथमत रंहयितारं वा'—इति वि० ।

¶ 'केतु'—ध्वजम्'—इति वि० ।

§ 'देवाः—दानवन्त ऋत्विजः'—इति वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीय-तृचे—

प्रथमा।

१ २ ३ १ २ ३ १ २ ३ २ ३ १

प्रवोमित्रायगायतवरुणायविपागिरा।

१ २ ३ २ ३ २

महिक्षत्रावृतम्बृहत्॥ १ *॥

हे मदीया ऋत्विजः! "वः" यूयमित्यर्थः। "मित्राय" "वरुणाय" "विपा" व्यापया "गिरा" स्तुत्या "गायत" स्तुतिं कुरुत [स्तुत्या स्तुतेत्येतत् पाकं पचतीतिवत्]। हे "महिक्षत्रौ" प्रभूत-बलौ युवाम् "ऋतं" यज्ञं† "बृहत्" महत् अपि प्रशस्तं स्तुत्यर्थमागच्छतमिति शेषः [अथवा "महत्" प्रभूतम् "ऋतं" स्तोत्रं शृणुतमिति शेषः॥ १॥

अथ द्वितीया।

३ २ ३ २ ३ १ २ ३ २ ३ १र २र

सम्राजायाघृतयोनीमित्रश्चोभावरुणश्च।

३ २ ३ १ २ ३ २

देवादेवेषुप्रशस्ता॥ २ ‡॥

"या" यौ "मित्रश्च" "वरुणश्च" [परस्परापेक्षया च-शब्दः] "उभा" उभौ "सम्राजा" सम्राजानौ सर्वस्य स्वामिनौ "घृतयोनी"

* ऋ० वे० ४, ४, ६, १।

† 'ऋतं सत्यम्'—इति वि०।

‡ ऋ० वे० ४, ४, ६, २।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



उदकस्योत्पादकौ "देवा" द्योतमानौ "देवेषु" मध्ये "प्रशस्ता" प्रकर्षेण स्तुत्यौ तौ स्तुत्या गायतेति पूर्वत्रान्वयः ॥ २ ॥

अथ तृतीया ।

१ २ ३ १ २ १२ ३ २ ३ १ २
तानःशक्तम्पार्थिवस्यमहोरायोदिव्यस्य ।
१ २ ३२१ १२
महिवाङ्क्षत्रन्देवेषु ॥ ३ * ॥ ४

"ता" तौ देवौ "नः" अस्मदर्थं "पार्थिवस्य" पृथिवी-सम्बन्धस्य "दिव्यस्य" दिविभवस्य च "महः" महतः "रायः" धनस्य "शक्तं" समर्थम्, भवतं दातुमिति शेषः । हे देवौ ! "वां" युवयोः "महि" महत् पूज्यं "क्षत्रं" बलं देवेषु प्रसिद्धं, स्तुम इति शेषः ॥ ३ ॥ ४

अथ तृतीय-तृचे—

प्रथमा ॥

१र २र ३ २ ३ २ ३ १ २
इन्द्रायाहिचित्रभानोसुताइमेत्वायवः ।
१ २ ३ १ २ ३ १ २
अण्वीभिस्तनापूतासः ॥ १ † ॥

"चित्रभानो" हे विचित्र-दीप्ते "इन्द्र !" अस्मिन् कर्मणि "आयाहि" आगच्छ । "सुताः" अभिषुताः "इमे" सोमाः

---

* ऋचैव पुनः ६, ३, ११, १=ऋ० वे० ४, ७, ६, ३ ।

† य० वे० २१, ३=ऋ० वे० १, १, ५, ४ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"त्वायवः" त्वां कामयमाना वर्त्तन्ते । "अण्वीभिः"* [ अङ्गुलि-नामैतत् ( निघ० २, ५, २ ) ] ऋत्विजा मङ्गुलिभिः सुता इत्यन्वयः । किञ्च, ते सोमाः "तना" नित्यं "पूतासः" शुद्धाः ऊर्णा-पवित्रेण शोधितत्वात् ॥ १ ॥

अथ द्वितीया ।

१र २र ३ २ ३ १र २र ३ १ २
इन्द्रायाहिधियेषितोविप्रजूतःसुतावतः ।
२ ३ १ २ ३ १ २
उपब्रह्माणिवाघतः ॥ २ † ॥

हे "इन्द्र!" त्वम् "आयाहि" अस्मिन् कर्मणि आगच्छ । किमर्थम्? "वाघतः" [ ऋत्विङ्नामैतत् ( निघ० ३, १८, ३ )] ऋत्विजः "ब्रह्माणि" वेद-रूपाणि स्तोत्राणि "उप" एतुम् । कीदृशस्त्वम्? "धिया" अस्मदीयया प्रज्ञया "इषितः" प्राप्तः, अस्मद्भक्त्या प्रेरित इत्यर्थः । "विप्रजूतः" यथा यजमान-भक्त्या प्रेरितः तथान्यैरपि विप्रैः मेधाविभिः ऋत्विग्भिः प्रेरितः ! कीदृशस्य? "वाघतः?" "सुतावतः" अभिषुत-सोम-युक्तस्य ॥२॥

अथ तृतीया ।

१र २र ३ १ १ ३ २ ३ १ २
इन्द्रायाहितूतुजानउपब्रह्माणिहरिवः ।
३ १ २ ३ १ २
सुतेदधिष्वनश्चनः ॥ ३ ‡ ॥ ५

---

* 'अण्वीभिः—सूक्ष्माभिः धीभिः'—इति वि० ।

† ऋ० वे० १, ३, ५, ५ ।

‡ ऋ० वे० १, ३, ६, ६ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



[ हरि-शब्दः इन्द्र-सम्बन्धिनोरश्वयोर्नामधेयम् "हरी इन्द्रस्य, रोहितोऽग्नेः ( नि० १,१५,१-२ )"—इति तदीयाश्व-नामत्वेन पठितत्वात्] हे "हरिवः" अश्व-युक्तेन्द्र ! त्वं "ब्रह्माणि" आनेतुम् "आ याहि"। कीदृशस्त्वम् ? "तूतुजानः" त्वरमाणः । आगत्य च अस्मिन् "सुते" सोमाभिषव-युक्ते कर्म्मणि "नः" अस्मदीयं "चनः" [ अन्न-नामैतत् ( निरु० नै० ६,१६ ) ] हविर्लक्षणमन्नं "दधिष्व" धारय स्वीकुर्व्वित्यर्थः ॥ २ ॥ ५

अथ चतुर्थ-तृचे—

प्रथमा ।

१ २　३ १ २ १ २ २ ३ १ २　३ १ १
तमीडिष्वयोअर्चिषावनाविश्वापरिष्वजत् ।

२ १ २ १ २ ३ १ २
कृष्णाकृणोतिजिह्वया ॥ १ * ॥

हे स्तोतः ! "तम्" अग्निम् "ईड़िष्व" स्तुहि, "यः" अग्निः "अर्चिषा" ज्वाला-रूपेण तेजसा "विश्वा" सर्व्वाणि "वना" वनान्यरण्यानि "परिष्वजत्" परिष्वजति परितो वेष्टयति, यश्च तानि वनानि "जिह्वया" ज्वालया दग्ध्वा "कृष्णा" कृष्णवर्णानि "कृणोति", तमीड़िष्वेति सम्बन्धः ॥ १ ॥

---

* ऋ० वे० ४, ८, २८, ५ ।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीया।

१ २ ३ २ ३ १ २ १ १ २ २ २ ३ १ ४
यद्दद्य आविवासति सुम्नमिन्द्रस्य मर्त्यः।

२ १ २ ३ १ २ ३ २
द्युम्नाय सुतरा अपः ॥ २ * ॥

"यः" "मर्त्यः" मनुष्यः "इद्धे" दीप्ते अग्नौ "सुम्नं" सुखकरं हविः "इन्द्रस्य" [ चतुर्थ्यर्थे षष्ठी ( २, ३, ६२ ) ] इन्द्राय "आविवासति" परिचरति प्रयच्छति, तस्य मर्त्तस्य "द्युम्नाय" द्योतमानायान्नाय तदर्थं "सुतराः" सुखेन तरणीयाः "अपः" उदकानि वृष्ट्यात्मकानि, इन्द्रः करोत्विति शेषः ॥ २ ॥

अथ तृतीया।

२ ३ १ २ ३ १ २ ३ १ ९ ३ १ २
तानो वाजवतीरिष आशून् पिपृतमर्वतः।

१ २ ३ २ ३ १ २
एन्द्रमग्निञ्च वोढवे ॥ ३ † ॥ ६

हे इन्द्राग्नी ! "ता" तौ युवां "वाजवतीः" अन्नवतीः "इषः" इष्यमाणा "इष्टीः" [ यद्वा, वाजो बलं तद्वतीः इषः अन्नानि ] "आशून्" शीघ्रगान् "अर्व्वतः" अश्वांश्च "नः" अस्मभ्यं "पिपृतम्

---

* ऋ० वे० ४, ८, २९, १।

† ऋ० वे० ४, ८, २९, १।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



पूरयतम् प्रयच्छतम्। किमर्थम्? "इन्द्रम्" "अग्निञ्च" "आ वोढवे" आ समन्तात् वोढुं हविर्भिः प्रापयन्तु॥ ३॥६

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य अष्टमस्याध्यायस्य तृतीयः खण्डः *॥ ३॥

---

अथ चतुर्थ-खण्डे,† प्रथम-तृचे—

प्रथमा।

१ ९ २ ३ २ १ २ ३ २उ
प्रोअयासीदिन्दुरिन्द्रस्यनिष्कृतं
२ १ ३ २र २र ३ १ १
सखासख्युर्नप्रमिनातिसङ्गिरम्।
१ २ ३ २ ३ १ २ ३
मर्यइवयुवतिभिःसमर्षति
१ १ ३ १ २ ३ १ २ ३ २
सोमःकलशेशतयामनापथा॥ १ ‡॥

"इन्दुः" सोमः "इन्द्रस्य" "निष्कृतं" संस्कृतं स्थानमुदरं "प्रो अयासीत्" प्रैव गच्छति; गत्वा च "सखा" सखिभूतः "सख्युः"

---

* 'उक्तं प्रातःसवनं चतुर्विंशस्तोमिकम्'—इति वि०।

† 'इदानीं माध्यन्दिनं सवनम्। उपाश्वयद्धयारथेति सन्तानि-प्रभृतीनि सामानि माध्यन्दिनोक्तार्थानि, पुनानः सोमधारयेति कश्यप-रक्षस्तु-प्रभृतीनि सामानि बार्हस-तानि'—इति वि०।

‡ ऋ० सं० ६, २, २, ४ (२भा० १०९पृ०)=ऋ० मं० ७, ३, ११, १।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



इन्द्रस्य "सङ्गिरं" सम्यग् गिरणाधारभूतम् उदरं "न" "प्रमिनाति" हिनस्ति, किञ्च "मर्यं इव युवतिभिः" मर्त्त्यो यथा तरुणीभिः स्त्रीभिः सह सङ्गतो भवति तद्वदयमपि सोमो युवतिभिर्मिश्रण-श्रीणादिभिर्वसतीवरीभिरद्भिः सह "समर्षति" सङ्गच्छते अभिषव-काल-पश्चात् सोमः "शतयामना" अनेक-यामन-साधन-विशेषोपेतेन "पथा" मार्गेण दशापवित्र-सम्बन्धिना "कलशे" द्रोणकलशे गच्छतीति शेषः यद्वैकमेव वाक्यम्—यथा मर्यो मर्त्यो युवतिभिः सह सङ्गच्छते एवं कलशे शत-यामना पथा सङ्गच्छते ॥

"शतयामना"—"शतयाम्ना"——इति पाठौ ॥ १ ॥

अथ द्वितीया ।

२ ३ १ २ ३ १ २ ३ १ २

प्रवोधियोमन्द्रयुवोविपन्युवः

३ १ २ ३ १ २

पनस्युवःसंवरणेष्वक्रमुः ।

२ ३ १ २ ३ क ११ २ ३ २

हरिंक्रीडन्तमभ्यनूषतस्तुभो

२ ३ १ २ २ ३ १ २

भिधेनवःपयसेदशिश्रयुः ॥ २ * ॥

हे सोमाः "वः" युष्माकं "धियः" ध्यातारः† "मन्द्रयुवः" मदकरं शब्दं कामयमानाः "पनस्युवः" स्तुतिं कामयमानाः

---

* ऋ० वे० ७, २, १६, १ ।

† 'धियः—बुद्धयः'—इति वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"विपन्यव:" [—स्तोतृ-नामैतत्* ) स्तोतारः "संवरेषु" छप-कटा-वरणोपेतेषु याग-गृहेषु "प्राक्रमुः" प्रक्रमन्ते। तदेवाह— "स्तुभः" स्तोतारः† "हरिं" हरितवर्णं "क्रीड़न्तं" क्रीड़न-शीलं सोमम् "अभ्यनूषत" अभिष्टुवन्ति "धेनवः" अपि "पयसा" स्वीयेन क्षीरेणैव "इत्" इमं सोमम् अभिलक्ष्य "अशिश्रयुः" अधिकं श्रीणन्ति ॥

"संवरणेषु"-"संवसनेषु"—इति पाठौ, "हरिङ्क्रीड़न्तं" -"सोमम्मनीषा"—इति च, "पयसेदभिश्रयुः"-"पयसेमश्रिश्रयुः" —इति च ॥ २ ॥

अथ तृतीया ।

१　२　　३१ २ ३ २ ३ २ ३
आनःसोमसंयतम्पिप्युषीमिष

१ ३ १ २ ३ १ २　　२ १ २
मिन्दोपवस्वपवमानऊर्मिणा ।

२ ३ १ २ ३ २उ ३ १ २
यानोदोहतेत्रिरहन्नसश्चुषी

३१र २र२ १ २　३ १ २
क्षुमद्वाजवन्मधुमत्सुवीर्य्यम् ॥ ३ ‡ ॥ ७

---

* "विपन्यवः"—इति निघण्टौ मेधावि-नामसु सप्तदशं पदम् ( ३, १५ )।

† 'स्तुभः—सोमपाः'—इतिवि० ।

‡ ऋ० वे० ९, ३, १५, २।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



हे "इन्दो" दीप्त! "सोम!" "पवमानः" त्वं "नः" अस्माकं "संयतं" सङ्गृहीतं "पिप्युषीं" प्रवृद्धम्* "इषम्" अन्नम् "ऊर्मिणा" प्रवाह-रूपेण तदीयेन रसेन "पवस्व" प्रयच्छेत्यर्थः। "या" इट् "नः" अस्माकम् "अह्न्" अहनि अङ्कः "त्रिः" त्रिषु सवनेषु "असश्चुषी" अप्रतिबन्धो† "दोहते"। किम्? "द्युमत्" शब्दोपेतं सर्व्वत्र श्रूयमाणं "वाजवत्" बलवत् "मधुमत्" माधुर्य्योपेतं "सुवीर्य्यं" शोभन-सामर्थ्यं युतं दोहते। ता त्रिषं पवस्वेति समन्वयः॥

"ऊर्मिणा"-"अभियम्"—इति पाठौ॥ ३॥ ७

॥ प्रवद्भार्गवम्॥ प्रो२अ१यासा२यित्। इन्दुरि१न्द्रा। आ१
१रनिष्कृताम्। सखा२सख्यू२:१। नप्रमि२ना१। ता१२बिस
क्रिराम्। मर्य्य२इ१वा। युव२तिभा१यि:। सा१२मर्ष१तायि।
सो१२म:कल१शा। शो२भ१२लया१। सा२२नापथा२१उ॥(१) प्रवो१२
धियो२। मन्द्र२यु१वो। वा१२यिपन्यु१वा:। पन२स्यु२वा१:।
संव२रणा१यि। पू१रवक्रमू:। हरिक्रीडा२। तमभ्य२न१। वा

---

* 'पिप्युषी'—प्रवेश्याम्'—इति वि०।

† 'असश्चुषी—प्राप्नुयुरेव'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२तस्तुभाः । अभिधेना । वःपयसायित् । आ२शिश्र यू३राउ ॥(२) आनःसोमा । संयतम्पायि । प्यू२षीमि षाम् । इन्दोपवा । स्वपवमा । ना२ऊर्म्मिणा । यानो दोहा । तेत्रिरहान् । आ२सश्चुषायि । क्षुमद्वाजाः । वन्मधुमात् । सू२वीरियाइमाउ । वा२३४५(३) ॥७*॥ [१]

॥ कावम् ॥ प्रवो । अयासीदिन्दुरिन्द्रा । स्यनि ष्क्रार्त्ता२म् । सखासख्युर्नप्रमिना । तिसङ्गायिरा२म् । मर्यइवयुवतिभायिः । समर्षतार२३यि । सोमा३ःकला । शतयाया२३ । माना३पा५थाई५६ ॥(१) प्रवोवा । धि योमन्द्रयुवो । विपन्यूवा२ः । पनस्युवःसंवरणायि । षु वक्रामू२ः । हरिंक्रीडन्तमभ्यनू । षतस्तुभार३ः । आ भी३धेना । वःपयासार३यित् । आशा ३ यिश्रा ५ यू ६

* ऊ० गा० ४प्र० १अ० ७गा० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५ ६ ॥(२) आनोवा। सोमसंयतम्यायि। प्युवीमायि षा२म्। इन्दोपवस्वपवमा। नजर्म्मायिणा२। यानो दोहतेत्रिरहान्। असश्रूषा२३यि। त्रूमा३द्वाजा। व न्मधूमा२३त्। सूवा३यिरा५याथ५६म(३) ॥ १० * ॥ [२]

॥ लौशाद्यम् ॥ प्रोअयासीत्। इन्दुरिन्द्रा २ ३। स्या३निष्कृतम्। सखासख्युः। नप्रमिना२३। तौ३स ङ्गिरम्। मर्य्यइव। युवतिभा२३यिः। सा३मर्षति। सोमःकला। शतयाम २ ३। मना३पा५या६५६ ॥(१) प्रवोधियः। मद्रयुवो२३। वा३यिपन्युवः। पनस्युवः। सवरणा२३यि। षू३वक्रमुः। हरिक्रीड। तमभ्यनू२३। षा३तस्तुभः। अभिधेना। वःपयसा२३यित्। अशा ३यिश्रा५यू६५६ः ॥(२) आनःसोम। संयतपा २ ३ यि।

* ऊ० गा० ६प्र० १ख० १०गा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



४ १र २ ५ ३ २र ३ ५ १ ४ १र २
प्यू२षीमिषम् । इन्द्रोपव । स्वपवमा २ ३ । ना३ऊर्म्मि
५र ३र २र ३र ५ १र ४ र २ ५र २ १
णा । यानोदोह्व । तेत्रिरह्वा२३न् । आ३सस्युषी । त्तुमं
३र ५ १ १ ४
द्वाजा । वन्मधुमा २ ३ त् । सुवा ३ यिरा ५ या ६ ५

६ म् (३) ॥ ११ * ॥ [३]

३र २ ३ ५ २ २
॥ यज्ञसारथिम् ॥ प्रोआया२३४सीत् । इन्दूरा२३
५ १ २ १ २ १ २ २ ३
४यिन्द्रा । स्यानिष्कृता३म् । ह्वोयि । सखासा२३४
५ १ ३ ५ १ २ १ २ १
ख्यूः । नप्रामी२३४ना । तायिसङ्गिरा३म् । ह्वोयि ।
३ २ ३ ५ २ ३ ५ १ २ १ २
मर्य्याई२३४वा । युवाती२३४भायिः । सामर्षता३यि ।
१ ३र १ ३ ५ २र १ ५ १ २र
ह्वोयि । सोमाःका२३४ला । प्रेशाता२३४या । माना
१ २ १ ३ १ ३ ५ २ १
पथा३ । ह्वो२३४५ई ॥(१) प्रवोधी२३४यो । मन्द्रायू२
५ १ २ १ २ १ ३ २ ३ ५
३४वो । वायिपन्युवा३ः । ह्वोयि । पनास्यू२३४वाः ।
२ ३ ५ १ २ १ २ १ ३ २ ३
संवारा२३४णायि । षूवक्रमू३ः । ह्वोयि । ह्वरायिन्द्रा

* ऊ० गा० ७प्र० २ख० ११सा० ।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५ २ २ ५ १ २ १ १ १
२३४यिडा । तमाभ्यार३४नू । घातस्तुभाइ: । हौयि ।
३१ ३ ५ २ २ ५ १ १ १२
अभाँयिधे२३४ना । व:पाया२३४सायित् । आग्निश्रयूइ: ।
१ २र १ १ ५ २ २ ५
हो२३४५ई ॥(२) आना:सो२३४मा । संयाता२३४म्पी ।
१२र १ २ १ २१ २ ५ २ १
प्यूषीमिषाइम् । हौयि । इन्द्रोपार३४वा । स्पावार३
५ १ १र १ २ १ २र २ ३ ५
४मा । नाऊर्मिणाइ । हौयि । यानोदो२३४द्दा ।
२र ५ १ २१ १ १ २ १ २
तेत्तीरार३४वान् । आसस्तुषाइयि । हौयि । द्युमाँद्दा
५ १ ५ ५ १ २र १ २ १
२३४जा । वन्माधू२३४मात् । सुवीरियाइम् । हौ२ ३
४५ई । डा(३) ॥ ५ ॥ [४]

२र २ १ २र १र
॥ वाराहम्† ॥ हाउहाउ । ऊप् । प्रोअयासायित् ।
२ १ २ ३ ४ ५ २ १र २ १
इन्दुरि । इस्यनिष्कृताम् । सखासख्यु: । नप्रमि ।
२र ३ ४ ५ २ १ २ १ २ ३ ४ ५
नातिसङ्गिराम् । मर्य्यइवा । युवति । भि:समर्षता
२र १ २र १ २र ३ २ ४
यि । सोम:कला । शेष्वत । या । मनाइपा५या ६ ५

* ऊ० गा० १०ख० १च० प्रश्ना० ।

† "अगतीवाराहम्"—इति ब० पु०-पाठ: ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



६ ॥(१) प्रवोधियो । मन्द्रयु । वोविपन्युवाः । पनस्यु
वाः । संवर । णेष्ववक्रमूः । हरिक्रीडा । तमभ्य ।
नूषतस्तुभाः । अभिधेना । वःपय । सेत् । अश्राइयि
आपुयूइ५६ः ॥(२) आ नः सोम । संयतम् । पिप्युषी
मिषाम् । इन्दोपवा । स्वपत्र । मानऊर्मिणा । या
नोदोहा । तेन्निर । ह्वन्नस्मुषायि । द्याउद्याउ ।
ऊप् । क्षुमद्वाजा । वन्मधु । मत् । सुवा३रापुयाइ५
इम्(३) ॥ १५ * ॥ [५]

॥ अपामीवम् ॥ प्रोत्र्या । यासीदिन्दुरिन्द्रा३स्या३नि
ष्कृतम् । सखा । सख्युर्नप्रमिना३ती३सङ्गिरम् । म
र्य्यीः । इवयुवतिभा३यिःमा३मर्षति । सोमाः । कल
शेश्वतया । मना३पापुयाइ५३ ॥(१) प्रत्रो । धियोमन्द्र

* ऊ० गा० १३प्र० २ख० १५गा० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



४ १२५ २१ २ ४२१५
युवोश्वा३यिपन्यु वः। यना। स्युवःसंवरणा३यिषू३वक्रमुः।
२१ २र ४ १२५ २१ २र
स्वरायिम्। क्रीडन्तमभ्यनू३षा३तस्तुभः। अभायि। धे
र १२ ४ १र १ २र
नवःपयसेत्। अशा३यिश्रा५यूइ५इः॥(२) आनाः। सो
४ १र २ ५ ११ २ ४
मसंयतम्या३यिप्यू३षीमिषम् :। _पवस्वपवमा३ना
१र २ ५र १र१ १र र ४ २२५
३ऊर्म्मिणा। यानो। दोहते। त्रिरद्धा३ना३सश्चुषी।
२ १ २र ३२ ४
द्युमात्। वाजवन्मधुमत्। सुवा३ यिरा ५ या इ ५
इ म्(३)॥१८ *॥[६] ७

अथ नकिरिति प्रगाथरूपे द्वितीयसूक्ते†—

प्रथमा।

२ ३१र २र ३२३१ २३१२
नकिष्टङ्कर्मणानशद्यश्चकारसदावृधम्।
२३२३ २ ३१२३ १ २३१२ ३१र २र
इन्द्रन्नयज्ञैर्विश्वगूर्त्तम्भ्वसमधृष्टन्धृष्णुमोजसा॥ १ ‡॥

---

• ऊ० गा० २३प्र० २ख० १८सा०।

† 'उक्तो माध्यन्दिनः पवमानः। बृहत्पृष्ठं वामदेव्यं मैत्रावरुणं साम श्रुतिनिधनं काण्वं ब्रह्मसाम वैखानसमच्छावाकसाम'—इति वि०।

‡ छ० आ० ३, २, १, १ ( १भा० ५०२पृ० )=ऋ० वे० ६, ५, ८, ३।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"तं" जनम् अन्यो मर्षको जनः "कर्मणा" हननादि-व्यापारेण "नकिः नशत्" नैव व्याप्नोति, "यः" "इन्द्रं चकार" इन्द्रमेवानुकूलं यज्ञैः साधनैश्चकार । कीदृश-मिन्द्रम् ? "सदावृधं" सर्व्वदा वर्द्धकं, "विश्वगूर्त्तं" सर्व्वैस्तुत्यम्, "ऋम्वसं" महान्तम् "ओजसा" स्वीयेन बलेन "अधृष्ट" शत्रुभिरनभिभूतम् "धृष्णुं" शत्रूणामभिभवनशीलम् ॥

"धृष्णुमोजसा"—"धृष्णवोजसम्"—इति पाठौ ॥ १ ॥

अथ द्वितीया ।

१ २　३ १र २र　३ १र २र ३ १　२ ३ १ २
अषाढमुग्रम्पृतनासुसासहिंयस्मिन्महीरुरुज्रयः ।
२ ३ २ ३ १ २　३ २ ३ १ २
सन्धेनवोजायमानेअनोनवुर्द्यावक्षामीरनोनवुः ॥ २ * ॥८

"अषाढ़म्" असोढ़म् "उग्रम्" उद्गूर्णबलं "पृतनासु" शत्रुसेनासु "सासहिम्" अभिभवितारमिन्द्रं† स्तौमीत्यर्थः, "यस्मिन्" इन्द्रे "जायमाने" "महीः" महिम्यः "उरुज्रयः" बहु-वेगाः "धेनवः" हविरादिना प्रीणयित्र्यः अजा गाव एव वा‡ "समनोनवुः" समस्तुवन् । न केवलं धेनव एव अपि तु "द्यावः" द्युलोकाः "चामीः" पृथिव्यश्च ¶ समनोनवुः, तत्रत्याः सर्व्वे

* ऋ० दे० ६, ५, ८, ४ ।

† 'सासहिं—साधन-स्वभावम्'—इति वि० ।

‡ 'धेनवः—गावः, आपः आदित्यरश्मयो वा'—इति वि० ।

¶ 'चामीः—द्युलोकात् चेपणसमर्थाः आदित्य-रश्मयः'—इति वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



प्राणिनो नमन्त इत्यर्थः "त्रिवृतो लोकाः"—इति श्रुतेः बहु-
वचनम् ॥

"धामीः"—"धामः"—इति पाठौ ॥ २ ॥ ८

५ २ ४ ५ ४र ५ २ १ २र
॥ वैखानसम् ॥ नकिष्टा३ङ्कर्मणानशात् । यश्चाका

१ २ २र २ १ २ १र २ १ १ १ २
रा । सदावृधा२३म् । सदावृधाम् । इन्द्रान्नया । गौ

१ २ १ १ १ २ २ २ १ १
र्विश्वगू । तमा२र्भ्वसा२३म् । तमृभ्वसाम् । अधार्ष्ट

१ २ २र २ १ २ ३र २ ५ २
न्धा । ष्णुमोजसा२३ । ष्णुमोजसा३४३ ॥(१) अधृष्टा३

४ ५ ४र ५ १ १ २ १ २ २र २ १ २ ३र
न्धृष्णुमोजसा । अधार्ष्टन्धा । ष्णुमोजसा२३ । ष्णुमो

२ १ २ १ २ २ २ २ ० १
जसा । अषाढम् । अम्पृतना । सुसा२सहा२३यिम् ।

२ ३र २ १ २ १ २ १ २ १ १ २
सुसासहीम् । यस्मायिन्मह्ययिः । उरुज्रया२३ः । उरु

२ ५ २ ४ र ५ ४ ५ २ १ २
ज्रया३४३ः ॥(२) यस्मिन्मा३हीरुरुज्रयाः । यस्मायिन्म

१ २ ३ २ १ २ १ २ १ २ १
ह्ययिः । उरुज्रया२३ः । उरुज्रयाः । सम्मायिनवो ।

२र १ २र १ ७ १ १ २र २ र १ २र १
जायमाने । अनो२नवू२३ः । अनोनवूः । द्यावाक्षामा



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ २र २ १ १ ३र २ १
यिः। आनोनवू२३ः। अनोनवू३४३ः। ओ२ ३ ४ ५ई।
डा(३) ॥ ९ * ॥ [१] ८

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य अष्टमस्याध्यायस्य
चतुर्थः खण्डः † ॥ ४ ॥

---

अथ पञ्चम-खण्डे‡, प्रथम-तृचे—

प्रथमा।

१ २ ३ १र २र ३ १ ३ १ २
सखायआनिषीदतपुनानायप्रगायत।
२ ३ २ ३ १र २र ३ २
शिशुंनयज्ञैःपरिभूषतश्रिये ॥ १ ¶ ॥

हे "सखायः" सखीभूताः स्तोतार ऋत्विजः! "आ निषीदत" स्तोतुमुपविशत। अथ "पुनानाय" पूयमानाय सोमाय "प्रगायत" प्रकर्षेण गायत तमभिष्टुत। ततः अभिष्टुतं सोमं "यज्ञैः" यजमानीयैः हविर्भिर्मिश्रणैश्च "श्रिये" शोभार्थं "परि भूषत" परितोऽलङ्कुरुत। तत्र दृष्टान्तः—"शिशुं न" यथा शिशुं बालं पुत्रं पितर आभरणैरलङ्कुर्व्वन्ति तद्वत् ॥ १ ॥

---

* ऊ० गा० ४प्र० १अ० ९सा०।

† 'उक्तानि ब्रह्माणि'—इति वि०।

‡ 'इन्द्राग्नीमाश्रव: पवमानः'—इति वि०।

¶ ऋ० सा० ९, १, २, २ (२भा० २०९४०) = ऋ० वे० ७, ५, ७, १।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीया ।

१ २ ३ २उ ३ १ २ ३ १ २ ३ १ २
समीवत्सन्नमातृभिःसृजतागयसाधनम् ।
३ १ १ २ ३ १र २र
देवाव्यां३म्मदमभिद्विशवसम् ॥ २ * ॥

हे ऋत्विजः! "गय-साधनं" गृहस्य साधनभूतम्† "ईम्" एनं‡ सोमं "मातृभिः" मातृभूताभिः वसतीवरीभिः "संसृजत" सम्मिश्रयत, कथमिव ? "वत्सन्न" यथा वत्सं मातृभिः गोभिः संयोजयन्ति तद्वत् । कीदृशम् ? "देवाव्यं" देवानां रक्षकं "मदं" मदन-हेतुं "द्विशवसं" द्विगुण-वेगम् अतिशयित-बलं वा यद्वा द्वयोर्लोकयोस्तत्र स्थिता देवमनुष्या इत्यर्थः, तेषां हविर्द्दान-प्रदानेन प्रवर्द्धयितारं तं सोमम् "अभि" सं सृजत ॥ २ ॥

अथ तृतीया ।

३ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २
पुनानाद्दक्षसाधनंयथाशर्द्धायवीतये ।
१ २ ३ २ ३ १ २ ३ १ २
यथामित्रायवरुणायशन्तमम् ॥ ३ ¶ ॥ ९

* ऋ० वे० ७, ५, ७, २ ।

† "गयः"—इति निघण्टौ गृहनामस्वाद्यं पदम् ( ३, ४ ) । विवरणकृता त्वेवं व्याख्यातम्—'गयः प्राणाः, देवानां प्राण-साधनार्थं मिश्रणं सोमस्य'—इति ।

‡ "ईम्"—इति ऋग्वेदीय-पाठमवलम्ब्यैषा व्याख्या सामवेदीयपाठस्तु "ईं"—इति

¶ ऋ० वे० ७, ५, ७, ३ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"दक्षसाधनं" बलस्य साधनं* धनानां हविर्वा साधकं सोमं "पुनात" पवित्रेण पुनीत [ पूञ् पवने ( उ० ) क्र्यादिः ; तस्माल्लोटि "तप्तनप्तनथनाश्च (७, १, ४५)"—इति तस्य तबादेशः, पित्त्वाद्दीत्वाभावः "शर्द्धाय" वेगार्थं† "वीतये" देवानां पानार्थं यथा भवति तथा "मित्राय" "वरुणाय" च "शन्तमम्" अतिशयेन सुखं यथा भवति तथा पुनीतेत्यर्थः ॥

"शन्तमं"·"शन्तमः"—इति पाठौ ॥ ३ ॥ ९

२ २ १ २ ३
॥ प्रवम् ‡ ॥ हाऽ। वो३हा। वो३हा३। हां। ओ

५ १ ३ ५ १ २ ५
२३४वा। हायि। साखायार३४आ। नीषीदार३४ता।

२ ३ ५ ३ ५ १ ५ ३
पूनानार३४या। प्रार३४गा। यार३४ता। शायिघ्नुना

५ १र ३ ५ १ ५ ३ ५
२३४या। ङ्गैःपारा२३४यिभू। षार३४त। आर३४यायि॥(१)

१ २ २ १ ३ ५ १ २
सामीबार३४त्साम्। नामातॄ२३३भायिः। सार्ज्जातार३

५ ३ ५ २ ५ २ २
४गा। यार३४सा। धार३४नाम्। दायिवांवार३४

५ २ ३ ५ १ ५ ३
याम्। मादांमार३४भो। दार३४यिशा॥(२) वार३४

* 'दक्षसाधनं—शीघ्र-कर्म-कर्त्तारम्'—इति वि०।

† 'शर्द्धाय—बलाय'—इति वि०।

‡ "प्रवः"—इति ख० पु० पाठः।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५ २ २ ५ २ ९ ५ २
साम् । पूनाता२३४दा । च्चासाधा२३४नाम् । याथा
२ ५ ३ ५ २ ५ २ ३
दा२३४र्द्धी । या२३४वी । ता२३४यायि । यथामा२३४
५ २ ३ ५ ३ ५ ३ ५
यिन्ना । यावाह्व२३४णा । या२३४ग्न । ता२३४माम् ।
२ २ १ २ ३ ५ २
हाऽ । वो३हा । वो३हा३ । हा । ओ२३४वा । हा
५र र २ १ २ १ २र १र२र २११
३४ । औहोवा । ए३ । अतिविश्वानिदुरितातरेमा२३
११
४५(३) ॥ १२ * ॥ [१]

२ र र १ २र १
॥ सुज्ञानम् ॥ सखाय आ । निषीदता । पुनाना
२ १ २ १ र १
या२ । प्रगायता । शिशुन्नाया२ । ज्ञैःप । रार्यि
३ ५र र १ २ २ र
भू२३४औहोवा । षतश्रियए३ ॥(२) समीवत्साम् । न
र १ २ १ र १ २र र १
मातृभायि । स्वजतागा२ । यसाधनाम् । देवावाया२
१ ३ ५र र १ २
म् । मदम् । आ२भा२३४औहोवा । द्विशवसमे३ ॥(१)
२ र र र १ २र १ र १
पुनातादा । क्षसाधनाम् । यथाशार्द्धा२ । यवीतया

* ज० गा० ४प्र० १ख० १२गा० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ र १   १ २ ५र र १
यि। यथामायित्रा२। यव। हृ२णा२३४औहोवा। य

२ १ ११११
शन्तमस्मे३उपा२३४५(३)॥ १८*॥ [२]

३ १   ३ १   ५र
॥ दैवोदासम्॥ सखा३१। यआ३१२३४। निषी।

२ २   ३ २   ३र २   ५र   २ २
दा३ता। पुना३१। नाया३१२३४। प्रगा। या३ता।

३ १   ३ २   र २   १   २   ३ २
शिशू३१म्। नया३१२३४। ज्ञैःप। रा३यिभू। षता

३ २   १   ५   ३ १   ३ २
३१। श्रिया३। औ२३४वा॥(१) समी३१। वत्सा३१२

५र   १   १   ३ २   ५र
४म्। नमा। तृ३भायिः। सृजा३१२३४। यसा।

२ १   ३र २   ३ २   ५   २
सा३नाम्। देवा३१। विया३१२३४म्। मदम्। आ

२   ३ २   ३ २   १   ५
३भायि। द्विशा ३ १। वसा३म्। औ२३४वा॥(२)

३ १   ३र २   ५र   २ २   ३ १
पुना३१। तादा३१२३४। क्षसा। धा३नाम्। यथा

३ २   ५र   २ २   ३ २   ३ २
३१शर्धा३१२३४। यवी। ता३यायि। यया३। मित्रा

* ऊ० गा० ७प्र० १ख० १८खा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



३१२३४ । यव । ऋ३णा । यशा३१ । तमा३म् । ओ २३४वा । ऊ२३४पा(३) ॥ १९ * ॥ [३]

॥ पौष्कलम् ॥ सखाया३आनि । षीदा२ ३ ४ता । पुनानाया । आगायार३४ता । शिशूनया । ज्ञैःपार्‌रा२३४५यिभूइ५इ । षतश्रिये२३४५ ॥(१) समीवा३त्सन्न । मातृ२३४भायिः । सृजातागा । यासाधा २ ३ ४नाम् । देवावियाम् । मदा२मा२३४५भाइ५इयि । द्विशवसार ३४५म् ॥(२) पुनाता३दक्ष । साधा२३४नाम् । यथा शर्द्धा । पावीता२३४यायि । यथामित्रा । यवा२रु२३ ४५णाइ५इ । यशन्तमा२३४५म् (३) ॥ १८ † ॥ [४]

॥ शौल्कम् ॥ सखा । यआओ२३४वा । निषायि ।

---

* ऊ० गा० ७प्र० १ख० १९गा० ।

† ऊ० गा० ९प्र० १ख० १८गा० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ ९ ५ २ र १र ३ १ १ १ १ १

दाताओ२३४वा । पुनानायप्रगा२यता२३४५ । शायि

२ ९ ५ १ र ३ १ १ १ १ १ २ ३

यिशाओ२३४वा । नयज्ञैःपरिभू२३४५ । षाताओ२३४

५ २ ५ र ३ १ ९ ५ २ १

वा । श्रियेऽ१ ॥(१) स्मो । वत्साओ२३४वा । नमा ।

२ ९ ५ २ १र २ १र ३ १ १ १ १ २ २

तृभाओ२३४वा । स्वजतागयसाधना२३४५म् । दायिवा

२ ५ १ ३ २ २ ९ ५

ओ२३४वा । वियन्मदमभा१यि । दायिशाओ२३४वा ।

२ ५ र ३र २ ३ ५ र १ २

वसा१म् ॥(२) पुना । तादाओ२३४वा । त्त्सा । धाना ।

२ ५ १ १र १ र २ र १ ३ १ १ १ १ १ २ ०

ओ२३४वा । यथाशर्द्धायवीतया२३४५यि । याथाओ२३

५ २ १र २ १ ३ १ १ १ १ १ २ ३ ५ २

४वा । मित्रायवरुणा२३४५ । याशाओ२३४वा । तमा

१म्(३) ॥ १५ ॥ [५] ९

अथ प्रवाजीति तृचात्मकं द्वेपदं द्वितीयं सूक्तं—

तत्र प्रथमा ।

२ ३क १र ३ १ २ ३ २ ३ १ २ ३उ ३ १ २

प्रवाज्यक्षाःसहस्रधारस्तिरःपवित्रंविवारमव्यम् ॥ १ † ॥

---

* ऋ० मा० १४प्र० २ख० १९सा० ।

† ऋ० मं० ९, ५, ११,५ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"वाजी" बलवान् वेगवान् वा "सहस्रधारः" बहुधारायुक्तः सोमः "अव्यम्" अविभवं "वारं" वालं पवित्रं "तिरः" व्यवधायकं कुर्व्वन् "प्राचाः" विविधं प्रचरति [चरतेर्लुङि रूपम्]॥

"प्रवाजी"-"प्रसुवानः"—इति पाठौ ॥ १ ॥

अथ द्वितीया।

१ २क २र ७ १ २ ३ १ २ ३ १र २र ३ २
सवाज्यचाःसहस्ररेताअद्भिर्मृजानोगोभिःश्रीणानः ॥२*॥

"सः" सोमः "अचाः" चरति। कीदृशः? "सहस्ररेतः" बहु-रेतस्कः "बहूदकः" "अद्भिः" वसतीवरीभिः "मृजानः" मृज्यमानः "गोभिः" गाविकारैः चीरादिभिः "श्रीणानः" श्रियमाणः ॥ २ ॥

अथ तृतीया।

३ १ २ ३ १र २र ३ १र २र ३ २
प्रसोमयाहीन्द्रस्यकुचानृभिर्येमाणोअद्रिभिःसुतः ॥३†॥१०

हे "सोम !" "नृभिः" ऋत्विग्भिः "येमानः" नियम्यमानः‡ "अद्रिभिः" ग्रावभिः "सुतः" अभिषुतः "इन्द्रस्य" "कुचा" [सप्तम्या डादेशः (३, ४, ३९)] कुचौ उदरभूते कलशे वा "प्रयाहि" प्रकर्षेण गच्छ [संहितायां येमान इत्यत्र णत्वम्] ॥ ३ ॥ १०

---

* ऋ० वे० ७, ५, २१, ६।

† ऋ० वे० ७, ५, २१, ७।

‡ 'येमानः—सूयमानः'-इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ २र १ २ १ १ १ र २
॥ सोहविषम् ॥ प्रवाजियत्त्वाः । सहस्रधारास्ताश्यि
५ २ १ २ १र ५
रा२३४ः । हायि । पवित्राम् । विवारा२३४ओहायि ।
२ ५ ५ १ २र १ २ १ २ १ र ०
आ२३४व्योई्हायि ॥ (१) सवाजियश्वाः । सहस्ररेताम्न
५ २ १र २र १
द्भा२३४यिः । हायि । मृजानाः । गोभायिश्रा२३४यि
५ १ ५ ५ १र २ २
हायि । णा२३४नोई्हायि ॥(२) प्रसोमयाही । इन्द्र
० ५ २र १र २ १
स्यकुत्तानुभा२३४यिः । हायि । येमानाः । अद्रिभा२
५ १ ५ ५
३४ । यिर्हायि । सू२३४तोई्हायि(३) ॥ १५ * ॥ [१]

२ र १ २ १ २ १
॥ जराबोधीयम् ॥ प्रवाजियोवा । त्वाः । सहा२
२ र १ २ ४ ५
३स्रा । धारस्तायिराः । पवायित्रा१वा२३यिवा । रम् ।
२ २ २ र १ २ १ २ १
अव्यो३४५ई । डा । सवाजियोवा । त्वाः । सहा२
२ र र १ २ ४ ऽ ५र
३स्रा । रेताअद्भायिः । मृजाना१गो२३भायिः । श्री ।
२र १ २ र १ २ १ २ १
णानो३४५ई । डा । प्रसोमयोवा । हायि । इन्द्रास्या

* ऋ० मा० ४प्र० १ख० १५सा० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२३कू । स्वानुभायिः । येमानो१आर२३द्रायि । भिः ।

सुतो३४५ई । डा(३) ॥ १ * ॥ [२] १०

अथ येसोमाइति तृचात्मकं तृतीयं सूक्तम्, †

तत्र प्रथमा ।

येसोमासःपरावतियेअर्वावतिसुन्विरे ।

येवादःशर्य्यणावति ॥ १ ‡ ॥

एतदादिभ्यामृग्भ्यामिन्द्रार्थं सर्वत्र सोमाभिषवोऽस्तीत्याह—"ये" "सोमासः" "परावति" विप्रकृष्टेऽतिदूरे¶ देशे "ये" वा "अर्वावति" अन्तिके देशे§ "सुन्विरे" अभिषूयन्ते "ये वा" "शर्य्यणावति"‖ [ कुरुक्षेत्रस्य जघनार्द्धे शर्यणावत्सञ्ज्ञाकं मधुर-रस-युक्तं सोमवत् सरोऽस्ति ] "अदः" अस्मिन् सरसि सुरम्रा ये सोमा इन्द्रायाभिषूयन्ते । ते अस्माकमभिमत-फलं ददात्विति वक्ष्यमाणेन सम्बन्धः ॥ १ ॥

---

* ऊ० गा० २२प्र० ३ख० १सा० ।

† 'यज्ञायज्ञीयमग्निष्टोमसाम'—इति ।

‡ ऋ० वे० ७, १, ५, १ ।

¶ "परावतः"—इति निघण्टौ दूर-नामसु पञ्चमं पदम् ( ३, २६ ) ।

§ "अर्वाके"—इति निघण्टावन्तिक-नामसु षष्ठमं पदम् ( २, १६ ) ।

‖ 'शर्यणावति—भूमौ'—इति वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीया ।

१ २ ३ २ ३ १ २ ७ १ २ २ २ ३ ३ २ २
यआर्जीकेषुकृत्वसुयेमध्येपस्त्यानाम् ।
२ ३ १ २ ३ १ १
येवाजनेषुपञ्चसु ॥ २ * ॥

"ये" वा सोमाः "आर्जीकेषु" ऋजीकानामदूरभवाः आर्जीकादेशास्तेषु† तथा "कृत्वसु" कृत्वानद्रुति देशाभिधानम्, तेषु‡ कर्मवत्सु देशेषु च ; किञ्च "पस्त्यानां" सरस्वत्यादीनां नदीनां¶ "मध्ये" समीपे च ये सोमा अभिषूयन्ते [ "ऋषयो वै सरस्वत्यां सत्रमासतेत्यादिषु§ नदीतीरे यज्ञकरणस्य श्रवणात् ; किञ्च "जनेषु पञ्चसु" निषाद-पञ्चमाश्चत्वारो वर्णाः पञ्चजनास्तेषु ‖ च "ये वा" सोमा अभिषुताः । ते सोमा अस्माकमभिमत-फलं ददात्वित्युत्तरेण सम्बन्धः ॥ २ ॥

---

* ऋ० वे० ७, २, ५, २ ।

† 'आर्जीकेषु—ऋजानु'—इति वि० ।

‡ 'कृत्वसु—कृतेषु स्थानेषु'—इति वि० ।

¶ 'पस्त्यानां—गृहाणाम्'—इति वि० । "पस्त्यम्—इति निघण्टौ गृह-नामसु षष्ठं पदम् ( ३, ४, ) ।

§ "ऋषयो वै सरस्वत्यां सत्रमासत । ते कवषमैलूषं सोमादनयन् दास्याः पुत्रः कितवोऽब्राह्मणः कथं नो मध्ये दीक्षिष्टेति । तं बहिर्धन्वोदवहन्नत्रैनं पिपासा हन्तु, सरस्वत्या उदकं मा पादिति"--इति ऐत० ब्रा० ।

‖ जनेषु पञ्चसु—'पञ्चजनाः, यजमानश्चत्वारश्चर्त्विजः'—इति वि० ।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ तृतीया ।

१ २ ३ २ ३२र ३१२ ३ २ ३ १ २
तेनोवृष्टिन्दिवस्परिपवन्तामासुवीर्यम् ।

३ २ ३ १ ३ १ २
स्वानादेवासइन्दवः ॥ ३ * ॥ ११

"स्वानाः" सुवानाः तत्र चात्र अभिषूयमाणा "देवासः" देवाः दीपन-शीलाः स्तुत्या वा "इन्दवः" "ग्रहेषु" चमसेषु चरन्तः, "ते" सोमाः "नः" अस्माकं "दिवस्परि" परि-शब्दः पञ्चमी-द्योतकः, अन्तरिक्षादादित्याद्वा "वृष्टिम्" [ "अग्नौ प्रास्ताहुतिः सम्यगादित्य मुपतिष्ठते । आदित्याज्जायते वृष्टिः (म० १अ० )"—इति वृष्टि-कारणत्वात् ] किञ्च "सुवीर्यम्" शोभन-वीर्योपेतम् पुत्रञ्च धनादिकं वा "आ पवन्ताम्" प्रापयन्तु । यजमानः सोमेनाभिमत-फलानि प्राप्नोति खलु ॥

"स्वानाः"-"सुवानाः"—इति पाठौ ॥ ३ ॥ ११

२र र र १ २ १ ३ ११
॥ जरावोधीयम् ॥ येसोमासोवा । परावतायि ।
२र १ २ १ र २ ४
येआर्वा२३वा । तिसुन्वायिरायि । येवादा१ःशा२३र्य्याँ ।
५र २ २ २र र १ २ १ ११
णा । वतो३४५ई । डा ॥(१) यआर्ज्जीँकोवा । षूक्त्वसू ।
२र १ १ १ र २ ४
यँमाध्या२३यिपा । स्त्रियानाम् । येवाजा१ना२३यिषू ।

---

* ऋ० ९० ७, २, ५, ४ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५　२ १　　　　२र र १　२　१　२ १
प। चसो३४५ई। तेनोवृष्टोवा। दायिवस्पराथि।
१　२　र १　　　र　२　　　४
पवान्ता२३मा। सुवीरायाम्। स्वानादा१यिवा२३सा:।
५　२ २
इ। दवो३४५ई। डा(३)॥ १६* ॥ [१ ११

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य अष्टमस्याध्यायस्य

पञ्चम: खण्ड:॥ ५॥

---

अथ षष्ठे खण्डे—

आतेवत्सइति द्वचात्मकं प्रथमं सूक्तम्,—

तत्र प्रथमा।

१　२ ३ १ र　२र　　२ १　२ ३ १ २
आतेवत्सोमनोयमत्परमाच्चित्सधस्थात्।
२ ३ १ २　　३ २
अग्नेत्वाङ्कामयेगिरा॥ १† ॥

हे "अग्ने!" "वत्स:" ऋषि: "ते" तव "मन:" "परमाच्चित्" उत्कृष्टादपि "सधस्थात्" द्युलोकात् "आ यमत्" आयमन्ति आगमयन्ति। केन साधनेन? "त्वां" "कामये"

---

* छ० आ० ४प्र० १ख० १६सा०।

† ऊ० आ० १, १, १, ८ (१भा० १०४४० )=ऋ० वे० १२, ११५=ऋ० वे० ५, ८, ११, १।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



कामया अभिलषन्त्या "गिरा" स्तुत्या ["कामये"—इत्यत्रापि श्ये आदेशः पूर्ववत्। यद्वा त्वां कामये अभिलषामि]॥

"कामये"-"कामया"—इति पाठौ॥ १॥

अथ द्वितीया।

२ ३उ १२उ २ ३ १ २ ३ २ १ २ ३ १ २
पुरुत्राहिसदृङ्ङसिदिशोविश्वाअनुप्रभुः।
२ १ २
समत्सुत्वाहवामहे॥ २ *॥

हे अग्ने! "पुरुत्रा हि" बहुषु हि देशेषु त्वं "सदृङ् असि" समान-द्रष्टा भवसि अतएव "विश्वाः" सर्वा दिश "अनु" लक्ष्य "प्रभुः" ईश्वरो भवसि। ईदृशं "त्वा" त्वां "समत्सु" सङ्ग्रामेषु रक्षणार्थं "हवामहे" आह्वयामहे॥

"दिशः"-"विदिशः"—इति पाठौ॥ २॥

अथ तृतीया।

१ २ ३ १र २र ३ १ २
समत्स्वग्निमवसेवाजयन्तोहवामहे।
१ २ ३ १ २
वाजेषुचित्रराधसम्॥ ३ †॥१२

"समत्सु" समदेषु सङ्ग्रामेषु "वाजयन्तः" बलमिच्छन्तो वयम् "अवसे" रक्षणार्थम् "अग्निं हवामहे"। कीदृशम्? "वाजेषु" सङ्ग्रामेषु "चित्रराधसम्" याचनीय-धनम्॥ ३॥१२

---

* ऋ० वे० ५, ८, ३६, ३।

† ऋ० वे० ५, ८, ३६, ४।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



॥ वात्सम् ॥ आतेवत्साः । मनोयमत् । परमात् । चित्सधार२३स्थात् । अग्नायित्वा२३का३ । मयोवा । गा ५यिरोई३हायि ॥(१) पुरुत्राहो । सदृङ्ङसि । दिशो विश्वाः । अनुप्रा२३भूः । समात्सू३त्वा३ । हवोवा । मा५द्धोई३हायि ॥(२) समत्मूवा । ग्निमवसे । वाजयन्तः हवामा२३हायि । वाजायिषू३चा३यि । त्वरोवा । धा ५सोई३हायि(३) ॥ १७ ॥ [१] १२

अथ द्वितीय-तृचे—

प्रथमा ।

त्वन्न इन्द्रा भर ओजो नृम्णं शतक्रतो विचर्षणे ।

आ वीरं पृतनासहम् ॥ १ † ॥

---

• ऊ० गा० ४ प्र० १ ख० १७ सा० ।

† छ० आ० ५, १, ९, ७ ( १ भा० ८२४ ) = ऋ० वे० ४, २, १०, १ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



हे "शतक्रतो" बहुकर्मन् ! "विचर्षणे" विद्रष्टः इन्द्र ! त्वं "नः" अस्मभ्यम् "ओजः" बलं "नृम्णं" धनं च "आ भर" आहर। "वीरं" वीर्य्योपेतम् "पृतनासहं" सेनानामभिभवितारं त्वाम् "आ" याचामह इति शेषः ॥

"आभरओजः"-आरुतामोजः"—इति पाठौ ॥ १ ॥

अथ द्वितीया।

१र २र ३१ २ ३ २ ३ १ २ ३ १ २
त्वꣳहिनःपितावसोत्वम्माताशतक्रतोबभूविथ।
१ २ ३ १ २
अथातेसुम्नमीमहे ॥ २ * ॥

हे "वसो" वासयितः ! "शतक्रतो" बहुकर्म्मन्निन्द्र ! त्वं "नः" अस्माकं "पिता" पितृवत् पालको "बभूविथ" भव "त्वं" "माता" मातृवद्धारकश्च बभूविथ। अथ च वयं "ते" तव स्वभूतं "सुम्नं" सुखम् "ईमहे" याचामहे ॥ २ ॥

अथ तृतीया।

१ २ ३ २ ३ १ २
त्वाꣳशुष्मिन्पुरुहूतवाजयन्तमुपब्रुवेसहस्कृत।
१ २ ३ १ २
सनोरास्वसुवीर्य्यम् ॥ ३ † ॥ १२

* ऋ० सं० ४, २, १०, २।

† ऋ० सं० ४, २, १०, ३।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



[ सहसा बलेन स्तोतृभिर्युक्तः कृतः सहस्कृतः ] हे "सहस्कृत" इन्द्र ! [स्तुत्या हि देवताया बलं वर्द्धते, तस्य सम्बोधनम्] —"शुष्मिन्" अतएव बलवन् ! "पुरुहुत" पुरुभिर्बहुभिर्यजमानैराहुतेन्द्र ! "वाजयन्तं" बलमिच्छयन्तं त्वाम "उपब्रुवे" उप स्तौमि। "सः" त्वं "नः" अस्मभ्यं सुवीर्यं धनं "रास्व" देहि॥

"सहस्कृत"-"शतक्रतो"—इति पाठौ ॥ ३ ॥ १३

॥ औपगवाद्यम् ॥ तुवन्नाः२इन्द्रआभरा। ओजोनृम्णं शतक्रतोविचर्षणायि। आवौ२। हौ२। ऊवा२३यि। रा३४पा। जनासाहाम्॥(१) तुवं हा३यिनः पितावसाउ। त्वम्माताशतक्रतोबभूविया। अयौ२। हौ२। ऊवा२३यि। ता३४यिसू। म्नमीमाहायि॥(२) तुवां शुष्मिन्पुरुहूता। वाजयन्तमुपब्रुवेसहस्कृता। स नौ२। हौ२। ऊवा२३यि। रा३४स्वा। सुवीरायाम्। ऐ। हा२ए३। हिया३४औहोवा। ए३। उपा२३१२३४५(३) ॥ १८ * ॥ [१] १३

---

* ऊ० गा० ४ प्र० १ ख० १८ गा० । ०



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ तृतीय-तृचे—

प्रथमा ॥

१ २ ३ १ २उ ३ १ २

यदिन्द्रचित्रमइहनास्तित्वादातमद्रिवः ।

२ ३ १ २ ३ १ २

राधस्तन्नोविदद्वसउभयाहस्त्याभर ॥ १ * ॥

हे "अद्रिवः" वज्रवन् ! "चित्र" चायनीयेन्द्र ! "त्वादातं त्वया दातव्यं यद्धनं "मे" मम "इह" अस्मिंल्लोके "नास्ति", हे "विदद्वसो" लब्धधनेन्द्र ! "नः" अस्मभ्यम् "उभया हस्ती" उभाभ्यां हस्ताभ्यां तद् "राधः" "आभर" आहर ॥

"मइह"–"मेहना"—इति छन्दोगानां बह्वृचानां पाठौ ॥१॥

अथ द्वितीया ।

१र २र ३ १ २ ३ १ २ ३ १र २र

यन्मन्यसेवरेण्यमिन्द्रद्युक्षन्तदाभर ।

३ २ ३ १ २ ३१र २र ३ १ २

विद्यामतस्यतेवयमकूपारस्यदावनः ॥ २ † ॥

हे इन्द्र ! "यत्" "द्युक्षम" अन्नं "वरेण्यं" वरणीयं "मन्यसे" "तत्" द्युक्षम् "आभर" अस्मभ्यम् । "ते" तव सम्बन्धिनो "वयं"

---

* ऋ० धा० ४, २, १, ४ (१भा० ७०४पृ०) = ऋ० वे० ४, २, १०, १।

† ऋ० वे० ४, २, १०, २।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"तस्य" तादृशस्योक्तलक्षणस्य "अकूपारस्य" [ अकुत्सितः पारो अन्तो यस्य तादृशस्यानन्तस्य "दावनः" दानस्य "विद्याम" स्याम ॥

"दावनः"-"दावने"—इति पाठौ ॥

अथ तृतीया ।

१ २ ३ २ ३ १ २ ३ २ ३ १ २ ३ २ ३ १
यत्तेदित्सुप्रराध्यम्मनोअस्तिश्रुतम्बृहत् ।
१ २ ३ १ २ ३ १ २ ३ १ २ ३ १ १
तेनदृढाचिदद्रिवआवाजन्दर्षिसातये ॥ ३* ॥ १४

॥ इति चतुर्थः प्रपाठकः ॥

हे इन्द्र ! "ते" तव "दित्सु" "प्रराध्यं" प्रकर्षेण स्तुत्यं "श्रुतं" "बृहत्" महत् यत् "मनः" "अस्ति", "तेन" मनसा हे "अद्रिवः" वज्रवन्निन्द्र ! "दृढ़ाचित्" दृढ़मपि "वाजम्" अन्नम् "आ दर्षि" आदारयसि, "सातये" अस्मत्सम्भजनाय लाभाय वा ॥

"दित्सु"-"दित्सु"—इति पाठौ ॥ ३ ॥ १४

३ ४ ५ ३ १ ४ ५
॥ वौङ्म् ॥ यदिद्रचित्तमइ । हना३ । आस्ती ।
१२ २ २ २ १ १
त्वादातमद्रिवः । राधस्ता२३न्नाः । वीवो२ । ददसा
२ १ १ २
उ । उभया२३हा । स्ताया२३ । भा२३रा३४३ ॥(१)

* ऋ० वे० ४, २, १०, ३ ।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



यन्मन्यसेवरे। णियाउम्। आयिन्द्रा। द्युक्तदाभर। विद्यामा२३ता। स्यास्या२। तेवयाम्। अकूपा२३रा। स्यादा२३। वा२३ना३४३ः॥(२) यत्तेदिक्षुप्रराधियाउम्। मामाः। अस्तिश्रुतम्बृहत्। तेनदा२३ढौ। चायिवा२यित्। अद्रिवाः। आवाजा२३दा। षायिसा२३। ता२३या३४३यि। औ२३४५ई। डा(३)॥ १८*॥ [१]

॥ वसिष्ठप्रियम्॥ यदिन्द्रा२३। चित्रमङ्गृह। नास्ती। त्वादा३तामद्रायिवो२। राधास्तन्नो३। विदा२द्वा२३४साउ। ऊभाओ२३४वा। याद्दाओ२३४वा। स्तियापूभरा॥(१) यन्मन्या२३। सेवरेणिम्। आयिन्द्रा। द्युत्ता३न्तादा१भारा२। विद्यामता३। स्यता२यिवा२३

* ऊ० गा० ४प्र० १ख० १८सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५ १ २ ३ ५ १ २ ३ ५ ४
४याम्। आकाओ२३४वा। पाराओ२३४वा। स्यदा

२ १र ४ ५र ४ ५
५नाः ॥(२) यज्ञेदी२३। ज्ञुप्राधियम्। मानाः।

२ १ ० र १ २ १ २
मस्तीश्मूलम्बृहा२त्। तेनाइढा३। चिदार२द्रा२३४यि

५ १ २ ३ ५ १ २ ३ ५ ४
वाः। भावाओ२३४वा। जान्दाओ२३४वा। षिसा५त

याषि। हो५ई। डा(३)॥ १८ * ॥ [२] १४

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य अष्टमस्याध्यायस्य
षष्ठः खण्डः † ॥ ६ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थ-महेश्वरः ॥ ८ ॥

इति श्रीमद्राजाधिराज-परमेश्वर-वैदिकमार्गप्रवर्त्तक-श्रीवीर-
बुक्क-भूपाल-साम्राज्य-धुरन्धरेण सायणाचार्य्येण
विरचिते माधवीये सामवेदार्थ-प्रकाशे
उत्तराग्रन्थे अष्टमोऽध्यायः ‡ ॥ ८ ॥

---

* ऊ० गा० १३प्र० २ख० १८सा०।

† 'समाप्तश्चैतत्सप्तममहः'—इति वि०।

‡ चतुर्थः प्रपाठकः परिसमाप्तः'—इति वि० मूलपुस्तकादिसम्मतश्चेतिशम् ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थ-महेश्वरम् ॥ ९ ॥

## ॥ अथ नवमोऽध्याय आरभ्यते* ॥

तत्र,

शिशुञ्जज्ञानमिति प्रथम-खण्डे† तृचात्मकं प्रथमं सूक्तम्,

तत्र प्रथमा ।

१ २ ३ १ २ ९ १ २
शिशुञ्जज्ञानꣳ हर्यतम्मृजन्ति
९ २ ९ १२ ३ १ २ ३ १ ९
शुम्भन्तिविप्रम्मरुतोगणेन ।
३ २ ३ १र २ ३ १र
कविर्गीर्भिष्काव्येन‡कविःसंसत्
२र २ ९ ३ १ २ ३ १ २
सोमःपवित्रमत्येतिरेभन् ॥ १ ¶ ॥

"शिशुम्" इदानीमुत्पन्नत्वाच्छिशुवत्तिष्ठन्तम्§ [यद्वा, पापान्वित मकुर्व्वन्तं विनाशयन्तम्] "जज्ञानम्" प्रादुर्भूतम्‖ अतएव

* 'इदानीमष्टमनवमखण्डात्मिंश उच्यते'—इति वि० ।

† "गायत्र-प्रभृति-साम्नां ब्राह्मणेनार्षेयमुक्तम्'—इति वि० ।

‡ "गोभिः काव्येन"—इति विसर्गमध्यपाठः ख० मु० पु० ।

¶ ऋ० वे० ७, ४, ९, ९ ।

§ 'शिशुं—शंसनीयम्'—इति वि० ।

‖ 'जज्ञानं—जायमानम्'—इति वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"हर्य्यतं" [ हर्य्य गतिकान्त्योः ( भ्वा० प० ) ]। भृमृदृशी-त्यादिना अतच्। सर्वैः काम्यमानं सोमं "मृजन्ति" मरुतः* शोधयन्ति किञ्च "विप्रं" मेधाविनं सोमं "गणे न" आत्मीयेन† समसङ्ख्याकेन "शुम्भन्ति" अलङ्कुर्वन्ति‡। ततः "कविः" क्रान्त-प्रज्ञः सोमः "काव्येन" कवि-कर्म्मणैव "कविः" शब्दयितव्यः सन् शब्दायमानः "गीर्भिः" स्तुतिभिः सह "पवित्रम्" "अत्येति" अतीत्य गच्छति॥

"विप्रम्"—इति छन्दोगाः, "वह्निम्"—इति बह्वृचाः पठन्ति॥१॥

अथ द्वितीया।

१ २ ३ १ २ ३ २ ३ २
ऋषिमनायऋषिकृत्स्वर्षाः

३ १ २ ३ १ २ ३ २
सहस्रनीथःपदवीष्कवीनाम् ¶।

३ १ ३ १ २ ३ १र २र ३
तृतीयन्धाममहिषस्सिषास

१ २ ३ २ ३ १ २ ३ २
न्त्सोमोविराजमनुराजतिष्टुप्॥२§॥

"ऋषिमनाः" सर्व्वदर्शनशीलमनस्कः, अतएव "ऋषिकृत्" सर्वस्य दर्शनकर्त्ता प्रकाशनस्य कर्त्ता "स्वर्षाः" सर्वस्य सूर्य्यस्य वा

---

* 'मरुतः—आदित्यरश्मयः'—इति वि०।

† 'गणेन—सम्पातेन'—इति वि०।

‡ 'शुम्भन्ति—पावयन्ति'—इति वि०।

¶ "पदवीः कवीनाम्"—इति विसर्गमध्यपाठः ख० मु० पाठः।

§ ऋ० वे० ७, ४, ८, २।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



सम्भक्ता: "सहस्रनीथ:" [ नीथा स्तुति: ] बहुविध-स्तुतिक: "कवीनां" क्रान्त-प्रज्ञानां मध्ये "पदवी:" स्खलितानां पदानां साधुत्वेन संयोजयिता य: सोमो विद्यते स "महिष:" महान् पूज्यो वा सोम: "तृतीयं धाम" द्युलोकं "सिषासन्" सम्भक्तुमिच्छन् "स्तुप्" स्तूयमान: सन् "विराजं" विशेषेण राजन्तं दीप्यमान मिन्द्रम् "अनुराजति" प्रकाशयति ॥.२ ॥

अथ तृतीया।

२ २३ १ २३२ ३ १ १
चमूषच्छ्येनःशकुनोविभृत्वा

३२ ३१र २र ३ १२
गोविन्दुर्द्रप्स आयुधानिबिभ्रत्।

३२ ३ १र २र ३२
अपामूर्मिं सचमानःसमुद्र

३ २ ३१ २ ३१ २
न्तुरीयन्धाममहिषोविवक्ति ॥ ३ * ॥ १

"चमूषत्" चमन्ति भक्षयन्त्यनेति चम्वश्चमसास्तेषु सीदन्† यद्वा, चम्वौ अधिषवणफलके तयोवर्त्तमान: "श्येन:" शंसनीय: "शकुन:" शक्त: सामर्थ्यकारी "विभृत्वा" [ हरतेरातोमनिनित्यादिना (३, २, ७४) क्वनिप् ] पात्रेषु विहरणशील:

---

* ऋ० वे० ७, ३, ९, ४।

† 'चमूषत्— * * *। अथवा चमूम्, सेनासु सीदति'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"गोविन्दुः" यजमानानां गवां लम्भकः* [विन्दुरिच्छुरिति उ-प्रत्ययान्तत्वेन निपातितः] "द्रप्सः" धारयन् † "अपाम्" उदकानाम् "ऊर्मिं" प्रेरकं "समुद्रम्" [अन्तरिक्षनामैतत् (निघ० १, ३)] अन्तरिक्षं "सचमानः" सेवमानः "महिषः" महान् य एवं विधः सोमः स "तुरीयं" चतुर्थं धाम चान्द्रमसं स्थानं‡ "विवक्ति" सेवते सूर्य्यलोकस्योपरि चन्द्रमलोको विद्यत इति यमः पृथिव्या अधिपतिः समावत्त्वित्यादिभिश्चन्द्रमानक्षत्राणामधिपतिः सद्यमत्वदैवित्यन्तैर्मन्त्रैर्ज्ञायते ॥ ३ ॥ १

॥ पार्थम्॥ ओ२हो२होयि। भिप्रुञ्जज्ञा। ना२९ हृय्यं। तम्मृजन्तायि। पुउभन्तिवायि। प्रा२मरु। तो गणेना। कविर्गीर्भीयिः। का२वियं। नाकविरसान्। सोमःपवायि। चा२मति। आ२३४२यि। ती२रापुयि भा६५६न्॥(१) ऋषिमनाः। या२ऋषि। कृत्स्ववर्षाः। सहस्त्रनायि। था२ःपद। वीःकवीनाम्। तृतीयन्धा।

---

* 'गोविन्दः—गावः उदकं वाक् पृथिवी आदित्यरश्मयो वा। एतानि यो विन्दति स गोवित्। विद्ज्ञाने विद्लाभे विदसत्तायाम्'—इति वि०।

† 'द्रप्सः—उदकसम्मिश्रः'—इति वि०।

‡ 'तुरीयं धाम— * * * द्रोणकलशम्'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ १ २ ३ ४ ५ २र १र १ २ १
मा३मह्नि। षःसिषासान्। सोमोविरा। जा३मनु।
२ २ ४ १ र १ २
रा३४३। जा३ता५यिष्ट६५६ ॥ (२) चिमूषच्छायि। ना
१ २ ३ ४ ५ २र १ २ १र
३ःशकु। नोविभृत्वा। गोविन्दुद्रा। प्सा३आयु।
२र१ ४ ५ २ १र १र २ १ र २ ३ ४ ५
धानिबिभ्रात्। अपामूर्मायिम्। सचमा। नःसमुद्रा
१ र १ र १ २ २
म्। ओ३हो३होयि। तुरीयन्धा। मा३मह्नि। षो३
२ ४
४३। वा३यिवा५क्का६५६यि (३) ॥ १२ * ॥ [१]

३ ४ २
॥ महावामदेव्यम् ॥ प्राऽ५यिप्रुम्। यज्ञा३ना३ए
४ ५ १ र र
हर्य्यताम्। मा। जन्तिप्रुम्भन्तिविप्रम्मरुतोगणेनकवि
र र र र र र १ १ र २ १
गीर्भिःकाव्येनाकविःसन्सोमः। पा। औ३होहायि।
२ ३र र २ १ १
वित्रा२३मतायि। एत्ये। हो३। ऊम्मा२। राऽ२यि
५ ३ ४ २ ४ ५
भो ३ ५ हायि ॥ (१) आऽ५विं। मना३या३ऋषिकृत्।
१ र र र र र र र
सू। वर्षाःसहस्रनीथःपदवीःकवीनांस्तृतीयन्धाममहिषः

* ऊ० गा० ९प्र० १ख० १२मा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



सिषासन्सोमः । वा । औ३होहायि । राजा२३मनू ।
राजौहो३ । ऊम्मा२ । ता ऽ२यिष्टो३५हायि ॥(२) चा
ऽ५मू । षच्छ्या३यिना३:शकुनाः । वायि । भृत्वागोवि
न्दुर्द्रप्स आयुधानिबिभ्रद्पामूर्म्मिꣳसचमानःसमुद्रन्तुरी ।
या । औ३होहायि । धामा२३महायि । षोवौहो३ ।
ऊम्मा२ । वा ऽ२क्षो३५हायि(३) ॥ ७ * ॥ [२]

॥ हाउउऊवायिवासिष्ठम् ॥ हायि । उऊवायि ।
भ्रिभ्रा३४औहोवा । जज्ञा । ना३ꣳहर्य्य । तम्मृजन्ता
यि । भ्रुम्भा३४औहोवा । तिवायि । प्रा३म्मरु । तो
गणेना । कवा३४औहोवा । गीर्भायिः । का३वियै ।
नाकविःसान् । सोमा३४औहोवा । पवायि । त्रा३
मति । भ्रा३४३यि । ती३रा५यिभा६५६न् ॥(१) त्र्यषा

* अ० गा० १० प्र० १ ख० ७ सा० ।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



३४औहोवा। मना:। या३ऋषि। हृत्स्ववर्षाः। स

हा३४औहोवा। हनायि। या३:पद। वी:कवीनाम्।

तृता३४औहोवा। यन्मा। मा३महि। षःसिषासान्।

सोमा३४औहोवा। विरा। जा३मनु। रा३४३। जा

३तापुयिष्टू६५६प्॥(२) चमू३४औहोवा। षच्छ्रायि।

ना३ःशकु। नोविभूत्वा। गोवा३४औहोवा। दुर्ग।

प्सा३आयु। धानिविभ्रात्। अपा३४औहोवा। ऊ

आयिम्। सचमा। नःसमुद्राम्। हायि। उक्थवा

यि। तुरा३४औहोवा। यन्मा। मा३महि। घो३४

३। वा३यिवा५क्ता६५६यि(३) ॥ ७* ॥ [३]

॥ उक्थवायिवासिष्ठम्॥ उक्थवायि। श्रिशा३४औ

होवा। जज्ञा। ना३ऽधर्य्य। तंमृजन्तायि। प्रुभा

* ऊ० गा० १७प्र० १खं० ७वा० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२र ४र ५ १ २ १ २ ३ ४ ५ २
३४औहोवा । तिवायि । प्रा३म्मरु । तोगणेना । क

२ २र ४र ५ १र २ १ र २ ३ ४ ५
वा३४औचोवा । गीर्भायिः । का३विये । नाकविःसा

२र १ २र ४र ५ १ २ १ २
न । सोमा३४औहोवा । पवायि । चा३मति । आ

२ ४ ३ २ २र ४र ५
३४३यि । तीऽ३रा५यिभा६५६न् ॥(१) ऋषा३४औहोवा ।

१ २ १ २ ३ ४ ५ ३ २ २र ४र ५
मनाः । या३ऋषि । कृत्तुवर्षाः । सहा३४औह्नोवा ।

१ २ १ २ ३ ४ ५ ३ २ २र ४र
स्रनायि । था३ःपद । वीःकवीनाम् । तृता३४औहो

५ १ १ २ ३ ४ ५ २र २
वा । अन्धा । मा३महि । षःसिषासान् । सोमा ३४

२र ४र ५ १ २ १ २ १ ४
औहोवा । विरा । जा३मनु । रा३४३ । जा३ता५

३ २ २र ४र ५ १ २
यिष्टू६५६प् ॥(२) चमू३४औहोवा । षच्छ्रायि । ना

१ २ ३ ४ ५ २र २ २र४र ५ १
३ःश्नकु । नोविभृत्वाम् । गावा३४औहोवा । दुर्ह्री ।

२ १र २र ३ ४ ५ ३ २ ३र ४र ५ १र
प्सा३आयु । धानिबिभ्रात् । अपा३४औहोवा । ऊ

२ १ र २ ३ ४ ५ ३ २ २
र्मायिम् । सचमा । नःसमुद्राम् । उक्षवायि । तु



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ २र ४र ५ १ २ १ २ १
रा३४औ३वा। यन्धा। मा३मचि। षो३४३। वा

४
३यिवा५क्षा६५६यि(३) ॥ १८ * ॥ [५]

१ १ १ १
॥ उद्वद्भदार्गवम् ॥ भिप्रसुञ्जाभ्रा२३। नं◌ऽग्र्यांता

१२ २ १ २ १
२३म्। म्हजन्तायि। शुभ्भन्तायिवा२३यि। प्रमस्तो

१ १र २ १ १र १
२३। गरोना। कविर्गीयिर्भा२३यि:। काव्येना२३:।

२ १ १र १ २ १ २
कवि:सान्। सोम:पावा२३यि। चमतायिये२३। ति

१र २ १ २ १ २ १
रेभा३ना३। ॥(१) ऋषिमाना२३। ओयऋषीकृ२३त्।

२ १ २ १ २ १ २ १र
सुवर्षा:। सहस्राना२३यि। थ:पदावा२३यि:। कवी

२ र १ २ १ २ १र
नाम्। तृतीयान्धा२३। ममहायिषा२३:। सिषासा

२र र १ २ १ २ १ २
न्। सोमोवायिरा२३। जमनूरा२३। जनिष्ठा३१उ ॥(२)

२ र १ २ १ १ १ २र
चमूषाश्ना२३यि। न:शकूनो२३। विभृत्वा। गोवि

१ २ र १ २ १ २ र १
न्दूर्द्रा२३। प्रसश्रायूधा२३। निविभ्रात्। अपामूर्मा

* ऊ॰ गा॰ १०प्र॰ १ख॰ १८सा॰।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२३यिम्। सचमाना२३ः। समुद्राम्। तुरीयान्धा२३। ममहायिषो२३। विवक्ता३१उवा२३४५(३)॥ ४ *॥ [५]

॥ वैश्वज्योतिराद्यम्॥ हाउहोवा३हायि। भिप्रुञ्ज ञ्जानांऽ३ हर्य्या३तांम्हजन्ता२३४५यि। प्रुन्भन्तिविप्रम्मरु ३तोगणेना२३४५। कविगीर्भिःकाव्ये३नाकविःसा२३४५ न्। सोमःपवित्रमती३यायितिरेभा२३४५न्॥(१) ऋषि मनायऋषी३कृत्स्वर्षा२३४५ः। सहस्रनीथःपदा३वायिः कवीना२३४५म्। तृतीयन्धाममही३षाःसिषासा२३४५ न्। सोमोविराजमनू३राजतिष्टू२३४५प्॥(२) चमूषच्छ्ये नःशकुनोविभृत्वा२३४५। गोविन्दुर्द्रप्सआयू३धानिवि भ्रा२३४५त्। अपामूर्म्मिंऽ३सचमा३नाःसमुद्राम्३४५म्।

---

* ऊ० गा० ३३प्र० २ख० ४मा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१र र ३र १ ७ ११११ २र र र
तुरीयन्धाममह्नो३षोविवक्ता२३४५यि । हाउहोवा३हायि ।
१११
वा३४५(३) ॥ ७ ॥ * [६] १

एतेसोमा इति नवर्चं द्वितीयं सूक्तं,

तत्र प्रथमा ।

३१र २र ३ २ ३१र २र ३ १ र
एतेसोमाअभिप्रियमिन्द्रस्यकाममक्षरन् ।
१२ ३ १क २र
वर्द्धन्तोअस्यवीर्यम् ॥ १ † ॥

"एते" अभिषुता इमे सोमाः "अस्य" इन्द्रस्य "वीर्य्यं" शक्तिं "वर्द्धन्तः" वर्द्धयन्तः "इन्द्रस्य" "कामं" काम्यं "प्रियं" प्रीतिकरं "समभ्यक्षरन्" अभ्यवर्षन् अभिपवन्ते ॥ १ ॥

अथ द्वितीया ।

३ १२ ३ २ ३ १२ ३ २३ १ २
पुनानासश्चमूषदोगच्छन्तोवायुमश्विना ।
१२ ३१२
तेनोधत्तसुवीर्यम् ॥ २ ‡ ॥

हे सोमाः ! "पुनानासः" पुनाना अभिषूयमाणाः "चमूषदः" ¶ चमसेषु सीदन्तः गच्छन्तः "वायुम्" "अश्विना" अश्विनौ च

---

* ऊ० गा० २३प्र० २ख० ७सा० ।

† ऋ० वे० ६, ७, ३०, १ ।  ‡ ऋ० वे० ६, ७, ३०, २ ।

¶ 'चमूषदः—भक्षणीयेषु सीदन्ति अथवा अभिषवणफलकचर्मण उपरि सीदन्ति चमूषदः'—इति वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"गच्छन्तः" प्राप्नुवन्तः ते यूयं "नः" अस्मभ्यं "सुवीर्य्यं" शोभन-वीर्य्यं "धत्तु" प्रयच्छत ॥

"धत्त"-"धान्तु"—इति पाठौ ॥ २ ॥

अथ तृतीया ।

१ २ २ १ २ २ १ २र २र
इन्द्रस्यसोमराधसेपुनानोहार्दिचोदय ।

३ २ ३ १ १ २ १ २
देवानांयोनिमासदम् ॥ ३* ॥

हे सोम ! "पुनानः" पूयमानस्त्वं "राधसे इन्द्रस्य" इन्द्रस्य संराधनाय "हार्दि"—इति हृदय-सम्बन्धि स्थानं† "चोदय" प्रेरय । अहमपि "देवानाम्" इन्द्रादीनां "योनिं" स्वर्गाख्यं स्थानम् "आसदं" प्राप्तवान् [यद्वा, देवानां यजन-साधनं यज्ञाख्यं स्थानं प्राप्तवानस्मि ॥

"देवानाम्"-"ऋतस्य"—इति पाठौ ॥ ३ ॥

अथ चतुर्थी ।

२ १ २ ३ २ १ १ २ ३ १ २ २ २ ३ १ २
मृजन्तित्वादशक्षिपोहिन्वन्तिसप्तधीतयः ।

२ २ १ २
अनुविप्राअमादिषुः ॥ ४ ‡ ॥

---

* ऋ० वे० ९, ७, ३०, ३ ।

† 'हार्दि'—हृदये'—इति वि० ।

‡ ऋ० वे० ९, ७, ३०, ४ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



हे सोम! "त्वा" त्वां "दश" दशसङ्ख्याकाः [ "क्षिपः अङ्गुलिनामैतत् ( २, ५, ३, ) ] अङ्गुलयः "मृजन्ति" शोधयन्ति। ततः "सप्त" सप्तसङ्ख्याकाः* "धीतयः" होत्रकाश्च त्वां "हिन्वन्ति" स्व-स्व-व्यापारैः प्रीणयन्ति। तथा "विप्राः" मेधाविनः स्तोतारश्च त्वाम् "अनु अमादिषुः" अनुमादयन्ति ॥४॥

अथ पञ्चमी ।

३१ १ २ १ १ ३१ २ ३ १ २र ३क २र
देवेभ्यस्त्वामदायकꣳसृजानमतिमेष्यः ।
१र २र
सङ्गोभिर्वासयामसि ॥ ५ † ॥

हे सोम! "कं" सुखभूतं "त्वा" त्वां "देवेभ्यः" देवानां "मदाय" मदार्थं "गोभिः" गोर्विकारैः पयोभिः "संवासयामः" संस्थापयामः। कीदृशम्? "मेष्यः" अवेर्लोमानि दशापवित्र रूपेण "अति सृजानम्" अत्यन्तं सृजन्तं दशापवित्ररूपेषु अवेर्लोमसु वर्त्तमानमित्यर्थः ॥ ५ ॥

अथ षष्ठी ।

३ १ ३ १ ३ १र २र ३ १र २र
पुनानःकलशेष्वावस्त्राण्यरुषोहरिः ।
२ ३ १ २
परिगव्यान्यव्यत ॥ ६ ‡ ॥

---

* 'सप्तधीतयः —बुद्धियुक्ताः सप्तर्त्विजः; धीतयः स्थापनकराः'—इति वि० ।

† ऋ० वे० ९, ७, २०, ५ ।

‡ ऋ० वे० ९, ७, २०, ६ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"पुनानः" पूयमानः "कलशेषु" द्रोणकलशेषु* आसिच्यमानः "अरुषः" आरोचमानः "हरिः" हरितवर्णः सोमः "गव्यानि" गो-सम्बन्धीनि पयःप्रभृतीनि "वस्त्राणि" वासांसि "परि अव्यत" पर्य्याच्छादयति† ॥ ६ ॥

अथ सप्तमी।

७ ९ ३ १ २      ७ २उ ३ २ ३ १ २
मघोन आपवस्वनोजहि विश्वा अपद्विषः।

२ ७ १ २ ९ १ २
इन्दोसखायमाविश ॥ ७ ‡ ॥

हे "इन्दो" सोम! "मघोनः" धनवतः "नः" अस्मान् "आ" आभिमुख्येन "पवस्व" चर "विश्वा" विश्वान् "द्विषः" द्वेष्टॄन् "अप जहि" मारय च "सखायं" मित्रभूतमिन्द्रम् "आविश" प्राप्नुहि ॥ ७ ॥

अथाष्टमी।

३ १ २      ३ १र २र      ३ १ २
नृचक्षसन्त्वावयमिन्द्रपीतꣳस्वर्विदम्।

३ १ २ ३ १र २
भक्षीमहिप्रजामिषम् ॥ ८ ¶ ॥

---

* 'कलशेषु कलशसम्बन्धिषु ग्रहचमसादिषु'—इति वि०।

† 'अव्यत—गमय'—इति वि०

‡ ऋ० वे० ९, ७, ३१, १।

¶ ऋ० वे० ९, ७, ३१, २।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



हे सोम! "नृचक्षसं" नृणां द्रष्टारं "स्वर्विदं" सर्वज्ञम्*
"इन्द्रपीतं" त्वां सेवमाना वयं "प्रजां" पुत्रादिकाम् "इषम्"
अन्नञ्च "भक्षीमहि" भजेम ॥ ८ ॥

अथ नवमी।

२ ३ ३ १र २र ३ १ २ ३ १र २र
वृष्टिन्दिवःपरिस्रवद्युम्नम्पृथिव्याअधि।
१ २ ३ १ २
सह्नोनःसोमपृत्सुधाः॥ ९ † ॥ २

हे "सोम!" त्वं "दिवः" द्युलोकाद् "वृष्टिं" वर्षं "परि-
स्रव" परितो वर्ष, "पृथिव्या अधि" [अधीति सप्तम्यर्थानुवादी]
"द्युम्नम्" अन्नञ्च उत्पादयेति शेषः। "नः" अस्माकं‡ "सहः"
बलं "पृत्सु" सङ्ग्रामेषु "धाः" धेहि ॥ ९ ॥ २

इति सामवेदार्थ प्रकाशे उत्तराग्रन्थस्य नवमस्याध्यायस्य
प्रथमः खण्डः॥ १ ॥

---

* 'स्वर्विदं—सर्वस्य वेत्तारम्'—इति वि०।

† ऋ० वे० ६, ७, २१, ३।

‡ 'नः—अस्मभ्यम्'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीये खण्डे—

सोमःपुनानइति नवर्चं सूक्तम्,

तत्र प्रथमा।

१ २  ३ १ २  ३ १ २  ३ १ २

सोमःपुनानोअर्षतिसहस्रधारोअत्यविः।

३ १र  २र  ३ २

वायोरिन्द्रस्यनिष्कृतम्॥ १ *॥

अयं "पुनानः" पावकः "सोमः" अर्षति" गच्छति। कीदृशोऽयम्? "सहस्रधारः" अपरिमितधारः "अत्यविः" अवि-शब्देन तल्लोमान्युच्यन्ते; अवेर्लोमभिर्निष्पादितं दशापवित्रमित्यर्थः, तदतिक्रम्य गच्छतीत्यत्यविः। किमर्थम्? "वायोः" "इन्द्रस्य" च पानायेति शेषः। किम्प्रति? "निष्कृतम्" [निरित्येषः समित्येतस्मिन्नर्थे] संस्कृतं पात्रं प्रति॥ १॥

अथ द्वितीया।

१ २  ३ १ २ ३ १र २र

पवमानमवस्यवोविप्रमभिप्रगायत।

३  २ ३ १ २

सुष्वाणन्देववीतये॥ २ †॥

हे "अवस्यवः" रक्षण-कामाः! उद्गात्रादयो यूयं "पवमानं" शोधकं "विप्रं" विशेषेण देवानां प्रीणयितारं विप्रवदुक्थं वा

* ऋ० वे० ९, ८, १, १।

† ऋ० वे० ९, ८, १, २।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



[अथवा विप्रइति मेधावि नामसु (निघ० ३, १५,१) मेधाविनम्] "देववीतये" देवपानाय* "सुष्वाणम्" अभिषूयमाणं सोमम् "अभि" आभिमुख्येन "प्रगायत" प्रकर्षेण स्तुत ॥ २ ॥

अथ तृतीया ।

१ २ ३ १ २ ३१ २र ३ १ २
पवन्तेवाजसातयेसोमाःसहस्रपाजसः ।
३ २ ३ १ २
गृणानादेववीतये ॥ ३ † ॥

"पवन्ते" चरन्ति "सोमाः"। किमर्थम् ? "वाजसातये" अन्नस्य लाभाय। कीदृशाः ? "सहस्रपाजसः" बहुबलाः नृणां बलप्रदा इत्यर्थः‡ "गृणानाः" [कर्मणि कर्त्तृप्रत्ययः (३,१,८५)] स्तूयमानाः। पुनः किमर्थम् ? "देववीतये" [देवानां वीतिर्गतिः प्राप्तिलक्षणं वा यस्मिन् स देववीतिः] यज्ञः, तदर्थम् [यज्ञसिद्धिः साक्षात् प्रयोजनं तद्द्वारा वाज-लाभइति ॥ ३ ॥

अथ चतुर्थी ।

३ २ ३ १ २ ३ १ २ ३ १र २र
उतनोवाजसातयेपवस्वबृहतीरिषः ।
३ १ २ ३ १ २
द्युमदिन्दोसुवीर्यम् ॥ ४ ¶ ॥

---

* 'देववीतये—देवानां भक्षणाय'—इति वि० ।

† ऋ० वे० ६, ८, १, १।

‡ 'सहस्रपाजसः—सहस्र-पान-समर्थाः'—इति वि० ।

¶ ऋ० वे० ६, ८, २, १ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



हे "इन्दो" "द्युमत्" दीप्तिमत् "सुवीर्य्यं" शोभन-वीर्य्यं सामर्थ्यञ्च "पवस्व" क्षर, शोभन-सामर्थ्योपेता धाराः पवस्वेत्यर्थः । "उत्" अथवा "नः" अस्माकं"* "वाजसातये" सङ्ग्रामाय† "बृहतीः" "इषः" द्युमत् सुवीर्यं सम्पादयितुं पवस्वेति योज्यम् ॥ ४ ॥

अथ पञ्चमी ।

१ २   ३ २उ ३ २ ३ १ २ ३ १ २
अत्याहियानानहेतृभिरसृग्रं वाजसातये ।
२उ ३ १ २ ३ १ २
विवारमव्यमाशवः ॥ ५ ‡ ॥

"वाजसातये" सङ्ग्रामाय "हियानाः" प्रेर्य्यमाणाः आशवः शीघ्रं धावन्ति तद्वत् "हेतृभिः" प्रेरकैः प्रेर्यमाणाः "आशवः" शीघ्रगामिनः सोमाः "वाजाय" अन्नलाभाय "अव्यं" "वारं" वालं दशापवित्रं "व्यत्यसृग्रम्" व्यतिसृजन्ते¶ ॥ ५ ॥

---

* 'नः—अस्मभ्यम्'—इति वि० ।

† 'वाजसातये अन्नदानार्थम्'—इति वि० ।

‡ ऋ० वे० ६, ८, २, २ ।

¶ "व्यत्यसृग्रम्"—इत्यत्र ऋगादिपादाद् "अति"—इत्युपसर्गः, ऋक्तृतीयपादाद् "वि"—इत्युपसर्गश्च सङ्गृहीतः, "अत्या"—इति श्रुतावापदस्यानर्थक्यमपि स्वीकृतमाचार्येण । विवरणकृता त्वश्विनाम दानवदित्यादिना व्याख्यातम् । परन्तूभयविधमेव व्याख्यानं पदग्रन्थविरुद्धत्वादुपेक्षणीयम्, तत्र हि—"अत्याः, हियानाः"—इति पाठ-दर्शनात् ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ षष्ठी।

१ २ ३ १ २ ३१र २र३ २ ३ १ २
तेनःसहस्रिण्ँरयिम्पवन्तामा॒ऽऽर्यम्।

३ २ ३ २ ३ १ ०
स्वानादेवासइन्दवः॥ ६ * ॥

"ते" "इन्दवः" सोमाः "नः" अस्माकं "सहस्रिणं" सहस्र-सङ्ख्या-युक्तं "रयिं" धनं "सुवीर्यं" च "आ पवन्ताम्"†। कीदृशास्ते? "स्वानाः" सुवानाः स्तूयमाना "देवासः" द्योत-नादि-गुणकाः॥

"स्वानाः"-"सुवानाः"—इति पाठौ॥ ६॥

अथ सप्तमी।

१ १ २ ३ १ २ ३ २ ३२उ ३ १ २
वाश्राअर्षन्तीन्दवोभिवत्सन्नमातरः।

३ १र १र
दधन्विरेगभस्त्योः॥ ७ ‡ ॥

"वाश्राः" शब्दयन्तः¶ "इन्दवः" सोमाः "अभ्यर्षन्ति" पात्रंप्रति वाश्राः शब्दकारिण्यो "मातरः" मातृभूता गावः

* ऋ० वे० ६, ८, २, ३।

† 'आ—आनुपूर्व्येण'—इति वि०।

‡ ऋ० वे० ६, ८, २, ४।

¶ 'वाश्राः—वाशनशीलाः'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"वत्सं न" वत्सं यथा प्रत्यागच्छन्ति तद्वत् तएव "गभस्त्योः" बाह्वोः "दधन्विरे" ध्रियन्ते च ॥

"मातरः"-"धेनवः"—इति पाठौ ॥ ७ ॥

अथाष्टमी ।

२ ३ १ २ ३ १र २र ३ १ २
जुष्टइन्द्रायमत्सरःपवमानःकनिक्रदत् ।

१२ २ ३ १ २
विश्वाअपद्विषोजहि ॥ ८ * ॥

"इन्द्राय" "जुष्टः" पर्याप्तः सोमो भवतीति शेषः "मत्सरः सोमः [ "मन्दतेस्तृप्ति-कर्मणः"—इति निरुक्तम् ] "पवमानः" पूयमानः तादृशः सोमः "कनिक्रदत्" "विश्वाः द्विषः" सर्वानस्माकं द्वेष्टॄन् "अप जहि" ॥

"पवमानः"-"पवमाना"—इति पाठौ ॥ ८ ॥

अथ नवमी ।

३ २ ३' १२ ३ १२ ३१२
अपघ्नन्तोअराव्णःपवमानाःस्वर्दृशः ।

१ २ ३१ २
योनावृतस्यसीदत ॥ ९ † ॥ ३

* ऋ० वे० ९, ८, २, १ ।
† ऋ० वे० ९, ८, १, २ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



हे "पवमानाः !" "अराव्णः" अदानान् यजमानान् "अप घ्नन्तः" हिंसन्तः "स्वर्दृशः" सर्वस्य द्रष्टारश्च* यूयम् "ऋतस्य योनौ" यज्ञस्य† स्थाने "सीदत"। अथ सोम-पानार्थमुक्तलक्षणा देवा ऋतस्य योनौ सीदतेति योज्यम् ॥ ८ ॥ ३

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य नवमस्याध्यायस्य द्वितीयः खण्डः ॥ २ ॥

---

अथ तृतीय-खण्डे—

सोमा असृग्रमिति नवर्चं विद्यमानमेकं सूक्तम्,

तत्र प्रथमा।

१ २ ३ १ २ ३ २ ३ २ ३ १ २

सोमा असृग्रमिन्दवः सुता ऋतस्य धारया।

१ २ ३ १ २

इन्द्राय मधुमत्तमाः ॥ १ ‡ ॥

"ऋतस्य" यज्ञार्थं "सुताः" अभिषुताः "मधुमत्तमाः" अतिशयेन माधुर्योपेताः "इन्दवः" सोमाः "इन्द्राय" इन्द्रार्थं "धारया" "असृग्रम्" सृज्यन्ते ॥

"धारया"-"सादने"—इति पाठौ ॥ १ ॥

---

* 'स्वर्दृशः—स्वर्गस्य लोकस्य दर्शितारः'—इति वि०।

† 'ऋतस्य—सत्यस्य यज्ञस्यान्नस्य वा'—इति वि०।

‡ ऋ० वे० ९, ७, ३८, १।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीया।

२ १र २र २ १ २ ३ २उ ३ १ २
अभिविप्रा अनूषतगावोवत्सन्नधेनवः।

२ ३ १ २ ३ १ २
इन्द्रꣳसोमस्यपीतये ॥ २ * ॥

"विप्राः" मेधाविनः† "सोमस्य" "पीतये" पानाय "इन्द्रम्" "अभि अनूषत" अभिष्टुवन्ति। तत्र दृष्टान्तः— "धेनवः" प्रीणयित्र्यो गावः "वत्सं न" वत्सं यथा पयः-पानाय अभिशब्दयन्ति तद्वत् ॥

"धेनवः"-"मातरः"—इति पाठौ ॥ २ ॥

अथ तृतीया।

३ १२ ९ १ २ ३ १-२ ३१ २ ३ २
मदच्युत्क्षतिसादनेसिन्धोरूर्मा विपश्चित्।

१ २ ३ १र २र २ २
सोमोगौरीअधिश्रितः ॥ ३ ‡ ॥

"मदच्युत्" मदकरस्य रसस्य च्यावयिता सोमः "सदने" यज्ञस्थाने "क्षेति" निवसति। एतदेव विवृणोति—"सिन्धोः" नद्याः "ऊर्मा" ऊर्मौ तरङ्गे "विपश्चित्" विद्वान् सोमः "गौरी

---

* 'विप्राः—ऋत्विजः'—इति वि०।

† ऋ० वे० ६, ७, २८, २।

‡ ऋ० वे० ६, ७, २८, ४।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अधि"* गौर्यामधि [ अधीति सप्तम्यर्थानुवादः, माध्यमिकायां वाचि गौरी गान्धर्वीति वाङ्नामैतत् ( निघ० १,११,५-६ ) ] "श्रितः" निवसति ॥ ३ ॥

अथ चतुर्थी ।

३ १र २र ३ २ ३ १ ३
दिवोनाभाविचक्षणोव्यावारे†महीयते ।

२ ३ २ ३ १ २ ३ २
सोमोयःसुक्रतुःकविः ॥ ४ ‡¶ ॥

"यः" "सुक्रतुः" सुप्रज्ञः "कविः" क्रान्त-कर्मा "विचक्षणः" विद्रष्टा स "सोमः" "दिवः" अन्तरिक्षस्य¶ "नाभा" नाभौ नाभिभूते "अव्याः" अवेः "वारे" वाले "महीयते" पूज्यते ॥४॥

अथ पञ्चमी ।

१र २र ३ २ ३ २ ३ २ ३ २ ३ १ २
यःसोमःकलशेष्वा§अन्तःपवित्रआहितः ।

२उ ३ १ २
तमिन्दुःपरिषस्वजे ॥ ५ ‖ ॥

---

* "ईदूतौ च सप्तम्यर्थे ( १, १, १९ )"—इति प्रगृह्यभावः ।

† "व्योवारे"—इति ऋ०-पाठः ।

‡ ऋ० वे० ६, ७, २८, ३ ।

¶ 'दिवः—द्युलोकस्य'—इति वि० ।

§ "कलशेष्वां"—इति ऋ०.पाठः ।

‖ ऋ० वे० ६, ७, २८, ५ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"यः" सोमः "कलशेषु" कुम्भेषु आस्ते, यश्च "पवित्रे" पवित्रस्य "अन्तः" मध्ये "आ हितः" निहितः, "तं" त्वामंशभूतं सोमम् "इन्दुः" तदभिमानी सो देवः "परिषस्वजे" प्रविशति ॥ ५ ॥

अथ षष्ठी ।

१उ २ १ २ २ १र २र ३ १ २

प्रवाचमिन्दुरिष्यतिसमुद्रस्याधिविष्टपि ।

२ ३ १ २ ३ १ २

जिन्वन्कोशम्मधुश्चुतम् ॥ ६ * ॥

"इन्दुः" सोमः [ उन्दी क्लेदने (रु० प०)—इत्यस्य रूपम् क्लेदनवांश्च ] "मधुश्चुतं" मधुनश्च्यावकं द्रोण-कलशं "जिन्वन्" प्रीणयन् पूरयन्नित्यर्थः । समुद्रस्यान्तरिक्षस्य "अधिविष्टपि" विष्टब्धे स्थाने "वाचं" "प्रेष्यति" प्रेरयति ; पवित्रे पूयमानः शब्दं करोतीत्यर्थः ॥ ६ ॥

अथ सप्तमी ।

१ २ ३ २ ३ १ १ ३२ ३ १ १ ३ १ २

नित्यस्तोत्रोवनस्पतिर्धेनामन्तःसबर्दुघाम् ।

२ १र २र ३ २

हिन्वानोमानुषायुजा ॥ ७ † ॥

"नित्यस्तोत्रः" सन्ततस्तोत्रः "वनस्पतिः" वनानां स्वामी, सोमः "मानुषा" मानुषाणि "युजा" युग्मानि‡ अहीनैकाहा-

---

* ऋ० वे० ९, ७, १८, ६ ।

† ऋ० वे० ९, ७, १८, १ ।

‡ "युजा—योजित"—इति वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



कानि* "हिन्वानः" प्रीणयन् "सबर्दुधाम्" अमृतसदृशानि प्रियवचनानि दोग्ध्रीम्† "अन्तः" स्तोतृणां मध्ये स्थितां "धेनां" स्तुतिरूपां वाचं‡ ग्टणात्विति शेषः॥

"धेनामन्तसबर्दुघाम्"-"धीनामन्तस्सबर्दुघस्सः"—इति पाठौ॥७॥

अथाष्टमी।

१ २ ३ २ ३ १ २
आपवमानधारयरयिꣳसहस्रवर्चसम्।
२ १२ ३ १ २
अस्मेइन्दोस्वाभुवम्॥८¶॥

हे "पवमान" पूयमान! पुनान! वा "इन्दो" सोम! त्वं "सहस्रवर्चसं" बहुदीप्तिं "स्वाभुवम्" शोभन-भवनं "रयिं" धनम् "अस्मे" अस्मासु "धारय" प्रक्षिपेत्यर्थः॥८॥

अथ नवमी।

३ २ ३१ ३ २ ३२उ ३ १र २र ३ २
अभिप्रियादिवःकविर्विप्रःसधारयासुतः।
१ २ ३ १ २
सोमोहिन्वेपरावति॥९§॥४

---

* दिनैकस्याद्यमेकारम्, द्वादशदिनातिरिक्तस्याद्यं वचम्, अर्वाचीनसन्तत् वासकर्म।

† 'सबर्दुघां—सुखदोग्ध्रीं'—इति वि०।

‡ 'धेनां—धेनूनाम्'—इति वि०। "धेना"—इति निघण्टौ वाङ्नामसु अन-चत्वारिंशत्तमं पदम् (१,११)।

¶ ऋ० व० ९, ७, २९, १।

§ ऋ० व० ९, ७, २९, २।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"कविः" क्रान्तकर्म्मा, "सुतः" अभिषुतः, सोमः "परावति" विप्रकृष्टे देशे स्थितः सन् "विप्रः" मेधावी "सधारया" स्वस्य धारया "दिवः" द्युलोकस्य "प्रिया" प्रियाणि स्थानानि "अभि" लक्ष्य "हिन्वे" प्रेरयति ॥

"दिवःकविः"-"दिवस्पतिः"—इति पाठौ, "हिन्वेपरावति"-"हिन्वेपरानोअर्षति"—इति च, "सुतः"-"कविः"—इति च ॥९॥ ६

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य नवमस्याध्यायस्य तृतीयः खण्डः ॥ ३ ॥

---

अथ उत्तेशुष्मास इति चतुर्थे खण्डे—

विद्यमानं पञ्चर्चं सूक्तं,

तत्र प्रथमा।

२ ३ १ २ ३ १ २ ३ १ २ ३ २
उत्तेशुष्मासईरतेसिन्धोरूर्मेरिवस्वनः।
३ १ २ ३ २
वाणस्यचोदयापविम् ॥ १ * ॥

हे सोम! "ते" तव "शुष्मासः" शुष्मा वेगाः "उत् ईरते" उद्गच्छन्ति। तत्र दृष्टान्तः—"सिन्धोः" समुद्रस्य "ऊर्मेरिव"

---

* ऋ० वे० ७, १, ७, १।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



यथा तरङ्गात् "स्वनः" ध्वनिः उद्गच्छति तद्वत्*। स त्वं "वाणस्य" विसृष्टस्य नालस्य शततन्त्रीकस्य वीणा-विशेषस्य† "पविं" [ शब्द-नामैतत् ( निघ० १, ११ ) ] शब्दं "चोदय" प्रेरय, वेगेन स्यन्दमानस्त्वं विसृष्ट-वाण-शब्द-सदृशं शब्दं कुर्व्वित्यर्थः ॥ १ ॥

अथ द्वितीया।

२ १२१२ ३१२ १२ ३१२
प्रसवेतउदीरतेतिस्रोवाचोमखस्युवः।
२उ ३२३१ ०
यदव्यएषिसानवि ॥ २ ‡ ॥

हे सोम! "ते" तव "प्रसवे" सति "मखस्युवः" यज्ञ-मिच्छतो यजमानस्य "तिस्रोवाचः" ऋग्यजुःसामात्मकानि त्रीणि वाक्यानि "उदीरते" उद्गच्छन्ति। कदेत्यत आह—"यद्" यदा "सानवि" उच्छ्रिते "अव्ये" अविमये पवित्रे पवित्रम् "एषि" गच्छसि ॥ २ ॥

अथ तृतीया।

२३ १ ३१२ ३१२ १२ ३१२
अव्यावारैःपरिप्रियꣳहरिꣳहिन्वन्त्यद्रिभिः।
१२ ३१२
पवमानम्मधुश्चुतम् ॥ ३ ¶ ॥

---

* 'सिन्धोरूर्म्मेरिव—अपामिव सञ्जातः, यादृक् तेषां स्वनः'—इति वि०।

† 'वाणस्य—वीणाविशेषस्य'—इति वि०।

‡ ऋ० वे० ७, १, ७, १।

¶ ऋ० वे० ७, १, ७, ३।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"प्रियं" देवानां प्रीतिकरं "हरिं" हरितवर्णं "अद्रिभिः" ग्रावभिः अभिषुतं "मधुश्चुतं" मधुनो रसस्य च्यावयितारं "पवमानं" सोमम् "अव्याः" अवेः "वारैः" वालैः "परि हिन्वन्ति" ऋत्विजः परिप्रेरयन्ति ॥ ३ ॥

अथ चतुर्थी ।

१ २ ३ १ २ १ ३
आपवस्वमदिन्तमपवित्रन्धारयाकवे ।
३ २ ३ १ २ ३ १ २
अर्कस्ययोनिमासदम् ॥ ४ * ॥

हे "मदिन्तम" मादयितृतम ! "कवे" क्रान्तकर्मन् ! सोम ! "अर्कस्य" अर्चनीयस्य इन्द्रस्य† "योनिम्" उदरभूतं स्थानम् "आसदं" प्राप्तुं‡ "पवित्रम्" अतीत्य "धारया" सम्पातेन "आ पवस्व" आभिमुख्येन चर ॥ ४ ॥

अथ पञ्चमी ।

१ २ ३ १ २ ३ १ ३ १ २
सपवस्वमदिन्तमगोभिरञ्जानोअक्तुभिः ।
१ २ ३ १ २
एन्द्रस्यजठरंविश ॥ ५ ¶ ॥ ५

---

* ऋ० वे० ६, ८, १५, ६ ।

† 'अर्कोद्रोणकलशः अथवा अर्कआदित्यः अथवा आदित्यरश्मयोऽर्काः अथवा अर्का मन्त्रास्तेषां योनिं स्थानम्'—इति वि० ।

‡ 'आसदम्—आसीदम्'—इति वि० ।

¶ ऋ० वे० ७, १, ७, ५ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



हे "मदिन्तम" मादयितृतम ! सोम ! "अक्तुभिः" अञ्जन-साधन-भूतैः "गोभिः" गोर्विकारैः पयोभिः "अञ्जानः" अज्य-मानः संस्तूयमानः स त्वं "पवस्व" चरत। "अनन्तरम् "इन्द्रस्य" "जठरम्" उदरम् "आविश" प्रविश॥ "एन्द्रस्यजठरं-विश"—"इन्द्रइन्द्रायपीतये"—इति पाठौ॥ ५॥ ५॥

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य नवमस्याध्यायस्य चतुर्थः खण्डः॥ ४॥

---

अथ पञ्चमे-खण्डे—

अयावीतीति तृचात्मकम् प्रथमं सूक्तम्,

तत्र प्रथमा।

३ १ ३ १र २र ३ १ २ ३ १ २ १

अयावीतीपरिस्रवयस्तइन्दोमदेष्वा।

३ १ २ ३ १र २

अवाहन्नवतीर्नव॥ १ *॥

हे "इन्दो" सोम ! "अया" अनेन रसेन "वीती" वीत्यै इन्द्रस्य भक्षणाय "परिस्रव" परिक्षर†। कीदृशेन रसेनेत्यत आह—"ते" तव "यः" रसः "मदेषु" सङ्ग्रामेषु "नवतीर्नव" नवनवति-सङ्ख्याकाः शत्रुपुरीः "अवाहन्" जघान। इमं सोमरसं पीत्वा मत्तः सन्निन्द्रो नवनवति-सङ्ख्याकाः शत्रुपुरीः जघानेति कृत्वा रसो जघानेत्युपचारः॥ १॥

---

* उ० आ० ६, १, १, ९ ( २आ० ५२४० )=ऋ० वे० ७, १, १८, १।

† 'अया—अनया, वीत्या मार्गेण परिस्रव'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीया।

१ १ २ २ ३ १ २ ३ १ २ ३ १ २
पुरः सद्य इत्थाधिये दिवोदासाय शम्बरम्।
१ ३ २ ३ २ ३ १ २
अधत्यन्तुर्वशंयदुम्॥ २ *॥

"सद्यः" एकस्मिन्नेवाहनि† "पुरः" शत्रूणां पुराणि सोम-रसः अवाहन्। "इत्था धिये" सत्य-कर्मणे‡ "दिवोदासाय" राज्ञे "शम्बरं" शत्रु-पुराणां स्वामिनम् "अध" अथ अनन्तरं "त्यं" तं "तुर्वशं" तुर्वश-नामानं राजानं दिवोदास-शत्रुं "यदुम्" यदु-नामकञ्च राजानमवाहन्। [अत्रापि सोमरसं पीत्वा मत्तः सन्निन्द्रः सर्वमेतदकार्षीदिति सोमरसे कर्त्तृत्वमुप-चर्यते॥ २॥

अथ तृतीया।

१ २ ३ १ २ ३ १२ १२ ३ १ २
परिनो अश्वमश्वविद्गोमदिन्दो हिरण्यवत्।
१ १ ३ २ ३ १ २
क्षरासहस्रिणीरिषः॥ ३ ¶॥ ६

हे सोम! "अश्वविद्" अश्वस्य लम्भकः त्वं "नः" अस्माकम् "अश्वं" "गोमत्" गोयुक्तं "हिरण्यवत्" हिरण्योपेतं पश्वादि-

---

* ऋ० वे० ७, १, १८, २।

† 'सद्यः—एकादेव'—इति वि०।

‡ 'इत्था—इदानीन'—इति वि०।

¶ ऋ० वे० ७, १, १८, ३।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



धनञ्च "परि चर"। अपिच "सहस्रिणीः" बह्वनि* "इषः" अन्नानि चर॥

"परिनः"-"परिणः"—इति पाठौ॥ ३॥ ६

अथ तृचात्मके द्वितीय-सूक्ते—

तत्र प्रथमा।

२ १ २ ३ २उ ३ २ ३ १ २
अपघ्नन्पवतेमृधोपसोमोअराव्णः।
२ ३ १ २ ३ २
गच्छन्निन्द्रस्यनिःकृतम् †॥ १ ‡॥

"सोमः" "मृधः" हिंसकान् शत्रून् "अपघ्नन्" मारयन् "अराव्णः" सक्तौ सत्यां धनानामदातॄंस "अप" घ्नन्¶ "इन्द्रस्य" "निष्कृतं" स्थानं "गच्छन्" प्राप्नुवन् "पवते" धारया क्षरति॥ १॥

अथ द्वितीया।

३१ २ ३ १र २र३१२ ३ १र २र
महोनोरायआभरपवमानजहीमृधः।
१ २ २ २३१२
रास्वेन्दोवीरवद्यशः॥ २ §॥

---

* 'सहस्रिणीः—सहस्रसम्मिता इषः अन्नानि'—इति वि०।

† "निष्कृतम्"—इति ख० पु० मु० पु० पाठः।

‡ ऋ० ब्रा० ६, १, २, १४ (२भा० १९ष०) = ऋ० वे० ७, १, २२५।

¶ अपेत्युपसर्गदर्शनात् घ्नन्नित्यस्यावृत्तिः।

§ ऋ० वे० ७, १, १३, १।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



हे "पवमान!" "इन्दो" सोम! "नः" अस्माकं "महः" महान्ति "रायः" धनानि "आ भर" आहर "मृधः" हिंसकान् शत्रूंश्च "जहि"* मारय "वीरवत्" पुत्राद्युपेतं "यशः" कीर्त्तिञ्च "रास्व" अस्मभ्यं देहि ॥ २ ॥

अथ तृतीया ।

१ २ ३१२ १३ २ ० ० १ २ ३ १ २

नत्वाशतञ्चनह्रुतोराधोदित्सन्तमामिनन् ।

१ २ ३ १ २ ० १ २

यत्पुनानोमखस्यसे ॥ ३ † ॥ ७

हे सोम! "राधः" धनं‡ "दित्सन्तम्" आदातुमिच्छन्तं "त्वा" त्वां "शतञ्चन" बहवोऽपि "ह्रुतः" हिंसकाः शत्रवः¶ "न आमिनन्" न हिंसन्ति। कदा? इत्यत्राह—"यद्" यदा "पुनानः" पूयमानः त्वं "मखस्यसे" धनं धातुमिच्छसि§ ॥३॥७

अथ तृचात्मके तृतीय-सूक्ते—

प्रथमा ।

२ १ २ ३ १ २२ २ १२३ १ २

अयापवस्वधारयाययासूर्यमरोचयः ।

३ १र २र ३ २

हिन्वानोमानुषीरपः ॥ १ ‖ ॥

---

* संहितायां "जही"—इति दीर्घान्तं श्रूयते, द्व्यच इति (६,३,१३५) तत्र दीर्घः।

† ऋ० वे० ७, १, २३, २।

‡ 'राधः—धनस्य'—इति वि०।

¶ 'ह्रुतः—हरणशीलाः'—इति वि०।

§ 'मखस्यसे—यज्ञसमये यज्ञं त्वं यदा करोषि'—इति वि०।

‖ छ० आ० ६, १, १, ७ (२भा० ५०४०)=ऋ० वे० ७, १, २१, १।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



हे सोम ! "मानुषीः" मनुष्याणां हितानि "अपः" उदकानि "हिन्वानः" प्रेरयन् त्वं "यया" "धारया" "सूर्य्यम्" "अरोचयः" प्रकाशयसि तया "अया" अनया धारया "पवस्व" क्षर ॥ १ ॥

अथ द्वितीया ।

१ २ ३ २३१ २ ३ १ २ ३ १र २र
अयुक्तसूरएतशम्पवमानोमनावधि ।

३ १ २ ३ १ १
अन्तरिक्षेणयातवे ॥ २ * ॥

"पवमानः" पूयमानः सोमः "मनावधि" मनुर्मनुष्यस्तस्मिन् मनुष्यार्थं। "अन्तरिक्षेण" "यातवे" गन्तुं "सूरः" प्रेरकस्यादित्यस्य "एतशम्" [अश्वनामैतत् (निघ० १, १४, १०)] अश्वं "अयुक्त" युङ्क्ते ॥ २ ॥

अथ तृतीया ।

३ १उ २ ३ २ ३ ३ १ २ ३ १ २
उतत्याहरितोरथेसूरोअयुक्तयातवे ।

२३ ३ १ १ २ ३ २
इन्दुरिन्द्रइतिब्रुवन् † ॥ ३ ‡ ॥ ८

"उत" अपिच "इन्दुः" सोमः "इन्द्र इति ब्रुवन्" "त्याः"

---

* ऋ० वे० ७, १, २१, २।

† "ब्रूवन्"—इति क० पु० पाठः ।

‡ ऋ० वे० ७, १, २, १, ७।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



ताम् "हरितः" हरितवर्णान् अश्वान् "सूरः" सूर्यस्य "रथे" "यातवे" गन्तुम् "अयुक्त" युनक्ति* ॥

"रथे"-"रश्म"—इति पाठौ ॥ ३ ॥ ८

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य नवमस्याध्यायस्य पञ्चमः खण्डः† ॥ ५ ॥

---

अथ षष्ठे खण्डे‡—

अग्निंवइति त्र्यृचात्मकं प्रथमं सूक्तम्,

तत्र प्रथमा।

३ १ २ ३ १२ ३ १ २ ३ २ ३
अग्निंवोदेवमग्निभिःसजोषा

१ २　३ १ २ ३ १ २
यजिष्ठन्दूतमध्वरेकृणुध्वम्।

१र　२ ३ १ २　३ २ ३
योमर्त्येषुनिध्रुविर्ऋतावा

१ २　३ १ २　३ २
तपुर्मूर्द्धाघृतान्नःपावकः ॥ १ ¶ ॥

---

* 'एतदुक्तम्भवति—यदा सोमस्य इन्द्रस्य चाह्वानं क्रियते तदा सूर्यो रथे नियुक्तः स्यात् यातवे गमनाय'—इति वि०।

† 'उक्तं वक्ष्यिष्यमाणम्'—इति वि०।

‡ 'इदानीमाग्नेयानि'—इति वि०।

¶ य० वे० १५, ६१=ऋ० वे० ५, १, २, १।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



हे देवाः! "वः" यूयं "देवं" द्योतमानम् "अग्निम्" "अध्वरे" कौटिल्य-रहिते यज्ञे "दूतं" "कृणुध्वं" कुरुत। कीदृशम्? "अग्निभिः" अन्यैः "सजोषा" सजोषसम् [द्वितीयार्थे प्रथमा (३, १, ८५)] "यजिष्ठं" यष्टृतमं* "यः" अग्निः देवोऽपि सन् "मर्त्त्येषु" "निध्रुविः" नितरां ध्रुवस्तिष्ठति। कीदृशः? "ऋतावा" यज्ञवान् सत्यवान् वा "तपुर्मूर्द्धा" तापकं तेजः† "घृतान्नः पावकः" शोधकं तमग्निं दूतं कृणुध्वमिति योजना॥१

अथ द्वितीया।

१ ३२३ १र २र ३ २
प्रोथदश्वोनयवसेविष्यन्

३१ ३२ ३१२३ १ २
यदामहःसंवरणाद्व्यस्थात्।

१ २ ३ २ ३ १२ ३ १र
आदस्यवातोअनुवातिशोचि

१२र ३ १ २ ३ १ २
रधस्मतेव्रजनङ्कृष्णमस्ति॥ २ ‡॥

"यवसे" घासे "अविष्यन्" भक्षयन्¶ "प्रोथत्" शब्दं कुर्व्वन् सञ्चरन् वा "अश्वो न" अश्व इव "महः" महतः "संवर-

---

* 'यजिष्ठं—यजनीयस्'—इति वि०।

† 'तपुः—तापनशीलः, मूर्द्धा—प्रधानभूतः'—इति वि०।

‡ ऋ० वे० ५, २, ३, २।

¶ 'यवसे—सन्निधानभूते। अथवा द्वितीयार्थे सप्तमी। यवसमन्नविष्यन् भक्षयन्'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



ष्यात्" निरोधात् दावरूपोऽग्निः "यदा" "व्यस्थात्" संवृतेषु वृत्तेषु वितिष्ठते, "आत्" तदा "अस्य" अग्नेः "शोचिः" अर्च्चिः "अनु वातः वाति"। अथ प्रत्यक्षस्तुतिः—"अध" अथानन्तरं हे अग्ने ! "ते" तव "व्रजनं" वर्त्म "कृष्णमस्ति"। "स्म"—इति पूरणम् ॥ २ ॥

अथ तृतीया ।

१ २र ३ १ २ ३ २उ
उद्यस्यतेनवजातस्यवृष्णो-

३ १ २ ३ १ २ ३ २
ग्नेचरन्त्यजराइधानाः ।

२ ३ १ २ ३ २ ३ १ २ ३
अच्छाद्यामरुषोधूमएषि

२ ३ १ २ ३ १ २ ३ २ ३ १
सन्दूतोअग्नईयसेहिदेवान् ॥ ३ * ॥ ९

हे "अग्ने ! " "नवजातस्य" नूतन-प्रादुर्भूतस्य "वृष्णः" वर्षितुः "यस्य" "ते" तव "अजरा" जरा-रहिता ज्वाला "इधानाः" इध्यमाना या "उच्चरन्ति" उद्गच्छन्ति। हे "अग्ने !" "अरुषः" आरोचमानः "धूमः" धूमयुक्तः "दूतः" त्वं "द्यामच्छ" † द्युलोकं प्रति "समेषि" सम्यग् गच्छसि, पश्चात् तत्रत्यान् "देवान्" इन्द्रादीन् "ईयसे हि" प्राप्नोषि खलु, [ यद्वा, हे

* ऋ० वे० ५, २, ३, ३।

† 'अच्छ—आप्तुम्'—इति वि०। संहितायाम् "अच्छा"—इति दीर्घान्तं श्रूयते, तत्र निपातस्य चेति दीर्घः।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अग्ने ! त्वदीयो यो धूमः द्युलोकं प्रति एषि गच्छति, पुरुषव्यत्ययः ; त्वमपि देवान् प्राप्नोषि ॥

"एषि"-"एति"—इति पाठौ ॥ ३ ॥ ९

अथ तमिन्द्रमिति त्र्यचात्मकं द्वितीयं सूक्तम्,*

तत्र प्रथमा ।

१र २र ३ २ ३ २ ३ १ २
तमिन्द्रंवाजयामसिमहेवृत्रायहन्तवे ।
१ २र ३ १ २
सवृषावृषभोभुवत् ॥ १ † ॥

यजमाना आहुः—"तं" पूर्वोक्तम् "इन्द्रं" "वाजयामसि" वाजयामः सोमेन स्तुतिभिः "वाजवन्तं" बलवन्तं कुर्मः । किमर्थम् ? "महे" महान्तं "वृत्राय" अपामावरकं वृत्रासुरं "हन्तवे" हन्तुं सोम-पानेन मत्तः स्तुतिभि र्वा स्तुतः सन् वृत्रहन्तवे [ वाजयामसि—वाजवन्तं करोतीत्यर्थे "तत्करोतीति ( ३, १, २५ वा० ) णिच्, "णाविष्ठवत् ( ३, १, २५वा० )"—इति णेरिष्ठवद्भावात् "टेः ( ६, ४, १५५ )"—इति टि-लोपः, "विन्मतोर्लुक् ( ५, ३, ६५ )"—इति मतुपो लुक् ]। "वृषा" धनानां सेक्ता दाता "सः" इन्द्रः "वृषभः" अस्माकं स्तोतॄणां सोमस्य दातॄणां धनादि-सेचको दाता "भुवत्" भवतु ॥ १ ॥

---

* 'मैत्रावरुणसाम्यम्'—इति वि० ।

† छ० आ० २, १, ३, ५ ( १आ० २९६८० )=ऋ० वे० ९, ९, २१, १ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीया।

२ ३ १र २र ३ १र २र ३ १र २र ३ २

इन्द्रःसदामनेकृतओजिष्ठःसबलेहितः।

३ ० ३ २उ ३ २

द्युम्नीश्लोकीससोम्यः॥ २ *॥

"सः" इन्द्रः "दामने" स्तोतृभ्यः धनादि-दानायैव "कृतः" प्रजापतिना सृष्टः। किञ्च "ओजिष्ठः" ओजस्वितमः "सः" एवेन्द्रः "बले" बलवति सोमे प्रजापतिना सृष्टिकाले निहितः सोम-पानार्थञ्च निहित इत्यर्थः। "द्युम्नी" ["द्युम्नं द्योततेर्यशो वान्नं वेति (निरु० ने० ५, ५) यास्केनोक्तत्वात्] यशस्वी अन्नवान् वा अतएव "श्लोकी" श्लोकः स्तुतिः तद्वान्† "सः" इन्द्रः "सोम्यः" सोमार्हो भवति‡॥

"बले"-"मदे"—इति पाठौ॥ २॥

अथ तृतीया।

३ २उ ३ १र २र ३ १ २ ३ १ २

गिरावज्रोनसम्भृतःसबलोअनपच्युतः।

३ २ ३ १र २र

ववक्षउग्रोअस्तृतः॥ ३ ¶॥ १०

---

* ऋ० वे० ६, ६, १२, ३।

† 'श्लोकी—श्लोकैर्मन्त्रैर्योऽतिशयो गीयते सः श्लोकी'—इति वि०।

‡ 'सोमैर्यः सम्पद्यते स सोम्यः'—इति वि०। "सोममर्हति यः"—इति] पा० ४, ४, १३७।

¶ ऋ० वे० ६, ६, १०, ४।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"गिरा" स्तुति-लक्षणया वाचा स्तोतृभिः "सम्भृतः" उत्पादितः तीक्ष्णीकृतः। तत्र दृष्टान्तः—"वज्रेण" वज्रं आयुधं तत्कर्त्तृभिः शितधारो यथा भवति तीक्ष्णीक्रियते तद्वत् स्तोतृभिः स्तुत्या सम्भृतः, अतएव "सबलः" बल-सहितः तस्माद् "अनपच्युतः" परैरप्रच्युतः अनभिगतइत्यर्थः, तादृशः "उग्रः" महान् "अस्तृतः" युद्धे शत्रुभिरहिंसितइन्द्रः "ववक्षे" स्तोतृभ्यो धनादिकं वोढुमिच्छति ॥

"उग्रः"-"ऋष्वः"—इति पाठौ ॥ ३ ॥ १०

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य नवमस्याध्यायस्य षष्ठः खण्डः* ॥ ६ ॥

---

अथ सप्तम-खण्डे †-०-

अध्वर्योअद्रिभिरिति त्र्यृचात्मकं प्रथमं सूक्तम्,‡

तत्र प्रथमा¶॥ ॥

१ २ ३ १ २ ३ १र २र१ २ ३ १ २
अध्वर्योअद्रिभिःसुतꣳसोमम्पवित्रआनय।

३ १ २ ३ १ २
पुनाहीन्द्रायपातवे॥ १ ¶ ॥

---

* 'इन्द्रेऽग्नानमोऽहदित्यैन्द्राग्नम्'—इति वि०। अतोऽनन्तरं विनियोक्ष्यमाणीति तदभिप्रायः। श्रुतस्य तदिहैव द्वितीये( ९,१, ८,१ = २भा० २११पृ०)प्रपाठके।

† 'उक्तान्याज्यानि, इदानीं माध्यन्दिनः पवमानः'—इति वि०।

‡ 'गायत्रप्रभृतीनि सामानि ब्राह्मणेनोक्तान्यार्षाणि—इति वि०।

¶ छ० आ० ६, १, २, ३ (२भा० ५७पृ०)=ऋ० वे० ७, १, ८, १।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



हे "अध्वर्यो !" "अद्रिभिः" ग्रावभिः "सुतम्" अभिषुतं "सोमं" "पवित्रे" "आनय" प्रापय। एवदेव दर्शयति— "इन्द्राय" इन्द्रस्य "पातवे" पानाय "पुनाहि" पुनीहि पावय॥

"आनय"-"आसृज"—इति पाठौ, "पुनाहि"-"पुनीहि"—इति च॥ १॥

अथ द्वितीया।

१११२ ३ १२ १२३ क२ २र
तवत्यइन्दोअन्धसोदेवामधोर्व्याश्नत।
१२ ३ १२
पवमानस्यमरुतः॥ २ *॥

हे "इन्दो" सोम ! "तव" सम्बन्धिनं "मधोः" मदकरस्य "पवमानस्य" पूयमानस्य "अन्धसः" अन्नं [ तत्र कर्मणि षष्ठी (२, १, २५)] "त्ये" ते इमे "देवाः" इन्द्रादयो "मरुतः" † एवम्भूतमन्नं "व्याश्नत" व्याप्नुवन्तीत्यर्थः॥

"व्याश्नत"-व्यश्नुत"—इति पाठौ॥ २॥

अथ तृतीया।

३ १ ३ १ २ ३२उ ३ १ २ ३ १ २
दिवःपीयूषमुत्तमꣳसोममिन्द्रायवज्रिणे।
१ २ ३ १ २
सुनोतामधुमत्तमम्॥ ३ ‡॥ ११

---

* ऋ० वे० ७, १, ८, २।

† 'मरुतः—मरुतो देवाः अथवा मरुतः रश्मयः'—इति वि०।

‡ ऋ० वे० ७, १, ८, ३।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



हे अध्वर्यवः ! यूयं "मधुमत्तमम्" अतिशयेन माधुर्योपेतं "दिवः" द्युलोकस्य "पीयूषम्" अमृतभूतम् "उत्तमं" श्रेष्ठं "सोमं" "वज्रिणे" वज्रवते "इन्द्राय" "सुनोत"* अभिषुणुत ॥ ३ ॥ ११

२ १ ५ २ १ २ २
॥ वैरूपम्† ॥ अध्वर्य्योर२३४आ । द्रिभायिःसू३ता३म् ।
१र ३ ५ १ २ १ र २
सोमांपार२३४वी । चाआ१नाया २ । पुना२३ं । हौन्द्रा३४
५र र २१र२३११११ २ १ ५ २र
औहोवा । यपात्तवे२३४५ ॥(१) तवत्या२३४ई । दो
१ २ २ १र ३ ५ १ २
आन्धा३सा३ः । देवा२मा२३४धोः । वाया१श्चाता २ ।
१ र २ ५र र २ १ ३ ३ १ १ १ १
पवा२३ । माना३४औहोवा । स्यमरुता२ ३ ४ ५ः ॥(२)
२ १ ५ २ १ २ २ १र ३ ५
दिवःपी२३४यू । षमुत्ता३मा३म् । सोमा२मा२३४ईन्द्रा ।
१ ० १ र २ ५र र
यावज्रायिणा २ंयं । सुनो२३ । तामा३४औहोवा ।
२ १ २ २ १ १ १ १
धुमत्तमा२३४५म्(३) ॥ २० ‡ ॥ [१]

---

* संहितायां "सुनोता"—इत्याकारान्त' श्रूयते, तत्र द्व्यचोतस्तिङ इत्येतस्मात्तिङ इति (६, ३, १३५) योगविभागाद्दीर्घः ।

† "गाथवी वैरूपम्"—इति ख० पु० पाठः ।

‡ क० गा० ४प्र० १ख० २०सा० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ २र १ २ २
॥ आष्टुभार्गवम्॥ अध्वर्य्योअद्रि। भिःसूइताम्।
१ २ १ ३ ५ १ २
सोमम्पवाइयि। चाआरनार२३४या। पुनाह्याश्यिन्द्रा
३१ १ ५ ५ १२१ र २
२। यपा३। ता२३४वो६हायि॥(१) तवत्यइन्दो। अ
२ १ र २ १ ३ ५ १
न्धाइसाः। दायिवामधोइः। वायार्ग्राश्२३४ता। पवा
२ ३ २ २ ५ ५ २१ २र
माश्नार२। स्यमा३। रू२३४तो६हायि॥(२) दिवःपी
२र २ २ १ २ १ २
यूषम्। उत्ताइमाम्। सोममिन्द्रा३। यावार्ज्ञार३
५ १ २ ३२ १ ५
४यिणायि। सुनोता१मार२। धुमा३। ता२३४ मो ६
५
हायि(३)॥ १ *॥ [२]

२ र १ २ १ २ २
॥ मार्गीयवम्† ॥ अध्वौहोवा। य्योंआर२। द्रिभा
३ ५ १र २ १ २ १ र
यिःसू२३४ताम्। सोमम्पवि। चआना१यार२। पुना।
२ २ ३ ५ १ ३ ५र र
हा। औ३होयि। ही२३४न्द्रा। यार्पार३४औहोवा।
२ १ १११ १र १ १ १ २र
ए३। तवे२३४५॥(१) तवौहोवा। त्याआर२यि। दो

---

* ऊ० गा० ४प्र० २ख० १सा०।

† "मार्गीयवाद्यम्"—इति ख० पु० पाठः।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ २ ५ १२ २ १ २ १ २ १ २
अन्धा२३४सः । देवामधोः । वियाशाश्ता२ । पवा ।

२ २ ३ ५ १ ३ ५२ २
हा । औ३होयि । मा२३४ना । स्वा२मा२३४औहो

२ १ ११११ १२ १ २ १
वा । ए३ । ऋता२३४५ः ॥(२) दिवौहोवा । पीयू२ ।

२ १ २ ५ १२ २ २ १ २
षमुत्ता२३४माम् । सोममिन्द्रा । यवाज्ञा१यिणा२यि ।

१२ २ २ २ ५ १ २
सुनो । हा । औ३होयि । ता२३४मा । धू२मा२३४

५२ २ २ १ ११११
औहोवा । ए३तमा२३४५म् (३) ॥ २ * ॥ [३]

२ २ २ १२
॥ सौमित्रम् ॥ अध्वर्यो अद्रिभिः सुता३मे । सोम

१ २ २ १ २ २
म्पवित्रे । आ२१२३ । नया३४३ । पू२३ना । यीन्द्रा

१ ४ ५ ४ ५ २ २
२ओ२३ । यपोवा । ता५ ।६हायि ॥(१) तवत्यइन्दो

२ १२२२२ २
अन्धसा३ए । देवामधोर्वि । आ२१२३ । याता ३ ४ ३ ।

१ २ २ १ ४ ५ ४ ५
पा२३वा । माना२ओ२३ । स्यसोवा । ह५ मो ६ हा

२ २ २ १ १२ २१
यि ॥(२) दिवःपीयूषमुत्तमा३मे । सोममिन्द्राय । वा

* ऊ० गा० ४प्र० १ख० २सा० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२१२३। जिणा३४३यि। सूर३नो। तामा २ओर३।
खुभोवा। ता५मो६हायि(३) ॥ ३ * ॥ [४]

॥ ऐटतम् ॥ अध्व। एआध्वा। यौअद्रि। आ३
यिः। द्रा२रयिभा२३४औहोवा। सू२३४ताम्। सोमा
स्या२३४वी। चआ३। चा२आ२३४औहोवा। ना२३
४था। पुनाहा२३४यिन्द्रा। यपा३। या२पा२३४औ
होवा। ता२३४वे ॥(१) तव। एतावा। त्यइन्दो। आ३।
हो२आ२३४औहोवा। धा२३४साः। देवामा२३४धोः।
वियाइ। वा२या२३४औहोवा। श्रा२३४ता। पवामा
२३४ना। स्यमा३। स्या२मा२३४औहोवा। रु२३४
ताः ॥(२) दिवः। एदायिवाः। पीयूषम्। ऊ३। षा
२मू२३४औहोवा। ता२३४माम्। सोमामा२३४यिन्द्रा।

* ऊ० गा० ४प्र० २ख० २सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



यवा३। या२वा२३४औहोवा। औ२३४णे। सुनोता २३४मा। धुमा ३। धू२मा२३४औहोवा। ता२३४ मा(३) ॥ ४ * ॥ [५]

॥ धुरासाकमश्वम् ॥ अध्वर्य्याआ३। हौ३हो३१। द्रि भिःसुता३म्। हौ३हो३१यि। सोमम्पवा३यि। हौ३ हो३१। नआनया३। हौ३हो३१यि। पुनाहीन्द्रा ३। हौ३हो३१। यपातवा३यि। हौ३हो३१२३४५ई। डा ॥(१) तवत्यआ३। हौ३हो३१। दोअन्धसा३ः। हौ३हो३१ यि। देवामधो३ः। हौ३हो३१यि। वियाशता३। हौ ३हो३१यि। पवमाना३। हौ३हो३१। स्यमहता:३। हौ३हो३१२३४५ई। डा ॥(२) दिवःपीयू३। हौ३हो३ १। षमुत्तमा३म्। हौ३हो३१यि। सोममिन्द्रा ३।

* ऊ० गा० ४प्र० २ख० ४सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



हौ३हो३१ । यवञ्चिणा३यि । हौ३हो३१यि । सुनोतामा

३ । हौ३हो३१ । धुमत्तमा३म् । हौ३हो३१२३४५ई ।

डा(३) ॥ ५ * ॥ [६]

॥ विलम्बसौपर्णम् ॥ अध्वर्यो अद्रिभिः सुतम् । ईय

इयाहायि । सोमम्पवित्रआ । हा३हा३यि । ना२३४

या । पूना३उवा३ । हा२यिन्द्रा२३४औहोवा । यपा

तवे२३४५ ॥(१) तवत्यइन्दो अन्धसः । ईयईयाहायि ।

देवामधोविंया । हा३हा३यि । आ२३४ता । पावा३

उवा३ । मा२ना२३४औहोवा । स्यमरुता२३४५: ॥(२)

दिवःपीयूषमुत्तमम् । ईयइयाहायि । सोममिन्द्रायवा ।

हा३हा३ । ज्रा२३४यिणायि । सूना३उवा३ । ता२मा

२३४औहोवा । धुमत्तमा२३४५म् (३) ॥ ६ † ॥ [७]

---

* ऊ० गा० ४ प्र० २ ख० ५ सा० ।

† ऊ० गा० ४ प्र० २ ख० ६ सा० ।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



॥ सौपर्णम् * ॥ अध्वर्य्यो३ओवा। द्रायिभायिःसू२३४
ताम्। सोमाम्यवायि। च्आ२र्ना२३४या। पू२ना।
हा२३यिन्द्रा। यापातवा। औ३होवा ॥(१) तवत्य
ओवा। हो अन्धा२३४सा:। देवामधा:। विया२शा
२३४ता। पा२वा। मा२३ना। व्यामरुता। औ३
होवा ॥(२) दिव:पीयोवा। षामुत्ता२३४माम्। सो
मामिन्द्रा। यवा२ज्ञा२३४षिणायि। सू२नो। ता२३
सा। धूमत्तमाम्। औ२३होवा। हो ५ ई। डा(३)
॥ १३ † ॥ [८]

॥ रोहितकुलीयोत्तरम् ॥ अध्वर्य्यो अद्रिभायि:। सु
ता२म्। सोमम्यवि च्आनार२या। पूना२हायिन्द्रा२१।
यपो२३४वा। ता५वो६हायि ॥(१) तवत्यइन्दोआ।

* "ऐडसौपर्णम्"—इति ख० पु० पाठः।

† ऊ० गा० १६प्र० २ख० १२गा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ १र र २१र २ १ १
धसा २ः । देवामधोर्वियाशा२३ता । पावा २माना२३ ।

२ १ ५ ४ ५ २१ २र १र२१ २
स्यमो२३४वा । ह५तो६हायि ॥(२) दिवःपीयूषम् । त

१र र २१ २ १ १
मा २म् । सोममिन्द्रायवज्रा२३यिणायि । सूनो २तामा

२ १ ५ ४ ५
२३ । धुमो२३४वा । ता५मो६हायि(३) ॥ १४ * ॥ [९] ११

धर्त्तादिवइति तृचात्मकं द्वितीयं सूक्तम्।†

तत्र प्रथमा ।

३ २ ३ २ ३ ० ३ २ ३
धर्त्तादिवःपवतेकृत्व्योरसो

१ २ ३ १ २ ३ २ ३ १ २
दक्षोदेवानामनुमाद्योनृभिः ।

१ २ २ २उ ३ १र २र २
हरिःसृजानोअत्योनसत्वभि

२ ३ १ २ ३ २
र्वृथापाजाꣳसिकृणुषेनदीष्वा ॥ १ ‡ ॥

---

* ऊ० गा० १६ प्र० २ ख० १४ सा० ।

† 'अभिसोमासआयवइति षृचत्यः, धर्त्तादिवो जगत्यः त्रिष्टुभो रूपेण'—इति वि० । यथा पूर्वमभिसोमासइति (२, १, ९, १=३भा० ४०१पृ० ) तथैवात्र धर्त्ता दिवइति भावः ।

‡ छ० आ० ६, २, २, ५ ( २भा० १८९पृ० )=ऋ० वे० ७, १, १, १ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"धर्त्ता" सर्वस्य धारकः सोमः "दिवः" अन्तरिक्षात् अन्तरिक्षस्थितात् दशापवित्रात् "पवते" पूयते। कीदृशः सोमः? "क्रत्व्यः" कर्त्तव्यः शोध्यइत्यर्थः। "रसः" रसात्मकः। "देवानां" "दक्षः" बलप्रदः [यद्वा, दक्षः प्रवर्द्धनीयो देवानामर्थाय]। तथा "नृभिः" नेतृभिः ऋत्विग्भिः "अनुमाद्यः" अनुमादनीयः स्तुत्यो वा। शेषः प्रत्यक्षकृतः। "हरिः" हरितवर्णः। "सत्वभिः" प्राणिभिः अस्मदादिभिः "सृजानः" सृज्यमानः "अत्यो न" अश्वइव [स यथा शिक्षितोऽनायासेन गच्छति तद्वत्] "वृथा" अप्रयत्नेन "पाजांसि" बलानि स्वीयान् "कृणुषे" कुरुते "नदीषु" वसतीवरीषु ताभिरित्यर्थः॥

"कृणुषे"-"कृणुते"—इति पाठौ॥ १॥

अथ द्वितीया।

२ ९ १ २ ३ १ २ ० १ २ २
शूरोनधत्तआयुधागभस्त्योः

२ १ १ ३ १र २र
स्वाऽ३ःसिषासन्रथिरोगविष्टिषु।

१ २ ९ १ २ ३ १ २ ३ २ २
इन्द्रस्यशुष्ममीरयन्नपस्युभि

१ ९ ३ १ २ ३ १ २
रिन्दुर्हिन्वानोअज्यतेमनीषिभिः॥ २ * ॥

अयं सोमः "गभस्त्योः" हस्तयोः "आयुधा" आयुधानि

* ऋ० वे० ७, ३, १, २।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"शूरो न" शूर इव "धत्ते" धारयति,* "स्वः" स्वर्गं सुख-साधनं यज्ञं वा "सिषासन्" सम्भक्तुमिच्छन् "रथिनः" रथवान् [ रथादिन-प्रत्ययः ] "गविष्टिषु" यजमानस्य गवामेषणेषु सत्सु यजमानोद्देशं गो-सम्भजनाय रथवानित्यर्थः । "इन्द्रस्य" "शुष्म" बलम् "ईरयन्" प्रेरयन् "इन्दुः" सोमः देवः "अपस्युभिः" कर्मेच्छुभिः† "मनीषिभिः" मेधाविभिः ऋत्विग्भिः "हिन्वानः" प्रेर्यमाणः "अज्यते"‡ गोभिः ॥ २ ॥

अथ तृतीया ।

१ २ ३ १ २ ३ १ २

इन्द्रस्यसोमपवमानऊर्मिणा

३ १ २ १ २ ३ १ २

तविष्यमाणोजठरेष्वाविश ।

१ २ ३ १ २ १ ३ १ २

प्रनःपिन्वविद्युदभ्रेवरोदसी

३ १ ३ २ ३ १ २ ३ १ २

धियानोवाजाँउपमाहिशश्वतः ॥ ३ ¶ ॥ १२

हे "सोम !" "पवमान" पूयमान ! त्वं "तविष्यमाणो" वर्द्धिष्यमाणः§ सन् "इन्द्रस्य" "जठरेषु" "ऊर्मिणा" प्रभूतया

---

* 'अषि-परशु-पाश-प्रभृतीनि यथा शूरः धारयति तद्वत् सोमः धारयतीति युक्-युव-प्रह-चमसान्यायुधानि गमस्त्योः'—इति वि० ।

† 'अपस्युभिः—अपरच्छद्भिः ऋत्विग्भिः'—इति वि० ।

‡ 'अज्यते—अज क्षेपणे, क्षिप्यते'—इति वि० ।

¶ ऋ० वे० ७, ९. १, ० ।

§ 'तविष्यमाणः—स्तूयमानः'—इति वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



धारया "आ विश" जठर-प्रदेशस्य बाहुल्यात् बहुवचनम्* "नः" अस्मदर्थं "विद्युत्" "अभ्रेव" अभ्राणीव सा यथा अभ्राणि दोग्धि तद्वत् "प्र पिन्व" धुच्च "रोदसी" द्यावापृथिव्यौ† किञ्च "धिया" कर्मणा‡ "नः" अस्मभ्यं "शश्वतः" [ बहुनामैतत् ( निघ० ३, १, ५) ] बहून् "वाजान्" अन्नान् "उप" समीपे "माहि" निर्माहि ॥

"माहि"-"मासि"—इति पाठौ, "नः"-"न"—इति च ॥३॥१२

२ र १ २ १
॥ उद्वद्भार्गवम् ॥ धर्त्तांदायिवार२३ः। पवतायिका

२र १र १ र १ २र १
२३। त्वीयोरसाः। दक्षोदायिवार२३। नामनूमा२३।

र १र २ १ २र १
दीयोनूभायिः। हरिःसाज्जा२३। नोअतायियो२३।

२र १ २ र १ १ १ २र
नासत्वभायिः। वृथापाजा२३। सिन्धणूषा२३यि। ना

र १ १र र १ १ र १ २र
दीषुवा३१उ ॥(१) शूरोनाधा२३। तंआयूधा२३। गा

१ १ १ २ १ २र १
भस्तियोः। सुवःसायिषा२३। सन्नथायिरो२३। गाविष्टि

---

* 'जठरेषु आविश'—सप्तम्या बहुवचनमिदमेकवचनस्य स्थाने द्रष्टव्यम्।

† 'प्र प्र पिन्व—पुनःपुनः पूरय दीपयास्मान् विशुद्धे यथा अभ्राणीव रोदसी द्यावापृथिवी व्यापय'—इति वि०।

‡ धिया—बुद्ध्या—इति वि०। "धीः"—इति निघण्टौ कर्मनामस्वेकविंशतितमम्पदम् (२, १)।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ १ २ र १ ३र १
षू। इन्द्रस्याशू२३। य्यमीरायार२३न्। य्यापस्युभायिः।
२ १ र १ २र १र
इन्दुर्हायिन्वा२३। नोअज्याता२३यि। मानीषिभा३१
२ १ २ १ २र १र
उ॥(२) इन्द्रस्यासो२३। मपवामा२३। नाऊर्मिणा।
२ १ २र १ २र १र २
तविष्यामा२३। ज्ञोजठारा२३यि। षूत्राविशा। प्रनः
१ र १ २र १र २ र १
पायिन्वा२३। विद्युद्राभ्रे२३। वारोदसायि। धियानो
२र १ २र १ २ १ १ १ १
वा२३। जा२उपामा२३। हौशम्वता३१उवा२३४५ (३)

॥ १४ * ॥ [१]

२ १ र २ र १
॥ क्रावमं ↑॥ धर्त्तावा। दिवःपवतेका। त्वियोरा
१ र र र र २ र १ १
सा२ः। दत्ताेदेवानामनुमा। दियोन्दभा२यिः। हरिः
र र २ १ १ २ ४ ५
सृजानोअतियो। नसत्वाभा२३यिः। वार्यो ३ पाजा।
२ १ १ २ ४ २र १
सिक्रणूषा२३यि। नादा३यिषू५वा६५६ ॥(१) शूरोवा।
र २ १ १ र
नधत्तआयुधा। गभस्तायो२ः। स्वःसिषासन्नथिरो।

---

* ज० गा० ४प्र० २ष० १४सा०। "स्वारकावम्"—इति ख० पु० पाठः।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



गविष्टायिषू२। इन्द्रस्यप्रुष्ममीरयान्। अपस्यूभार२३यिः। धायिन्द्र३र्हायिन्वा। नोअज्यातार२३यि। माना३यिषा ५यिभा६५६यिः॥(२) इन्द्रोवा। स्यसोमपवमा। नऊ र्मायिणा२। तविष्यमाणोजठरायि। पुआवायिषा२। प्रनःपिन्वविद्युदभ्रे। वरोदासार२३यि। धाया३नोवा। जाए३पामार२३। दीशा३स्वा५ताई५६ः(३)॥ १६ *॥ [२]

॥ यज्ञायज्ञीयम्॥ धर्त्ताऽ५दि। वा३ःपा३वतेका। त्वीयेरसोदक्षोदेवानामनुमा। दी३यो नृ३भायिः। हरा २यिःसृजानो अत्योमत्व। भिर्वा२३र्था। ऊम्मायि। पा ३जा। सायिकृणषेनदार्यिषुवाउ॥(१) आश्रू। रो नधत्तआयुधागभस्त्योःस्वःसिषासन्नयिरो। गा३वायिष्टा ३यिषू। इन्द्रा२स्यप्रुष्ममीरयन्नपस्यु। भिरार२३यिन्दः।

* ऊ० गा० ६प्र० १ख० १६गा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ १ २ १ र ३ २
ऊम्मायि। हा३यिन्वा। नोअज्यतेमना२यिषिभाउ॥(२)

१ २ १ र र र र र र
भायिरायि। द्रस्यसोमपवमानऊर्म्मिणातविष्यमाणोजठरा

२ १ २ २ १ १ र र
यि। षू३आवा३यिशा। प्रना२ःपिन्वविद्युदभ्रेवरोद।

र २ १ २ २ १ र
सीधार३या। ऊम्मायि। नो२वा। जा॑उपमाहिशार

३ २ १ १ १
श्वताउ। वा३४५(३)॥ १५* ॥ [३]

१ २ २ २ र
॥ शाक्करम्† ॥ हाउधार्त्ता। दा२३४यि। वःपवते

र १ ३ २ १ ३ २ १ २
कृत्वियोरसा। एहिया। एहिया३४। हाउदाक्षाः।

१ २र र र र १ २ २ १ २
दा२३४यि। वानामनुमादियोनृभिः। एहिया। एहि

२ १ २ १ २र र र
या३४। हाउहारीः। सा२३४। जानोअत्योनसत्व

१ ३ २ १ ३ २ १ २ १
भिः। एहिया। एहिया३४। हाउवार्था। पा२३४।

२र र र र १ ३ २ १ ३ २ ५
जा॑सिक्तणुषेनदीषुवा। एहिया। एहिया३४। हाउ॥(१)

१ २ १ २ र र र १ २
हाउपूरा। ना२३४। धत्तआयुधागभस्त्योः। एहि

---

* ऊ० गा० १५प्र० १ख० १५सा०।    † "शार्गम्"—इति ख० पु० पाठः।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ १ ९ २ १ २ १ २र
या । एहिया३४ । हाउस्ववाः । सा२३४यि । षास

र १ ३ १ १ ३ २ १ २
नृषिरोगविष्टिषु । एहिया । एहिया३४ । हावायिन्द्रा ।

१ २ र १ ९ २ १ ९ १
स्या२३४ । धुक्षमीरयन्नपस्युभिः । एहिया । एहिया

१ ९ १ २र र र र
३४ । हावायिन्दुः । हा२३४यि । न्वानोअज्यतेमनी

१ ९ २ १ ३ २ ५ १
षिभिः । एहिया । एहिया३४ । हाउ ॥(२) हावायि

२ १ २र र र र १ ३ २
न्द्रा । स्या२३४ । सोमपवमानऊर्म्मिणा । एहिया ।

१ ३ २ १ २ १ १र र र र
एहिया३४ । हाउतावायि । ष्या२३४ । मायोजठरेष्वा

१ ३ २ १ ३ २ १ ९ १
विश । एहिया । एहिया३४ । हाउप्रानाः । पा२३४

२ र र र १ ३ २ १ ९ २
यि । न्वविद्युदभ्रेवरोदसी । एहिया । एहिया३४ ।

१ २ १ २र र र १ २
हाउधाया । नो२३४ । वाजाँउपमाहिमश्वतः । एहि

२ १ ७ २ ५ ४
या । एहिया३४ । हाउ । हो५ई । डा(३) ॥ २० * ॥ [४]

३ २ ३ २ ३र ४र ५ १
॥ वासिष्ठम् † ॥ उद्भवायि । धर्त्ता३४औहोवा । दि

---

* ऊ० गा० १७प्र० १ख० २०सा० ।

† "उद्भवायि वासिष्ठम्"—इति ख० पु० पाठः ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



वाः। पवते। क्षत्वियोरसाः। दत्ता३४औहोवा। दे

वा। ना३मनु। मादियोनृभायिः। हरा३४औहोवा।

स्वजा। नो३अति। योनसत्वभायिः। वृथा३४औहोवा।

पाजा। सिह्लणु। षे। नदा३यिषूपूवा६५६॥(१) पुरु

रा३४औहोवा। नधा। ता३आयु। धागभस्तियोः।

सुवा३४औहोवा। सिषा। सा३न्वयि। रोगविष्टिषू।

इन्द्रा३४औहोवा। स्यमू। क्ष्मा३मीर। यंन्नपस्युभा

यिः। इन्द्रू३४औहोवा। पिन्वा। नोअज्य। ते। म

ना३यिषा५यिभा६५६यिः॥(२) इन्द्रा३४औहोवा। स्य

सो। मा३पव। मानऊर्म्मिणा। तवा ३ ४ औहोवा।

घ्यमा!। यो३जठ। रेषुआविशा। प्रना३४औहोवा।

पिन्वा। विद्य द। भ्रेवरोदसायि। उरूवायि। धिया



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२र ४र ५ १र २ १ २र १ १ ४
३४औहोवा। नोवा। जा१ऽ३उप। मा। हिंसा३स्वा
पूताइ५६:(३) ॥ १६ * ॥ [५]

२ १र १ १ २र १ २र १
॥ वायोरभिक्रदन् † ॥ धर्त्तादिवःपवतेकृत्वियौ। हो

२ १ र र र र २ २ २ १
यिरासाः। दक्षोदेवानामनुमादियो१नृ३भायिः। हरिः

र र र २ २ १ ३ ५ ३
स्वजानोअतियोनसा१त्वा३भायिः। वा२३४र्था। पा२३४

५ १ २१२ १ २ ४
जा। सायिक्रणुषा३यि। हा२३यि। नदा३यिषू५वा६

१र२र१ २१र २र१२र १ २ १
५६ ॥(१) शूरोनधत्तआयुधागभौ। होस्त्यायोः। स्वःसि

र र २ २ २ १ र २
षासन्रथिरोगवा१यिष्टा३यिषू। इन्द्रस्यशुष्ममीरयन्नपा१

२ २ ० ५ २ ५ १ २
स्यू३भायिः। आ२३४यिन्दूः। हा२३४यिन्वा। नोअ

२ १ १ २ ४
ज्यता३यि। हा२३यि। मना३यिषा५यिभा६५६यिः ॥(२)

१ २ र १२र १२र १ २ १ र र
इन्द्रस्यसोमपवमानऔ। होर्म्मीयिणा। तविष्यमाणो

र २ २ २ १ र २ २ २
जठरेषुआ१वा३यिशा। प्रनःपिन्वविद्युदभ्रेवरो१दा३सा

---

* ऊ० गा० १३प्र० २अ० १६सा०।

† "वायोरभिक्रन्दः"—इति ख० पु० पाठः।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



यि। धा२३४या। नो२३४वा। जा७उपमा३। हा२
३। चिमा३स्वा५ता६५६ः(३)॥१८*॥[६]१२

अथ प्रगाथरूपे तृतीयसूक्ते†—

प्रथमा।

यदिन्द्रप्रागपागुदग्न्यग्वाहूयसेनृभिः।
सिमापुरूनृषूतो अस्यानवेसिप्रशर्द्धतुर्वशे॥१‡॥

हे "इन्द्र!" "यद्" यदि "प्राक्" प्राच्यां दिशि वर्त्तमानैः [सप्तम्यां प्राक्-शब्दात् विहितस्यास्तातेः¶ "अञ्चेर्लुगिति(५,३,३०) लुक्], यदि वा "अपाक्" प्रतीच्यां दिशि वर्त्तमानैः, यदि वा "उदक्" उदीच्यां दिशि वर्त्तमानैः यद्वा "न्यक्" नीच्यां दिशि अधस्ताद्वर्त्तमानैः [“न्यधी च (६,२,५३)”—इति प्रकृतिस्वरत्वम्, "उदात्तस्वरितयोर्यणः (८,२,४)"—इति परस्यानुदात्तस्य स्वरितत्वम्]; एवम्भूतैः "नृभिः" स्तोतृभिः त्वं "हूयसे" स्व-स्व-कार्य्याय आहूयसे ["हिंसिमश्रेष्ठेन्द्रसिमइतिवैश्रेष्ठमाचक्षतइति वाजसनेयकम्]। यद्यप्येवं बहुभिराहूयसे तथापि "अनवे"

---

* ऊ० गा० १३प्र० २ख० १९गा०।

† उक्तो माध्यन्दिनः पवमानः, इदानीं पृष्ठानुच्यन्ते—इति वि०।

‡ छ० आ० ३, २, ४, ७ (१भा० ५७३पृ०) = ऋ० वे० ५, ७, ३०, १।

¶ "दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः"—इति पा० ५, ३, २७।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अनुर्नाम राजा तस्य पुत्रे राजर्षौ "पुरु" बहुलं "नृपूतः" नृभि-स्तदीयैः स्तोतृभिः प्रेरितः "असि" भवसि राज्ञो हितकरणे त्वां स्तोतारः प्रीणयन्तीत्यर्थः [षु प्रेरणे, अस्मात् कर्म्मणि निष्ठा "तृतीया कर्म्मणि (६,२,४८)"—इति पूर्वपद-प्रकृति-स्वरत्वम्] अपिच हे "प्रशर्द्ध" प्रकर्षेण शर्द्धयितरभिभवितरिन्द्र ! "तुर्वशे" —एतत्सञ्ज्ञके राजनि नृपूतोऽसि नृभिः प्रेरितोऽसि भवसि ॥१॥

अथ द्वितीया ।

१ ३ २ ३ १ २ १ ३ १ २ ३ २ ३१ १ ३ १ २ ३ १ १

यद्वारुमेरुशमेश्यावकेकृपइन्द्रमादयसेसचा ।

१ २ ३ १ २ ३ १ २ ३ १२ ३१३ १ २

कण्वासस्त्वास्तोमेभिर्ब्रह्मवाहसइन्द्रायच्छन्त्यागहि ॥२*॥१३

"यद्वा" यद्यपि "रुमे" रुमादिषु चतुर्षु राजसु हे "इन्द्रः ! त्वं "सचा" सह "मादयसे" माद्यसि तथापि "ब्रह्मवाहसः" ब्रह्मणां स्तोत्राणां वोढारः अथवा अन्नानां वोढारः "कण्वासः" कण्वगोत्रा ऋषयः "स्तोमेभिः" स्तोत्रैः स्तोत्रसमूहैः सह "इन्द्र !" त्वाम् "आयच्छन्ति" आयमयन्ति अतस्त्वम् "आगहि" शीघ्र-मागच्छ [गमेर्लोटि छान्दसः (२, ४, ७३) शपो लुक्] ॥

"स्तोमेभिर्ब्रह्मवाहसः"—"ब्रह्मभिःस्तोमवाहसः"——इति पाठौ ॥ २ ॥ १३

२ ३ ३ २ १ ३२

॥ नैपातिथम् ॥ यदिन्द्रप्रागपागुदा३गे । नायग्वा

---

* ऋ० वे० ५, ७, ३०, २।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



र १ २ २ ३र ५ १
ह्व । यस्रायिनृभीऽ३: । हा । औहो२३४हा । सिमा२

१र १रर १ २ १ ७ २ ३र ५
पुरूनृषूतोस्र । सियानवे२३ । हा । औहो२३४हा ।

१ २ २ ३र ५ १ ३ ५र
असायिप्रागा३ । हा । औहो२३४हा । धा२तर२३४औ

र ५ २ २ १
होवा । र्वा२३४णे ॥(१) असिप्रग्रर्द्दतुर्वशा२ए । आसि

२ १ २ २ ३र ५ १ १२र
प्रश । धतूर्वशे३ । हा । औहो२३४हा । यद्वा२रुमे

१२र १र २ १ ७ २ ३र ५ १
रुषमेभ्या । वकायिष्ठपार३ । हा । औहो२३४हा । इ

२ २ ३र ५ १ ३ ५र
न्द्रामादा३ । हा । औहो२३४हा । या२सा२३४औ

३ ५ २ र र २ १
होवा । सा२२४चा ॥(२) इन्द्रमादयसेसचा३ए । आ

२र १ २ २ ३र ५
यिन्द्रमाद । यसायिसचा३ । हा । औहो२ ३ ४ हा ।

१ र १र र २ १ २ १ ७ २ ३र
कण्वा२सस्वास्तोमेभिर्न । ह्मवाहमार३: । हा । औ

१ २ २ ३र ५
हो२३४हा । इन्द्रायाच्छा३ । हा । औहो २ ३ ४ हा ।

१ ३ ५र र ३ ५
ता२आ२३४औहोवा । गा२३४ही(३) ॥ १५ * ॥ [१] १३

---

* क० गा० ४प्र० १ख० १५सा० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ प्रगाथे चतुर्थसूक्तं*—

प्रथमा ।

३ १ २ ३ १ २ ३ १ २ ३ २ ३ १ १ २र
उभयꣳशृणवच्चनइन्द्रोअर्वागिदंवचः ।
३ १ २ ३ २ ३ १ २ ३ १र २र ३ १ २
सत्राच्यामघवांत्सोमपीतयेधियाशविष्ठआगमत् ॥ १ † ॥

"उभयं" स्तोत्रात्मकं शस्त्रात्मकञ्चोभयविधम् "इदं" "वचः" "अर्वाग्" अस्मदभिमुखम् इन्द्रः "शृणवत्" शृणोतु तच्च "मघवान्" धनवान् इन्द्रः "सत्राच्या" अस्माकं सह अञ्चत्या "धिया" युक्तः सन् "शविष्ठः" अतिशयेन बलवान् "सोमपीतये" सोमस्य पानाय "आगमत्" अगच्छतु ॥ १ ॥

अथ द्वितीया ।

१उ ३ १ २ ३ १र २र ३ १ २ ३ १ २
तꣳहिस्वराजंवृषभन्तमोजसाधिषणेनिष्टतक्षतुः ।
३ २ ३ १ २ ३ १र ३र ३ १ २ ३ २ ३ १ २
उतोपमानाम्प्रथमोनिषीदसिसोमकामꣳहितेमनः ॥ २ ‡ ॥ १८

"तंहि" तं खल्विन्द्रं "स्वराजं" स्वयमेव राजमानो "धिषणे" द्यावापृथिव्यौ "वृषभं" जगदुपकारकं वृष्टेर्वर्षकम् "ओजसा" बलेन "निष्टतक्षतुः" सम्वरतुः "उत" अपिच यस्मादेवं तस्मात् हे

---

* 'अच्छावाक' साम'—इति वि० ।

† छ० आ० ३, २, ५, ८ (१भा० ५९१पृ०)=ऋ० वे० ६, ४, ३५, १ ।

‡ ऋ० वे० ६, ४, ३५, २ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



इन्द्र! उपमानभूतानामन्येषां देवानां मध्ये "प्रथमः" मुख्यः सन् "निषीदसि" वेद्यां सोमकामं "हि" खलु ते मनः॥

"ओजसा"-"ओजसः"—इति पाठौ॥२॥१४

॥ वैयश्वम्॥ उभयꣳशृणवच्चनाइए। आयिन्द्रो२ अर्वागिदंवचा२३ः। ह्वोवा३हायि। सत्राचियामघवा २न्। सो। मापा३हायि। ता२३४यायि। धियाश्र विष्ठआ२३होयि। गमात्। औ२३होवा॥(१) धिया श्रविष्ठआगमा३दे। धाया२श्रविष्ठआगमा२३त्। ह्वो वा३हायि। तꣳह्विस्वराजा२वृषभाम्। तामो३हायि। जा२३४सा। धिषणेनिष्टता२३होयि। चतुः। औ२३ होवा॥(२) धिषणेनिष्टतक्षतू३रे। धायिषा२णेनिष्टत क्षतू२३ः। ह्वोवा३हायि। उतोपामा२प्रथमो। नायि





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ २ ३ ५ १र र १
षा३र्द्वायि। दा२३४सायि। सोमकामᳬ्‌हिता२३यिहो

२ १ ४ ५ ४
यि। मना। औ३होवा। हो५ई। डा(३) ॥ १६* ॥[१]

२ १ २ १ र
॥ वाम्रम् ॥ उभयᳬ्‌शृ्णा। णवाच्चा१ना२ः। इन्द्रो

र २ १ र र र र १
अर्वागिदांवा१चा२ः। सत्राच्यामघवांत्सोमपायिता१या

१र २ १ ३ ५र र
२यि। धियाश्च २ ३ वा ३यि। ष्ठा२आ२३४औहोवा।

३ ५ १ र १ २
गा २ ३ ४मात् ॥(१) धियाशवायि। ष्ठआगा१मा२त्।

१ र र १ १ र २
धियाशविष्ठआगा१मा२त्। तᳬ्‌हिस्वराजंवृषभन्तामो१

१ २ १ ३ ५र र
जासा२। धिषणे२३ना३यिः। ता२ता २ ३ ४औहोवा।

२ ५ २ र १ २ २
हा२३४तूः ॥(२) धिषणेनायिः। तताक्षा१तू२ः। धि

र २ १ र र र र २
षणेनिष्टताक्षा१तू२ः। उतोपमानाम्प्रथमोनिषायिदा१

* ऊ० गा० ४प्र० २ख० १६सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



र १ २ १ २ ५ र र

सा२यि। सोमका२३मा३म्। हा२यिता२३४औहोवा।

२ ५

मा२३४नाः(३)॥ ७* ॥ [२] १४

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य नवमस्याध्यायस्य

सप्तमः खण्डः† ॥ ७ ‡

---

अथाष्टम-खण्डे —

तृचात्मके प्रथमसूक्ते —

प्रथमा।

१ १ २ १ २ २ १ र १ र २ १ २

पवस्वदेवआयुषगिन्द्रङ्गच्छतुतेमदः।

२ १ र २ र २ १ २

वायुमारोहधर्म्मणा॥ ‡ १॥

हे सोम! "देवः" द्योतमानः त्वं "पवस्व" धारया क्षर। अपिच "ते" तव "मदः" मदकरः रसः "आयुषक्" तम् "इन्द्रं" प्रति "गच्छतु" अपिच त्वं "वायुं" "धर्मणा" धारकेण रसेन "आरोह" प्राप्नुहि॥

"देवः"-"देव"—इति पाठौ॥ १॥

---

* ऊ० गा० १८प्र० २खं० ७वा०।

† 'उक्तानि पृष्ठानि'—इति वि०।

‡ छ० आ० ६, २, १, ५ (२भा० ३७पृ०)=ऋ० वे० ७, ४, २३, १।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीया ।

१२ २ १२ ३ १ २ ३ १ २
पवमाननितोशसेरयिᳫं सोमश्रवाय्यम् ।
१ २ ३ १र २र
इन्दोसमुद्रमाविश ॥ २ * ॥

हे "पवमान !" "इन्दो !" "सोम !" त्वं "श्रवाय्यं" श्रवणीयं "रयिं" शत्रूणां धनं "नि तोशसे" अतितरां पीडयसि† स त्वं "समुद्रं" द्रोणकलशम् "आ विश" प्रविश ॥

"इन्दो"-"प्रियः"—इति पाठौ ॥ २ ॥

अपघ्नन्पवसेमृध इति तृतीया‡ ।

२ १ २ ३ १ २
अपघ्नन्पवसेमृधः० ॥ ३ ॥ १५

ऋचः प्रतीकमिदम् ॥ सा च छन्दस्याम्नाता ( ६, १, १, ६— २भा० ४६ पृ० ) व्याख्याता च ॥ ३ ॥ १५

२ १ १ १ २
॥ सुरूपाद्यम् ॥ पवस्वदा २यि । इया २इया । व
र १ १ १ १ २र १
आयूषा २क् । इन्द्रङ्गच्छा २ । इया २इया । तुतेमा

---

* ऋ० वे० ७, ४, २१, ५ ।

† 'तोशति—तंश दाने ददाति'—इति वि० ।

‡ छ० आ० ६, १, १, ६ ( २भा० ४६पृ० )=ऋ० वे० ७, १, २४, ४ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



दा२ः । वायुमारो२ । इया२इया । इधर्मा२३णा३

४३ ॥(१) पवमाना२ । इया२इया । नितोशासा२यि ।

रयिꣳसोमा२इया । श्रवाय्यायो२ । इन्दोसमू२ । इया

२इया । द्रमावा२३यिशा२३४३ ॥(२) अपघ्नन्पा२ । इया

२इया । वसेमार्द्धा२ः । क्रतुवित्सो२ । इया२इया ।

ममत्सारा२ः । नुदस्वादा२यि । इया२इया । वयु

न्नार२३ना३४३म् । ओ२३४५ई । डा(३) ॥ १७ * ॥ [१]

॥ भासम् † ॥ पव । स्वा३दायि । वाः । ईया । आ

यू१षा२क् । आयिन्द्रङ्गच्छ । तु । तौ३द्वो । वाह्वा

यि । मदा२ः । वायू२३म् । आ२रो२३४औहोवा ।

इधर्म्मणा१ ॥(१) पव । मा३ना । नायि । ईया । तो

शा१सा२यि । रायिꣳसोम । आवौ३द्वो । वाद्वायि ।

---

* ऊ० गा० ४प्र० २ख० १७गा० ।

† "गायत्रीभासम्"—इति ख० पु० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



ईया२म्। इन्दो२३। सा२मू२३४औहोवा। द्रमा

विशा१॥(२) अप। घ्ना३न्पा। वा। ईया। साथि

मार्द्धा२:। क्रातुवित्सो। म। मौ३हो। वाहा। त्सरा२:।

वुहा२३। स्वा२दा२३४औहोवा। वयुञ्जना१म्(३)

॥ १८ * ॥ [२]

॥ काक्षीवन्तम् † ॥ पवस्वा३देवआयुषाक्। इन्द्रा

ङ्गच्छ। तुतेमदा३:। ओ३४। हाहोयि। वायूमा२

३रो। हथौहोयि। औहो२३४वा। मा५णोइहायि ॥(१)।

पवमाननितोस्रसायि। रयायिंसोम। श्रवायियाऽम्।

औ३४। हाहोयि। इन्दोसा२३म्। द्रमौहोयि। औ

हो२३४वा। वा५यिशोईहायि ॥(२) अपघ्ना३न्पवसेमृ

धा:। क्रतूवित्सो। ममत्सरा३:। ओ३४। हाहोयि।

* ऊ० गा० ४प्र० २ख० १८गा० ।

† "काचीषतम्"—इति ख० पु० पाठ: ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



नुदास्वार३दाधि। वायौहोंयि। औहो२३४वा। जा

मनोईहायि(३) ॥ १९ * ॥ [३]

॥ गायत्रासितम्† ॥ पवस्वदेवआ। इया३४३ई३४

या। युषागिन्द्रङ्गच्छतुतौ२। हो२। ऊवा२यि। मा

दा२ः। वायू३ॡहोंयि। आरो३हो। हधर्म्मार२३णा

३४३ ॥(१) पवमाननितौ। इया३४३ई३४या। शसायि

रयिॡसोमश्रवौ२। हौ२। ऊवा२यि। आया२म्।

इन्दो३होयि। समू३हो। द्रमावार२३यिशा३४३ ॥(२)

अपघ्नन्पवसे। इया ३ ४ ३ई३४या। मृधाःक्रतुवित्सोम

मौ२। हौ२। ऊवा२यि। त्सारा२ः। नुदा३हो

यि। स्वादा३हो। वयुञ्जार२३ना३४३म्। ओ२३४५ई।

डा(३) ॥ २० ‡ ॥ [४]

---

* ऊ० गा० ४प्र० १ख० १९सा०।

† "वासिष्ठमासितम्"—इति ख० पु०।

‡ ऊ० गा० ४प्र० १ख० २०सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ २ १ २ १र

॥ ऐडसैन्धुक्षितम् ॥ पवस्वदो। हायि। वआय२

२ १ २ २ २ र र १

३षाक्। इन्द्रङ्गच्छतुना१यिमा३दाः। वायुमारो२३४

५ १ २ २ १ २ ४ ५ १

हायि। हाधा३हा। मणा। औ३होवा॥(१) पव

२र १ २ १र २ १ र २

मानो। हायि। नितोशा२३सायि। रयिᳲसोमश्रवा१

२ २ र ३ ५ १ २ २

आ३याम्। इन्दोसमो२३४हायि। द्रामा३हायि। वि

१ २ ४ ५ १ २ १ २ १र

शा। औ३होवा॥(२) अपघन्यो। हायि। वसेमा

२ १ र २ २ २ र ३ ५

२३र्घाः। क्रतुवित्सोममा१त्सा३राः। नुदस्वादो२३४हा

१ २ २ १ ४ ५ ४

यि। वायू३ᳲहायि। जनाम्। औ२३होवा। हो५

ई। डा (३) ॥ १* ॥ [५] १५

अथ तृतीयसूक्ते तृचात्मके—

अभीनोवाजसातममिति प्रतीकम्,

३ १ २ ३ १ २

अभीनोवाजसातमं०॥ १† ॥

सा चाम्नाता ( ६, २, १, ५=२भा० १६१पृ० ) व्याख्याता च ॥ १ ॥

---

* ऊ० गा० १७प्र० १ख० १मा० ।

† छ० आ० ६.०, १, ५ ( २भा० १६१पृ० )=ऋ० वे० ७, ४, १३, १ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीया।

२ १ १ ३ १ र २ र ३ १ २ १ १ २
वयन्तेअस्यराधसोवसोर्वसोपुरुस्पृहः।
१ २र १ १ र २ र ३ १ १
निनेदिष्ठतमाइषःस्यामसुम्नेतेअध्रिगो ॥ २ * ॥

हे "वसो" वासयितः! सोम! "अस्य" एतादृशस्य "ते" तव "राधसः" धनस्य "पुरुस्पृहः" बहुभिः स्पृहणीयस्य "वसोः" वासकस्य त्वदीय-दीयमानस्य वयं नितरां "नेदिष्ठतमाः" अत्यन्त-मन्तिकतमाः "स्याम" भवेम ॥ २ ॥

अथ तृतीया।

२ ३ १ ३ १ २ ३ २ १ ३ १ १
परिस्यस्वानोअक्षरदिन्दुरव्येमदच्युतः।
२ ३ २ ३ १ २ ३ ३ ३ १र २र ३ २
धारायऊर्ध्वोअध्वरेभ्राजानयातिगव्ययुः ॥३†॥ १६

"गव्ययुः" गोकामः यद्वा क्षीरादि कामयमानः "ऊर्द्धः" समुच्छ्रितः सर्वेषां मुख्यो "यः" सोमः "भ्राजा न" यथा भ्राजमानया दीप्त्या अन्तरिक्षे गच्छति तद्वत् दीप्त्या सह "अध्वरे" यज्ञे "धारा" स्वकीयया धारया "याति" गच्छति। "स्वानः" सुवानः अभिषूयमाणः सः "इन्दुः" सोमः "मदच्युतः" मदार्थं

---

* ऋ० वे० ७, ४, २३, ५।

† ऋ० वे० ७, ४, २३, १।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



वेदैः प्रेरितः सन् "अव्ये" अवि भवे पवित्रे "पर्यक्षरत्" परितः क्षरति ।

"अक्षरत्"-"अक्षाः"—इति पाठौ ॥ ३ ॥ १६

४ र १र २ ४ र ५
॥ गौरीवितम्* ॥ अभी । नोवा३ । जसातमाम् ।
१ १ र २ ४
रयिमर्षश तस्पृहा२३म् । आयिन्दोसहा३१२३ । स्वभा
१ १ ४ ५ ४
पूर्णसाम् । तूविद्युम्ना३१२३म् । विभोवा । साधूहो६
५ ५ ३र २ ४ ५ १र र
हायि ॥ (१) वयम् । तेआ३ । स्यराधसाः । वसोर्वसो
१ र १ ४ १
पुरुस्पृहा२३ः । नायिनेदिष्ठा३१२३ । तमा५इषाः । स्वाभ
२ ४ ५ ४ ५ ५
सुम्ना३१२३यि । तओवा । धा५यिगो६हायि ॥ (२) परि ।
३ २ ४र ५ १ र १
स्यस्वा३ । नोअक्षरात् । इन्दुरव्येमदच्युता२३ः । धा
र २ ४र १ र २ ४
रायऊ३१२३ । ध्वौआ५ध्वरायि । भ्राजानया३१२३ । ति
५ ४ ५
गोवा । व्यापूयो६हायि(३) ॥ २ † ॥ [१]

३ र २र १ ४र र ५
॥ ऐडकौत्सम् ॥ अभोहोने२३ । वाजसातममीया ।

---

* "महागौरीवितम्"—इति ख० पु० पाठः ।

† ऊ० गा० ५प्र० १ख० १सा० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ १   १ २   १   २ २   १   २
रयिमर्षग्नतस्पृहम् । आयिन्दोसद्द । स्वभर्णा२३साम् ।
१ २   २   १ २   २   १२   २
तूवा२द्दायि । द्यू म्ना३ऽद्दायि । विभासा२३हा३४३म् ॥(१)
२   २२ १   ४   ५   १२ २ १ २   १ २
वयऽद्वीते२३ । अस्यराधसई्या । वसोर्वसोपुरुस्पृद्दः ।
१   २ २   १२   २   १ २ २   १ २
नायिनेदिष्ठ । तमाआ२३यिषाः । स्यामा२हायि । सूम्ना
२   २ १   २   ३२ २ १
३यिहायि । तेअधा२३यिगा३४३उ ॥(२) परीहिस्या२३ः ।
४२ २   ५   १ २ १ २२ १   २   १ २ २ २
स्वानोअच्चरदीया । इन्दुरव्येमदच्युतः । धारायज्ञ ।
२ १   २   १ २   २   १ २   २   १
ध्वोअध्वा२३रायि । भ्राजा२द्दा । नाया२हा । तिगव्या
२   १
२३यू३४३ः । ओ२३४५ई । डा(३) ॥ ४ * ॥ [२]

२ १२ २ १२   १२ २ १
॥ प्पुदाप्पुद्वीयाद्यम्† ॥ अभीनोवाजसातमाम् । रयि
२ १   २   १ २   २ १   २   १
मर्षग्नतस्पृ२३हाम् । इन्दोसद्दस्वभर्णा२३साम् । तुवा
२   ३२ २   ५२ २   २ १
यिद्यू२३म्ना३म् । वा२यि । भामा३४औहोवा । हा२
१ १ १   २ १ २ २   १२ २ १   २   २ २१   २
३४५म् ॥(१) वयन्तेअस्यराधसाः । वसोर्वसोपुरुस्पृ२३द्दाः ।

* ऊ० गा० ५प्र० १खा० ४खा० ।

† "पदाप्पदाप्पद्वीयाद्यम्"—इति ऊ० पु० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ र २ १र २ र १ १ १
निनेदिष्ठतमा आ२३यिषाः । स्यामसूर३म्नाा३यि । तेर२ ।

३ १ ५र र १ १ १ १ १ १ २ १ २र १र २
अध्वा३४औहोवा । गा२३४५उ ॥(२) परिस्यस्वानो अक्ष

१ र २ १ २ १र र र १र १
रात् । इन्दुरव्येमदच्यू२३ताः । धारायऊर्ध्वो अध्वा२३

२ र १र १ १ १ २ ५र र
रायि । आजाना२३या३ । ता२यि । गव्या३४औहो

२ १ १ १ १
वा । यू२३४५ः (३) ॥ ५ * ॥ [३]

२ र १र र २र १ १
॥ क्रौञ्चाद्यम् ॥ अभीनोवौहो । जासातमाम् । र

१ २ ४ २ र १
यिमर्षा३ । आता ३ स्पृ५हा६ ५ ईम् । इन्दोसहौहो ।

२र १ २ १ १ ४
स्राभर्णसाम् । तुयिद्यम्ना३म् । वायिभा३सा५हा६५६म्॥(१)

२ १ र २र १र १ र १ २ ४
वयन्तओहो । स्याराधसाः । वसोर्वसा३उ । पूरू३स्प

१ र १ र २र १र १र
५हा६५६ः । निनेदिष्ठौहो । तामाइषाः । स्यामसु

१ २ ४ २ १र
म्ना३यि । तेआ३ध्वा५यिगा६५६उ ॥(२) परिस्यसौहो ।

२र १ २ १
नोअक्षरात् । इन्दुरव्या३यि । मादा३च्यू५ता ६ ५ ६ः ।

---

* क्रौ० गा० ५प्र० १अ० ५सा० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



धारायऔहो । ध्वोअध्वरायि । भ्राजानया३ । तायि

गा३व्या५यू६५६ः (३) ॥ ६ * ॥ [४]

॥ रयिष्ठम् ॥ अभीनोवा । जसाता३माम् । औ३

हो३वा । रयिमर्षशतस्प्, हा२३४५म् । रयिमर्षा । शता

स्पृ३हाम् । औ३हो३वा । इन्दोसहस्रभर्णसा२३४५म् ।

इन्दोसहा । स्रभार्णा३साम् । औ३हो३वा । तुविद्यु ।

म्नंविभ्रासहा२३४५म् । तुविद्युम्नाम् । विभासा३हाम् ।

औ३हो३वा ॥(१) वयन्तेआ । स्यराधा३साः । औ३

हो३वा । वसोर्वसोपुरुस्पृहा२३४५ः । वसोर्वसाउ

पुरुस्पृ३हाः । औ ३ हो ३ वा । निनेदिष्ठतमाइषा१ः ।

निनेदिष्ठा । तमाआ३यिषाः । औ३हो३वा । स्नाम

सुम्नेतेअध्रिगा२३४५उ । स्यामसुम्नायि । तेआध्रा३यि

* ऊ० गा० प्रप्र० १ख० ६सा० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



गा। औ३हो३वा ॥(२) परिस्यस्वा। नोआवाऽरात्। औ३हो३वा। इन्दुरव्येमदच्युता२३४५:। इन्दुरव्यायि। मदाच्यु३ता:। औ३हो३वा। धारायऊर्ध्वा अध्वराश्यि। धारायऊ। ध्वोआध्वा३रायि। औ३हो३वा। धाजा नयातिगव्ययू१:। आजानया। तिगाव्या३यू:। औ३ हो३वा। औ३हो३वा। ई३या। ई३या३४। हा। ओउवा३। ऊ३२३४पा(३) ॥ ७ * ॥ [५]

॥ औदलम् ॥ अभीनोवा। जासा२तमाम्। रयि मर्षा३। शतस्प२३४हाम्। इदोसहा। साभा२र्ण साम्। तुवायिद्यू२३म्ना३म्। वा२३यिभा३। सा३४५ हो६५६हायि ॥(१) वयन्तेआ। स्पारा२धसा:। वसो र्वसा३उ। पूरुस्प२३४हा:। निनेदिष्ठा। तामा२इषा:।

* ऊ० गा० ५प्र० १अ० ७सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२र १ २ १ ४ २ ५
स्यामसू२३म्नाऽ३यि । ते२३आ३ । धा३४५यिगो६हायि ॥(२)

१ २ १ १ २ १ २ १ २
परिस्रस्वा । नोआ२स्वरात् । इन्दुरव्या ३यि । मादि

३ ५ १र २र १ १ २र १र
च्यू२३४ताः । धारायजः । ध्वोआ२ध्वरायि । भ्राजाना

२ १ ४ २ ५
२३या३ । ता२३यिगा३ । व्या३४५यो६हायि(३) ॥८*॥ [६]

३ २ २ ४र ५र २
॥ श्यावाश्वम् ॥ अभा३१यि । नो३वा । जसा । ता

४ ५ १ २ १
३सम् । एहिया । रा । यिमर्षशा । त । स्पृहा२म् ।

१र र १ २ ४ ५ २र
एहिया२ । इन्दोसहास्रा३भा३ । णा२३४साम् । ऐहा

१र १ २ ४ २
२यि । एहिया२ । तुविद्युम्नांवा३यिभा३ । सा३४५हो

५ ३ २ २ ४ ५र २ ४
६हायि ॥(१) वया३१म् । ते३अ । स्यरा । धा३सः ।

५ १ र र २ १ १र
एहिया । वा । सोवंसोपू । रु । स्पृहा२ः । एहिया

र १ २ ४ ५ २र
२ । निर्नेदिष्ठाता३मा३ः । आ२३४यिषाः । ऐहा२यि ।

१र र १ २ ४ २
एहिया२ । स्यामसुम्नायिते३आ३ । धा३४५यिगो६

---

* ऊ० गा० ५प्र० १ख० ८सा० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५ २ २ २ ४र र ५ १ ४
द्दायि ॥(१) परा३१यि। स्वा३स्वा। नौम्र। द्दा३रत्।

५ १ र २ १ १र
एहिया। आयि। दुरव्येमा। द। च्युता२:। एहिया

र र १ २ ४ ५ २र
२। धारायऊर्द्ध्वो३आ३। धार२३४रायि। ऐद्दा२यि।

१र र र १ २ ४ २ ५
एहिया२। आजानयाता३यिगा३। व्या३ ४ ५ यो६द्दा

यि(३) ॥ १ ५ * ॥ [७]

१ र र र २ १
॥ आन्धीगवम् ॥ अभीनोवाजसा१तामाम्। रयिम।

२ १ १ र २ १ १ २१
षश्चा२३ता। ऊम्मा२१ऽ२। स्पृ्हमिन्दोसहस्रभर्णसार

१ १ १ १ २ १ १ २
३४५म्। तूवा३उवा। द्यू२म्नाम्। वा२३यिभा। स

१ ४ ४ २ र १ १र
हाम्। औ२३होवा ॥(१) वयन्ते अस्यरा१धासा:। वसो

र १ १ १ र र २ र
र्वं। सोपू२३ह्व। ऊम्मा२१ऽ२। स्पृहोनिनेदिष्ठतमा

२ १ २ १ १ २
इषा१:। स्थामा३उवा। सू२म्नायि। ते२३आ। भ्रि

१ २ ४ ५ २ र र २ १
गा। औ३होवा ॥(२) परिस्यस्वानोआ१हारात्। इन्दु

* ऊ० गा० १२प्र० १ख० १५सा० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



र। व्येमा२३दा। ऊम्मा २१२। च्युतोधारायजह्वो

अध्वरा१यि। भ्राजा३उवा। ना २या। ना२३यिगा।

व्ययूः। औ२३होवा। हो५ई। डा(३) ॥ १६ * ॥ [८]

॥ निषेधम् † ॥ अभीनोवाजा३सातमाम्। रयायिम

र्षा। शतस्पृहा २म्। इहा३। आयिन्दो३साहा। हा

हो२३४हा। स्वभर्णा२३साम्। इहा३। तूवा३यिद्यू

म्नाम्। हाहो २ ३ ४ हा। विभा३मा५हा६५६म् ॥(१)

वयन्ते अस्या३रा३धसाः। वसोर्वसाउ। पुरुस्पृहा २ः।

इहा३। नायिने३दायिष्ठा। हाहो२३४हा। तमाआ

२३यिषाः। इहा३। स्यामा३सूम्नायि। हाहो२३४हा।

तेआ३धा५यिगा६५६उ ॥(२) परिस्यस्वानो३अक्षरात्।

इन्दुरव्यायि। मदच्युता २ः। इहा३। धारा३याऊ।

---

* ऊ० गा० १२प्र० १ख० १६सा०। † "निषेधः"—इति ख० पु० पाठः।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ ३ ३ २र १ २ १ २ १ २
हाहो२३४हा। छ्वे३अध्वा२३रायि। इहा३। भाजा

४ ५ २ ३ ५ ३ २ ४ ३ १ १
३नाया। हाहो२३४हा। तिगा३व्या५यू६५६ः। हे२३

१ १
४५(३) ॥ १२ * ॥ [९]

५ र २ ४र५ ४र ५ २ १ २ १
॥ साध्रम् ॥ अभीनो३वाजसातमाम्। रयायिमर्षा

३ २ ३ ५ १ र २ १ २ ३ १ १
२। शता३४५। स्पृ२३४हाम्। इन्दोसहस्रभर्णसा२३

१ १ १ २ ३ ५ १ २ ३ ५ ४
४५म्। त्वा३ओ२३४वा। द्युम्ना३ओ२३४वा। विभा५

५ २ ४ ५ ४र ५ २ १ २ १
सहाम् ॥(१) वयन्ते३अस्यराधसाः। वसोर्वसा २ उ।

२ २ ३ ५ १ र २ २ ३ २ २
पुरु३४५। स्पृ२३हाः। निर्नेदिष्ठतमाइषा१ः। सुम्ना

३ ५ १ २ ३ ५ ४र
ओ२३४वा। सुम्ना३ओ२३४वा। ते३आ५धिगाउ ॥(२)

५ २ ४ ५ र ४ ५ २ १ २ १ ३ २
परिस्या३स्वानोअक्षरात्। इन्दूरव्या२यि। मदा२३४५।

३ ५ १र २र १ २र १र २ ३ २ २ ३
च्यू२३४ताः। धारायऊर्ध्वोअध्वरा१यि। भाजा३ओ२३४

* ऊ० गा० १७प्र० १ अ० १२सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



वा । नायाओर ३ ४ वा । तिगा ५ व्ययूः । हो५ई । डा(३) ॥ १३ * ॥ [१०]

॥ यज्ञायज्ञीयम् ॥ अभाऽ५यिनः । वाइजा३साता माम् । रायिमर्षा । शा३तास्पृ६हाम् । इन्दो२स हस्रा२३भा । ऊम्मायि । णा३माम् । हविद्युम्नंविभा २ सहाउ ॥(१) हावा । यन्तेअस्यराधसोवसोर्वसाउ । पू३रुस्पृ६३हाः । निने२दि । ष्ठतार२३माः । ऊम्मायि । आ ३ यिषाः । स्यामसुम्नेतेआ२ध्रिगाउ ॥(२) गोपा । रिस्यस्वानोअत्तरदिन्दुरव्यायि । मा३दाच्यू३ताः । धा रा२यः । ऊर्ध्वी२३५ । ऊम्मायि । ध्वा३रायि । आजा नयातिगा२व्ययाउ । वा३४५(३) ॥ १४ † ॥ [११]

---

* ऊ० गा० १७प्र० १ख० १३सा० ।

† ऊ० गा० १७प्र० १ख० १४सा० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ र र र २र १
॥ स्वारकौत्सम् ॥ अभीनोवाजा३सातमाम् । रयि
२ २ २ र २ १ २ १
मर्षंशता१स्पृ३हाम् । इन्दोसहा३ । स्ना३भार्णा३साम् ।
१ ३ ५ ३ २ ३
आऽ२यि । तुविद्युम्नो२३४हायि । विभा३सा५हा६५६म् ॥(१)
२ र २र १ र र २ २ २ र
वयन्ते अस्या३राधसाः । वसोर्वसोपुरू१स्पृ३हाः । निने
२ १ २ २ १ र ३
दिष्ठा३ । ता३मा आ३यिषाः । आऽ२यि । स्यामसुम्नो
५ ३र २ ४ २ र
२३४हायि । ते आ३धा५यिगा६५६उ ॥(२) परिस्यस्वा
२ १ र १ २ २ र र
नो३अक्षरात् । इन्दुरव्यं मदा१च्यू३ताः । धारायऊ३ ।
२ १ १ २ १ र र ३ ५
र्ध्वो३आध्वा३रायि । आऽ२यि । भ्राजानयो२३४हायि ।
३ २ ४
तिगा३व्या५यू६५६ः(३) ॥ १८ * ॥ [१२]

२ र र ३ ५ २
॥ कार्त्तयशसम् ॥ अभीहाहाउ । नो२३४वा । ज
१ २ २ ४ ५ २१ २ २ ४ ५
सा औ३हो३तामाम् । रयायिमौ३हो३यि । आर्षा६ ।
५ २ १ १ २ १ र २ २
हाउवा । शतस्पृहा२म् । उपा । इन्दोसहस्रभा१र्णा

* क० गा० १०प्र० १ख० १८गा० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



३साम्। तुवश्रौ३हो३यि। द्यूम्ना६म्। हाउवा। वि
भासहम्। उपा२३४५॥(१) वय७हाहाउ। ते २ ३ ४
श्रा। स्वरा श्रौ२हो३। धासाः। वसाश्रौ३हो ३ यि।
वासा६उ। हाउवा। पुरुस्पृहा२ः। उपा। निनेदि
ष्ठतमा१श्रा३यिषाः। स्वामाश्रौ३हो३यि। सुम्ना६हायि।
हाउवा। तेश्रध्रिगो। उपा२३४५॥(२) परीहाहाउ।
स्वा२३४स्वा। नोश्राश्रौ३हो३। चारात्। इन्दूरौ३हो३
यि। श्राव्या६यि। हाउवा। मदच्युता२ः। उपा।
धारायऊर्द्ध्वीश्रा१ध्वा३रायि। भ्राजाश्रौ३हो३। नाया
६। हाउवा। तिगव्ययूः। उपा२३४५(३)॥ १० *॥[१३]

॥ त्रीतन्वाष्ट्रीसाम†॥ श्रभीनोवा। जसा३तमाम्।
रयायिमर्षा६श्रता३। ए३। स्पृहमा। इन्दोसहा३सभा

* ऊ० गा० १८प्र० १ख० १०सा०। † "त्र्यन्तलाष्ट्री साम"—इति ख० पु० पाठः।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ २ ३ २ १ १ २ १
३। ए३। त्ससमा। तुवायिद्यु म्नाऽविभाऽ। ए३।

२ ३ २
सहमा(१) ॥ ८ * ॥ [१४] १६

अथ तृतीयसूक्ते—

प्रथमा।

१२ ३१ २३२ ३२३१ १ १' ३ १र २र
पवस्वसोममहांत्समुद्रःपितादेवानांविश्वाभिधाम ॥१†॥

हे "सोम!" "महान्" "देवेभ्यो" दीप्यमानत्वेन महत्व-युक्तः, "समुद्रः" समुन्दनः यस्मात् समुद्रवन्ति तादृशः, "पिता" सर्वेषां पालयिता त्वं "देवानां" "विश्वा" विश्वानि सर्वाणि "धाम" धामानि शरीराणि "अभि" लक्ष्य "पवस्व" चर ॥ १ ॥

अथ द्वितीया।

३ १ २ ३ १ २ ३ १ २ ३ १र २र३ १ २
शुक्रःपवस्वदेवेभ्यःसोमदिवेपृथिव्यैशञ्चप्रजाभ्यः ॥ २ ‡ ॥

हे "सोम!" "शुक्रो" दीप्तः त्वं "देवेभ्यः" देवार्थं "पवस्व" चर। किञ्च "दिवे पृथिव्यै" च द्यावापृथिवीभ्याञ्च ततः "प्रजाभ्यः च" "शं" सुखं कुरु ॥

"प्रजाभ्यः"-"प्रजायै"—इति पाठौ ॥ २ ॥

---

* ऊ० गा० १८प० २ख० ६सा०।

† छ० आ० ५, ९, ५, २ (१भा० ८०३पृ०)=ऋ० वे० ७, ५, २०, ४।

‡ ऋ० वे० ७, ५, २०, ५।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ तृतीया।

२ २ ३१ २ ३२ ३ १२ ३१र २र ३ १ २
दिवोधर्त्तासिशुक्रःपीयूषःसत्येविधर्मन्वाजीपवस्व॥३*॥१७

हे सोम! "शुक्रः" दीप्तः "पीयूषः" पातव्यः त्वं "दिवः" द्युलोकस्य "धर्त्ता" धारकः "असि", "वाजी" बलवान् स त्वं "सत्ये" सत्यभूते "विधर्मन्" विधर्मणि [ विविधानि कर्माणि ऋत्विजो कुर्वन्ति यस्मिन्; यद्वा, विविधं सोमादि-हविषां धारकेऽस्मिन् ] यज्ञे "पवस्व" चर॥ ३ ॥ १७

२र १ र २ र १ २
॥ धर्मम् ॥ औहोऽ३वा। औहोऽ३वा। औहोऽ२वा

५र ५ १ २ र १र १ २ २ १र
२३४औहोऽ६वा। पवस्वसोममहान्समुद्राः। पितादे२

१र १२र १ र १११ २ १ २ र १र
वाना२विश्वा। उतिवामा२३४५॥(१) शुक्रःपवस्वदेवेभ्य

२र ३ १११ २ १र २१र २ १र १११ २ १र
सोमा२३४५। दिवेप्रथिव्यैशंचप्रजाभ्या२३४५ः। दिवो

२ १र २ १ २र १र ११११ २ १र २ र १र २ ३
धर्त्तासिशुक्रःपीयूषा२३४५ः। सत्येविधर्मन्वाजीपवस्वा

११११ १ २र १ ११११ २१र ३२ २१र
२३४५॥(१) पवस्वसोमा२३४५। महान्समुद्राः। पिता

१र ११११ १ २र १ र १ १११ २ १
दे२वाना२३४५म्। विश्वाभिधामा२ ३ ४ ५॥(२) शुक्र

* ऋ० वे० ७, ५, १०६।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ ३ १११११ १र१र २र३ ११११ २१र १ १
पवस्वा२३४४ । देवेभ्यःसोमा२३४५ । दिवेपृथिव्या१यि ।
२१र ११११ २१र२१र३ ११११ २ १ १र१र
शन्वप्रचाभ्या२३४५ः । दिवोधर्त्तासी२३४५ । शुक्रःपीयू
११११ २१र १२ २र१र २३ ११११
षा२३४५ः । सत्येविधर्म्मा१न् । वाजीपवस्वा२ ३ ४ ५ ।
२र २ र १ २ ५र ५ २ १
औहोऽवा२ । औहोऽवा२३४औहोऽवा । ए३ । धर्म्मा
१११
२३४५(३) ॥ ८ * ॥ [१]

२ २ १ २ १
॥ आन्धीगवम् ॥ पा१वास्त्वा । सो२३मा । ऊर्म्मा२
१र २१ २१र२र१र३ ११११ १ २
१ऽ२ । महान्त्समुद्रःपितादेवाना२३४५म् । वायिस्वा३
२ १ २ १ २ ४ ५ ४
उवा । भा२३यिधा । मा । औ३होवा । होऽ५ई ।
डा(३) ॥ ८ † ॥ [२] १७

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य नवमस्याध्यायस्य

अष्टमः खण्डः‡ ॥ ८ ॥

---

* ऊ० गा० ५प्र० १ख० ९भा० ।

† ऊ० गा० २१प्र० ३ख० ८भा० ।

‡ 'यज्ञायज्ञीयमग्निष्टोमसाम,'—इति वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ नवम-खण्डे*—

प्रेष्ठंवइति त्र्यात्मक सूक्तम्,

तत्र प्रथमा ।

१ २ ३ १ २ ३ १ २ ३ १ २ ३ १
प्रेष्ठंवो अतिथिꣳस्तुषेमित्रमिवप्रियम् ।

१ २ ३ १ २ १ २ १ २
अग्नेरथन्नवेद्यम् ॥ १ † ॥

हे "अग्ने!" "वः" त्वां [ पूजार्थे बहुवचनम् ] "स्तुषे" स्तौमि अहमुशनेति शेषः। कीदृशम्? प्रेष्ठम्" अस्माकं स्तोतॄणां धन-दानेन प्रियतमम्। "अतिथिं" सर्वैरतिथिवत् पूज्यं [यद्वा, अत सातत्यगमने (भ्वा० प०) ऋतन्यञ्जि (उ० ४,२)"—इत्यादिना अतेरिथिन्। सततं देवानां हविः प्रदातुं गच्छन्तम् ] "मित्रमिव" सखायमिव "प्रियं" स्तोतुः प्रीणनकरं "रथं न" रथमिव "वेद्यं" वेदो धनं धन-हितं लाभ-हेतुं [ यथा स्वाभिमत-लाभाय आश्रयन्ते धन-लाभ-हेतुं रथम्; यद्वा, यथा रथेन धनं लभते तद्वत् स्तोतारोऽनेन धनं लभन्ते, तादृश-धन-लाभ-कारणम् ]। हे अग्ने! तस्मै हितं वेद्यं त्वां कर्म-सिध्यर्थम् अहं स्तोता स्तौमीति सम्बन्धः॥

"अग्ने"–"अग्निम्"—इति पाठौ ॥ १ ॥

---

* इदानीमुक्थसामानि भवन्ति औशनं प्रथममुक्थम्—इति वि०।

† छ० आ० १, १, १, ५ (१भा० १००पृ०) = ऋ० सं० ६, ६, ५, १ = य० वे० १३, ५१।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीया ।

३ १ २ १२ २ १ ३ २ ३ १ २ ३ २
कविमिवप्रशꣳस्यंयन्देवासइतिद्विता ।
१२ २२ ३ २
निमर्त्त्येष्वादधुः ॥ २ * ॥

हे "देवासः" देवाः इन्द्रादयः ! "यम्" अग्निं "मर्त्त्येषु" मनुष्येषु "इति" वक्ष्यमाण-प्रकारेण "द्विता" द्विधा† "न्यादधुः" गार्हपत्याहवनीयात्मकत्वेन द्विधा निहितवन्तः । तत्र दृष्टान्तः—"कविमिव" "प्रशंस्यं" प्रशंसनार्हं क्रान्त-कर्माणं पुरुषं यथा द्विधा कार्यद्वये अन्यो नियोजयति तद्वत् [ यद्वा दिवि पृथिव्यां च निहितवन्तः, भूमौ तु हविराहरणार्थं दिवि तु हविः प्रदानार्थमिति द्वैधं निधानं कृतवन्तइत्यर्थः ] । तमग्निं स्तुषे इति पूर्वेण सम्बन्धः ॥

"प्रशंस्यं"-"प्रचेतसं"—इति पाठौ ॥ २ ॥

अथ तृतीया ।

१ २ ३ २ ३ १ २ ३ १२ २२
त्वंयविष्ठदाशुषोनॄꣳःपाहिशृणुहीगिरः ।
१ २ ३ २ ३ १२ २२
रक्षातोकमुतत्मना ॥ ३ ‡ ॥ १८

* ऋ० वे० ६, ६, ५, २ ।

† 'द्विता नाम ऋषिः'—इति वि० ।

‡ ऋ० वे० ६, २, ५, ३ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



हे "यविष्ठ" युवतम! [यद्वा, यौतेस्तृजन्तस्य इष्ठनि* रूपं देवानां हविषां मिश्रयितृतम!] इन्द्र! त्वं "दाशुषः" हविर्दत्तवतः "नॄन्" कर्म्मणां नेतॄन् यजमानान् "पाहि" धनानां दानेन रक्ष [नॄःपाहीत्यत्र संहितायां "नॄन्पे (८, ३, १०)"—इति नकारस्य रुत्वम्, "अत्रानुनासिक (८, ३, २)"—इति पूर्व्वस्यानुनासिकः। किञ्च, "गिरः" त्वद्विषयाः स्तुतीः "शृणुहि"† अवहितः सन् शृणु। "उत" अपिच "त्मना"‡ आत्मनैव "तोकम्" अस्मदीयं "तनयं" पुत्रं "रक्ष"¶ पालय [त्मनेति सर्व्वत्र सम्बध्यते—आत्मना स्वयमेव रक्ष, त्वदन्य पालयितारं न विन्दामः त्वमेवास्मदीयम्॥

"शृणुही"-"शृणुधि"—इति पाठौ॥ ३॥ १८

१र१ १ २
॥ गायत्रगौषनम्॥ प्रेष्ठंवाः। अता २ ३ यिथीम्।
१र र २ १ २ १ २ २ १
स्तौषेमित्रम्। इवप्रा२३याम्। अग्न्.विरा३था३म्। ना
२ १ ५ ५ १ २ १ २
वा२३हा३४३यिदा२३४योऽहायि॥(१) कविमिवा। प्र
१ २ १ र २र १ २ १
श०ंसा२३याम्। यान्देवासः। इतिद्वा२३यिता। नि

* "तुम्छन्दसि"—इति पा० ५, ३, ५९।

† "शृणुही"—इति दीर्घः संहितायाम्।

‡ "मन्त्रेष्वाङ्यादेरात्मनः"—इति पा० ६, ४, १४१।

¶ संहितायान्तु "रक्षा"—दीर्घान्तः, तत्र द्व्यच इति दीर्घः।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ २ १ २ १ ५ ५
मात्तीश्ये३ । षूवा२३द्दा३४३यि । दा२३४धोई्दा ॥(२)

१र १ २१र २ १ र २ १र
तुवंयवायि । छदाभ्रू२३षाः । नृडपाहिष्ट । णुद्दोगा

२ १ १ २ १ २
२३यिराः । रक्षातो३का३म् । ऊता२३द्दा ३ ४ ३यि ।

१ ५ ५
त्मा२३४नोई्दायि(३) ॥ ११ * ॥ [१] १८

अथ त्र्यचात्मके द्वितीय-सूक्ते—

प्रथमा ।

१ २ ३ १ २
एन्द्र नोगधिप्रियसत्राजिदगोह्य ।

३ २उ ३ १ २ ३ १र ३र ३ २
गिरिर्नविश्वतःपृथुःपतिर्दिवः ॥ १ † ॥

हे "प्रिय" स्तोतॄणां प्रीणनकर ! "सत्राजित्"‡ महतां शत्रूणां जेतः ! हे "अगोह्य" केनापि गुहितुमशक्य ! "इन्द्र !" "गिरिर्न" पर्वत इव¶ "विश्वतः" सर्वतः "पृथुः" पृथुतमः "दिवः" स्वर्गस्य "पतिः" ईश्वरस्त्वं "नः" अस्मान् "आगधि" आगच्छ ॥

---

* ऊ० गा० ५प्र० १अ० ११सा० ।

† छ० आ० ५, १, १, ३ (१भा० ८०७पृ०)=ऋ० वे० ६, ७, १, ४ ।

‡ 'सत्राजित्—सदाजेता'—इति वि० ।

¶ 'गिरिर्मेघः अन्तरिक्षव्यापी अथवा गिरयः पर्वताः—इति वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"प्रियसत्राजिदगोह्य"-"प्रियःसत्राजिदगोह्यः"—इति पाठौ, "विश्वतःस्पृशु"*-"विश्वतस्पृशुः"—इति च ॥ १ ॥

अथ द्वितीया।

२ १र २र ३ २ ३ १ ३ १ १

अभिहिसत्यसोमपाउभेबभूथरोदसी।

१र २र ३ २ ३ १र २र ३ २

इन्द्रासिसुन्वतोवृधोपतिर्दिवः ॥ २ † ॥

हे सत्य! "सोमपाः" सोमस्य पातः! "इन्द्र!", यस्त्वम् "उभे" "रोदसी" द्यावापृथिव्यौ "अभि बभूथ" सामर्थ्येनाभिभवसि स त्वं "सुन्वतः" सोमाभिषवं कुर्वतः यजमानस्य "वृधः" वर्धकः "असि"। "दिवः" स्वर्गस्यापि "पतिः" ईश्वरोऽसि ॥२॥

अथ तृतीया।

१र २र ३ १ २ ३ २ ३ १र १र

त्वꣳहिशश्वतीनामिन्द्रदर्त्ता‡पुरामसि।

३ २उ ३ १ २ ३ १र २र ३ २

हन्तादस्योर्मनोर्वृधःपतिर्दिवः ॥ ३ ¶ ॥ १९

---

* नैष पाठः क्वचिदप्युपलभ्यते।

† ऋ० वे० ६, ७, १, ५।

‡ "धर्त्ता"—इति मु०-पाठः सायणसम्मतश्च परं बहुपुस्तकविरोधात् पदादिपन्थोऽपि एवमदर्शनाच्चोपेक्षणीयएव।

¶ ऋ० वे० ६, ७, १, ६।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



हे "इन्द्र!" "त्वं" "अश्वतीनां" बह्वीनां "पुरां" असुरनगरीणां "धर्त्ता असि हि" दारयिता भवसि खलु। किञ्च, "दस्योः" हयाकालस्योपक्षेपयितुरसुरस्य "हन्ता" असि घातको भवसि "मनोः" मनुष्यस्य यागादि कुर्वतो "वृधः" वर्द्धकश्चासि। "दिवः" स्वर्गस्यापि "पतिः" ईश्वरोऽसि॥ ३॥ १९

॥ साम्बर्त्तम्॥ एन्द्रनोऽ३गधिप्रायाः। साचाजित्। अगोहायौ। होऽ३वा। गिरायिर्न्नवौ। होऽ३वा। अवताः। पार्र्यू२३४औहोवा॥(१) अभिहि़सा२त्यसोमायाः। ऊमेवभू। यरोहासौ। हो३वा। इन्द्रासिसौ। होऽ३वा। न्वतः। वार्ह्वार२३४औहोवा॥(२) तुवण्ढिशा२श्वतायिनाम्। आयिन्द्रहर्त्ता। पुरामासौ। होऽ३वा। हन्तादस्यौ। होऽ३वा। मनोः। वार्ह्वार२३४औहोवा। पतिर्दिवा१ः(३)॥ १२ *॥ [९] १९

* ऊ० गा० ५प्र० १ख० १२गा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ तृचात्मके तृतीय-सूक्ते*—

प्रथमा ।

३ २ ३ १र २र ३ १र २र १
पुराम्भिन्दुर्युवाकविरमितौजा अजायत ।
२ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ २
इन्द्रोविश्वस्यकर्म्मणोधर्त्तावज्रीपुरुष्टुतः ॥ १ † ॥

अयम् "इन्द्रः" उच्यमान-गुणयुक्तो "अजायत" सम्पन्नः । कीदृग्गुणकः ? इति तदुच्यते—"पुराम्" असुर-पुराणां "भिन्दुः" भेत्ता "युवा" कदाचिदपि बली-पलितादि-वार्द्धक्य-रहितः "कविः" मेधावी "अमितौजाः" प्रभूत-बलः विश्वस्य कर्मणः कृत्स्नस्य ज्योतिष्टोमादेः "धर्त्ता" पोषकः "वज्री" यजमान-रक्षणार्थं सर्वदा वज्रयुक्तः "पुरुष्टुतः" बहुविधे तत्तत्कर्मणि स्तुतः ॥ भिन्दुः—भिदिर् विदारणे ( रु० प० ), कुरित्यनुवृत्तौ "मृ-भिदि-व्यधि-गृधि-धृषिभ्यः (उ० १, २३)"—इति कु-प्रत्ययः, तस्य "छन्दस्युभ यथा (३,४,११७)"—इति सार्वधातुक-सञ्ज्ञायां "रुधादिभ्यः श्नम् ( ३, १, ७८ )" मित्त्वादन्त्यादचः परो भवति, "श्नसोरल्लोपः (६,४,१११)" अनुस्वार-परसवर्णौ "अचः परस्मिन् पूर्वविधौ ( १, १, ५७ )"—इति प्राप्तस्य स्थानिवद्भावस्य "न पदान्तेत्यादिना (१, १, ५८) निषेधः । युवा—यु मिश्रणा-मिश्रणयोः ( अदा० प० ) "कनिन्युवृषितक्षिराजिधन्विद्युप्रति-

* 'मारुतं साम'—इति वि० ।

† छ० आ० ४, २, २, ८, ( १भा० ७३३पृ० )=ऋ० वे० १, ११, ४ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



दिव: (उ० १,१५४)''—इति कनिन् नित्त्वादाद्युदात्त: (६, १, १९७)। कवि:—कु शब्दे (अदा० प०) "अचइरिति(उ०४,१३८) इ: प्रत्ययस्वर: (३,१,३)। अमित:—अमित-शब्दस्याव्ययपूर्व-पदप्रकृतिस्वरम् (८,२,१) "बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वेन" तदेव शिष्यते। त्रिखस्य—"अशूप्रुषीत्यादिना (उ०१,१४९) क्वन्, नित्त्वा-दाद्युदात्त: (६,१,१९७)। कर्मणा—अन्येभ्योऽपि दृश्यन्ते (३,२, ७५)"—इति मनिन् नित्स्वर: (६, १, १९७)। धर्त्ता—टच्, कित्त्वादन्तोदात्त: (६,१,१६५)। वज्री—मत्वर्थीय इनी (५, २, १२२), प्रत्यय स्वर:। पुरुष्टुत:—"स्तुतस्तोमयोश्छन्दसि (८,३, १०५)"—इति षत्वम् बहुषु प्रदेशेषु स्तुत: "थाथघञ्क्ताज-वित्रकाणाम् (६, २, १४४)"—इत्यन्तोदात्तत्वम्, तृतीया-समासे हि थाथादिस्वरापवाद:, "तृतीया कर्मणि (६, २, ४८)"—इति पूर्वपदप्रकृतिस्वर: स्यात् ॥ १ ॥

अथ द्वितीया।

१ ३ १ ३ १ ३ १ १     ३ १ १<br>
त्वंवलस्यगोमतोवावरद्रिवोबिलम्।

१ २ ११ २१    ३ १ १<br>
त्वान्देवाअभिभ्युषस्तुज्यमानासआविषुः ॥ २ * ॥

[वलनामक:† कश्चिदसुरो देवसम्बन्धिनीर्गा अपहृत्य कस्मिंश्चिद् बिले गोपितवान् तदानीमिन्द्रस्तद्बिलं समाहृत्य

---

* ऋ० वे० १, ११, ५।

† 'बलोनाम दानव:, तमसापिधान आसीत्' -इत्यादि वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



तस्माद् बिलाद् गाः निःसारयामास, तदिदमुपाख्यान मिन्द्रो बलस्य बलमौर्गोदित्यादि ब्राह्मणेषु मन्त्रान्तरेषु च प्रसिद्धम्, तदेतद्हृदि निधायायं मन्त्रः प्रवर्त्तते—]हे "अद्रिवः" वज्रयुक्तेन्द्र! त्वं "गोमतः बलस्य" गोभिर्युक्तस्य बलनामकस्यासुरस्य सम्बन्धि "बिलम्" "अपावः" स्व सैन्य-मुखेनापाहृतवानसि। तदानीं "तुज्यमानासः" बलेन हिंस्यमानाः "देवाः" "अबिभ्युषः" त्वद्-यया रचया बलादभीताः सन्तः "त्वामाविषुः" प्राप्तवन्तः। अपेत्यस्य निपातत्वादाद्युदात्तत्वम्(फि०४,१२)। अवः—वृञ् वरणे (स्वा० उ०), लङ् सिप्, "इतश्च लोपः (३,४,९७)", "स्वादिभ्यः श्नुः (३, १, ७३)", तस्य बहुलञ्छन्दसि (२, ४, ७६)"—इति लुक्, गुणो रपरत्वम्, हल्ङ्यादि-लोपः, विसर्जनीयः, अडा-गमः। अद्रिवः—अद्रिरस्यास्तीति मतुप्, "छन्दसीरः (८,२, १८)"—इति वत्वम्, सम्बोधने "उगिदचामिति नुम् (७,१,७०), हल्ङ्याप्-संयोगान्त-लोपौ, "मतुवसो रुः सम्बुद्धौ छन्दसि (८,३,१)" —इति रुत्वम्। बिलं—"नब्विषयस्यानिसन्तस्येत्याद्युदात्तत्वम् (फि०२,३)। अबिभ्युषः—ञि भी भये(जुहो०प०)लिङ्, द्विर्भावः, अभ्यासस्य ह्रस्व-जश्त्वे,* "क्वसुश्च (३,२,१०७)"—इति लिटः क्वसुरादेशः, क्रादिनियमात्, प्राप्त इट् "वस्वेकाजाद्घसाम् (७, २, ६७)"—इति नियमान्निवर्त्तते, जसि सर्वनामस्थाने-

* "अबिभ्युषः"—इति पाठस्तु न सार्वत्रिकः, नर्मान्मुद्रितपुस्तके क-पुस्तके च "अभिभ्युषः"—इति दर्शनात्।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



ऽपि व्यत्ययेन भत्वात् वसो: सम्प्रसारणम्, पर-पूर्वत्वम्, "शासि-वसिघसीनाञ्च (८,३,६०)"—इति षत्वम्, "अचि श्नु धात्वि-त्यादिना (६, ४, ७७) प्राप्तमियङादेशं बाधित्वा "एरनेकाच (६, ४, ८२)"—इति यणादेशः, नञ् समास:, अव्यय-पूर्वपद-प्रकृतिस्वरत्वम्। तुञ्ज्यमानासः—तुजेर्हिंसार्थात् परस्य कर्मणि लटः स्थाने शानच्, "सार्वधातुके यक् (३, १, ६७)"—इति यक् तस्माददुपदेशादुत्तरस्य लसार्वधातुकस्यानुदात्तत्वम् (६, १, १८६), यकएव प्रत्ययस्वरः शिष्यते। आविषुः—अव रक्षणादिषु, अस्माद् गत्यर्थाल्लुङो झेस्तस्य "सिजभ्यस्तविदि-भ्य: (३, ४, १०९)"—इति जुस्, सिच इडागमः, "आड़जा-दीनाम् (६,४,७२)"—इत्याड़ागमः, आदेश-प्रत्यययो: (८, ३, ५९)"—इति षत्वम्॥ २॥

अथ तृतीया।

२ ३ १ २ ३ १ २ ३ १र २र
इन्द्रमीशानमोजसाभिस्तोमैरनूषत।

१ २ ३ १ २ ३ १ २ ३ १ २ २ ३ १ २
सहस्रंयस्यरातयउतवासन्तिभूयसी:॥ ३ *॥ २०

"स्तोतारः" "ओजसा" बलेन "ईशानं" जगतो नियामकम् "इन्द्रम्" स्तोमैः" बृहदादिभिः "अभ्यनूषत" सर्वत्र स्तुवन्ति। "यस्य" इन्द्रस्य "रातयः" धन-दानानि "सहस्रं" सहस्र-सङ्ख्यो-

* ऋ० वे० १, १, ११, ८



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



येतानि सन्ति "उत वा" अथवा "भूयसीः"* सहस्र-सङ्ख्याकाः अभ्यधिकाः "सन्ति"। तमिन्द्रमिति पूर्वत्रान्वयः ॥

"स्तोमैः"-"स्तोमाः"—इति पाठौ ॥

इन्द्रम्—"ऋज्रेन्द्रे"त्यादिना रन् (उ०२,२८), नित्त्वादाद्युदात्तः (६,१,१९७)। ईशानम्—लटः शानच् (३,२,१२४), "अदिप्रभृतिभ्यः शपः (२,४,७२)"—इति धातोरनुदात्तेत्त्वात् तास्यनुदात्तेदित्यादिना (६, १, १८६) शानचोऽनुदात्तत्वम्। ओजसा—नब्विषयत्वादाद्युदात्तः (फि० २, ३)। स्तोमैः—अर्त्ति-स्तुस्वित्यादिना (उ०१,१३७) मन् प्रत्ययः, नित्त्वादाद्युदात्तः (६, १, १९७)। अनूषत— णु स्तुतौ; "णो नः (६,१,६५), लङ् व्यत्ययेन, लुङ्, तस्य अदादेशः, "च्लेः सिच् (३, १, ४४), अस्य धातोः कुटादित्वेन सिचो ङित्त्वाद् (१, २, १) गुणाभावः, इडभावश्छान्दसः, अडागमः। सहस्रं—"कर्दमादीनाञ्च (फि० ३, ११)"—इति द्वितीयाक्षरमुदात्तम्। रातयः—"मन्त्रे वृषेषे"त्यादिना (३,३,९६) क्तिनउदात्तः। उत—प्रातिपदिक-स्वरः (फि०१,१)। वा—चादिरनुदात्तः (फि०४,१६)। सन्ति—प्रत्ययाद्युदात्तत्वम्, (३, १, ३), "तिङतिङः (८, १, २८)"—इति निघातो न भवति "यद्वृत्तान्नित्यम् (८, १, ६६)"—

---

* 'भूयसीः रातयस्त्वनुषज्यन्ते'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



इति प्रतिषेधात्, सहि व्यवहितेऽपि भवतीत्युक्तम्। भूयसोः—सहस्रादतिशयेन बह्वः भूयस्यः, अत्र विभक्तस्य सहस्रस्य सन्निधि-बलात् उपपदत्व-प्रतीतेर्द्विवचनं विभज्योपपदे तरबीयसुनाविति बहुशब्दादीयसुन्, "बहोर्लोपो भू च बहोः (६,४,१५८)"—इति इकार-लोपः, बहोर्भूइत्यादेशश्च, ईयसुनो निद्वादाद्युदात्तत्व, "उगितश्च (४, १, ६)"—इति ङीप्॥ ३॥ २०

५र ३ २ ३ ५र ५ १ र र १
॥मारुतम्॥ पुराम्भिदुर्युवाकवीः। अमितौजाअ
१र १ १ र २ १ २ ३ ५
जायार३ता। आयिन्द्रोविश्वा३। स्याकर्म्मार२३४णाः।
१ २ ३ ५ ४ ५
धर्त्ता। वाज्रीवाओ२३४वा। पुरूपुष्टुताः॥(१) तुव
२ १ ३ ४र ५ १ र २ १र २ १ र
म्बलस्यगोमताः। अपावरद्रिवोबार३यिलाम्। त्वा
र २ १ २ ५ १ २ ३
न्देवा३ः। आबिभ्यू२३४षाः। तुज्या। मानौवाओ२३
५ ४ ५ ३र २र ३ ४र ५ १ र
४वा। सत्रा५विषू॥(२) इन्द्रमीशानमोजसा। अभिस्तो
र २ १र २ १ २ १ २ ३ ५ १
मैरनूषा२३ता। साहस्रन्धा३। स्यारोता२३४याः। उता।
२ ३ ५ ४ ४
वासौवाओ२३४वा। तिभूयसीः। हो५ई। डा(३)॥१३*॥

* ऊ० गा० ५प्र० १ख० १३सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



॥ महावैश्वामित्रम्* ॥ हयायि । हया३ । ओहा ओहा । हयायि । हया३ । ओहाओहा । हयायि । हया३ । ओहाओहा । पुराम्भिन्दूः । युवाकावीर२ः । अमितौजाः । अजायाता२ । इन्द्रोविश्वा । स्यकर्म्मा णा२ः । धर्त्तावज्री । पुरुष्टुता२ः ॥(१) तुवम्बला । स्य गोमाता२ः । अपावरा । द्रिवोवायिला२म् । तुवा न्देवाः । अबिभ्यूषा२ः । तुज्यमाना । सआवायिषू२ ॥(२) इन्द्रमीशा । नमोजासा२ । अभिस्तोमैः । अनूषाता २ । सहस्रंया । स्यरातायार२ः । उतवासा । तिभूया सी२ः । हयायि । हया३ । ओहाओहा । हयायि । हया३ । ओहाओहा । हयायि । हया३ । ओहाओ

* "वैश्वामित्रम्"—इति ख० पु० पाठः ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



हा। हो४ ईडा। हो४ इडा। हो२३४५ ई।
डा(३) ॥ २० * ॥ [२] २०

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य नवमस्याध्यायस्य
नवमः खण्डः† ॥ ९ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थ-महेश्वरः ॥ ९ ॥

॥ इति पञ्चमस्यार्द्धः प्रपाठकः ॥

इति श्रीमद्राजाधिराज-परमेश्वर-वैदिकमार्गप्रवर्त्तक-
श्रीवीर-बुक्क-भूपाल-साम्राज्य-धुरन्धरेण सायणा-
चार्य्येण विरचिते माधवीये सामवेदार्थ-प्रकाशे
उत्तराग्रन्थे नवमोऽध्यायः‡ ॥ ९ ॥

---

* ऊ० गा० २२प्र० २ख० १०सा० ।

† 'अष्टमखण्डः समाप्तम्'—इति वि० ।

‡ 'पञ्चमस्य प्रपाठकस्य प्रथमोऽध्यायः समाप्तः'—इति वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्म्ममे तमहं वन्दे विद्यातीर्थ-महेश्वरम् ॥ १० ॥

## ॥ अथ दशमोऽध्याय आरभ्यते* ॥

तत्र,

अक्रान्त्समुद्र इति त्र्यचात्मकं प्रथमं सूक्तम्,

तत्र प्रथमा ।

१ २    ३ १ २ ३ १र   १र
अक्रान्त्समुद्रः प्रथमे विधर्म्म
३ १ २ ३ १र   २र   ३ २
ञ्जनयन्प्रजा भुवनस्य गोपाः ।
१ २ ३ २ ३ २ ३ २ ३ १ २
वृषा पवित्रे अधि सानो अव्ये
१ १र   २र   ३ १र   २र
बृहत्सोमो वावृधे स्वानो अद्रिः ॥ १ † ॥

"समुद्रः" [ यस्मादापः सन्द्रवन्ति स समुद्रः ] अपां वर्षकः, "गोपाः" स्वामित्वेन सर्वस्य रक्षकः सोमः "प्रथमे" विस्तृते "भुव-

---

* 'इदानीं नवममहः षट्चत्वारिंशमुच्यते। तत्र च ब्राह्मणेन गायत्र-प्रभृतीनां साम्नामार्षेयमुक्तम्'—इति वि० ।

† ऋ० आ० ६, १, ४, ७ (२भा० १२१४०) = ऋ० वे० १७, ४, १८, ५।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



नस्य" उदकस्य "वि धर्म्मन्" विधारकेऽन्तरिक्षे प्रजाः "जनयन्" उत्पादयन् "अक्रान्" सर्वमभिक्रामति [क्रमतेर्लुङि तिपीड़भावे वृद्धौ च कृतायां सिज्लोपे मकारस्य "मोनोधातोः (८, २, ६४)" —इति नकारे रूपम् ]; "वृषा" कामानां वर्षिता, "स्वानः" अभिषूयमाणः, "अद्रिः" आदरणशीलः, "सः" सोमः अधिकं "सानौ" समुच्छ्रिते अविभवे पवित्रे "बृहत्" प्रभूतं "वहृधे" वर्द्धते ॥

"गोपाः"-"राजा"—इति पाठौ, "अद्रिः"-"इन्दुः"—इति च॥ १॥

अथ द्वितीया।

१ २ ३ २ ३ २ ३ १ २ २<br>
मत्सिवायुमिष्टये राधसेनो<br>
१ २ ३ १र २र ३ १ २<br>
मत्सिमित्रावरुणापूयमानः।<br>
२ ३ २ ३ १ २ ३ १ २ ७ २ ३<br>
मत्सिशर्द्धोमारुतम्मत्सिदेवान्<br>
३ १ २ ३ १ २<br>
मत्सिद्यावापृथिवीदेवसोम ॥ २ * ॥

हे सोम! त्वं वायुं "मत्सि" मादय। किमर्थम्? "नः" अस्माकम्† "इष्टये" ईषणीयाय अन्नाय "राधसे" धनाय च। तथा पवित्रेण पूयमानस्त्वं "मित्रावरुणा" मित्रावरुणौ च

* ऋ० ६० ७, ४, १९. २।

† 'नः—अस्माकम'—इति वि०



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"मत्सि" तर्पयसि। किञ्च "मारुतं" मरुतां स्वभूतं शर्द्धो बलञ्च मत्सि। तथा "देवान्" इन्द्रादीन् "मत्सि" हर्षय। हे "देव" स्तोतव्य! हे सोम! "द्यावापृथिव्यौ" च "मत्सि" मादय। एतान् हर्षयुक्तान् कृत्वा अस्मभ्यं धनं प्रयच्छेत्यर्थः॥

"राधसेनः"-"राधसेच"—इति पाठौ॥ २॥

अथ तृतीया।

१ २र २र ३ १ २ २
महत्तत्सोमोमहिषश्चकार।

१२ ०र ३ २
पांयद्गर्भोवृणीतदेवान्।

१ १ ३ २ ३ १२ ३१र
अदधादिन्द्रेपवमानओजो

२र ३ २ ३ २ ३ १ २
जनयत्सूर्येज्योतिरिन्दुः॥ ३ *॥ १

"महिषः" महान् पूज्यो वा सोमः "महत्" प्रभूतं तत् कर्म "चकार" अकरोत्। किन्तत् कर्म? "अपां गर्भः" उदकानां गर्भभूतः [ जनयितृत्वाज्जन्यत्वाच्च ] "सः" सोमः "देवान्" "आवृणीत" समभजत—इति यत् तत् कृतवानिति। किञ्च, "पवमानः" पूयमानः सोमः "ओजः" तत्पानेन जन्यं बलम् "इन्द्रे" "अदधात्"। तथा "इन्दुः" "सूर्य्ये" "ज्योतिः" तेजः "अजनयत्॥ ३॥ १

---

* ऋ० सा० ६, १, १, ६ (९मा० १४५१०) = ऋ० वे० ७, ४, २६, १।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



॥ हाउह्रुवायिवासिष्ठम् ॥ हायि । उहुवायि । अ
क्रा३४औहोवा । समू । द्रा३:प्रथ । मेविधर्म्मान् । ज
ना३४औहोवा । यन्प्रा । जा३भुव । नस्यगोपा: । वृ
षा३४औहोवा । पवायि । त्रे३अधि । सानोअव्यायि ।
वृषा३४औहोवा । सोमो । वावृधे । स्वा३४३ । नो३
आ५द्राई५ईयि: ॥(१) मत्सा३४औहोवा । वायूम् । इष्ट
येराधसेना: । मत्सा ३ औहोवा । मित्रा । वरुणा ।
पूयमाना: । मत्सा३४औहोवा । शर्द्धो । मारुतम् । म
त्सिदेवान् । मत्सा३४औहोवा । द्यावा । पृथिवी । दा
३४३यि । वा३मो५मा६५६ ॥(२) महा३४औहोवा । त
त्सो । गा३महि । षश्चकारा । अपा३४औहोवा । य
ज्ञा । भो३अत्र । णीतद्देवान् । अदा३४औहोवा । सा



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



हायि। द्रेऽपव। मानओजाः। हायि। उरुवायि। अजा३४औहोवा। नयात्। हरियि। ज्यो३४३। ती३रा५यिन्द्र६५६ः(३) ॥ १ * ॥ [१]

॥ महासामराजम् ॥ हाउहोवा३हायि। आक्रान् समुद्रा३प्रा। थमे३वी३। धर्म्मा२३४५न्। जनयन्प्रजा३भू। वना३स्या३। गोपा२३४५ ॥(१) वृषापवित्रे३आ। धिसा३नो३। अव्या२३४५यि। बृहत्सोमो३वा। वृधे सू३वा३। नोअद्रा३२३ ॥(१) मत्सिवायू३मायि। इषये रा३धा३। सेना२३४५ः। मत्सिमित्रा३वा। रुणापू३या३। माना२३४५ः। मत्सिशर्द्धी३मा। रुतम्मा३त्सी३। देवान्३४५म्। मत्सिद्यावा३पा। थिवीदे३वा३। सोमा३२३ ॥(१) महत्सोमो३मा। हिषा३श्चा। कारा

* कौ० मा० १७८० १७० १७१०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२३४५। अपांयद्गर्भो३आ। वृणी३ता३। देवा२३४५न्। अदधादिन्द्रे३पा। वमा३ना३ः। ओजा२३४५ः। द्वा उहोवा३हायि। अजनयत्सू३री। येज्योर३ती३ः। इ न्दा३२उवा३४५(३) ॥ ५ * ॥ [२]

॥ वैश्वज्योतिषोत्तरम् ॥ हाउहोवा३हायि। अक्रा न्त्समुद्रःप्रथमे३४३विधर्म्मन्। जनयन्प्रजाभुवना ३ ४ ३स्य गोपाः। वृषापवित्रे अधिसा३४३नोअव्यायि। बृहत्सो मोवावृधेसुवा३४३नोअद्रायि। नोआ५द्राउ ॥(१) मत्सि वायुमिष्टयेरा३४३धसेनः। मत्सिमित्रावरुणापू३ ४ ३यमा नः। मत्सिशर्द्धोमारुतम्मा३४३त्सिदेवान्। मत्सिद्यावा पृथिवीदे३४३वसोम। वसो५माउ ॥(२) महत्तत्सोमो महिषा३४३श्चकारम्। अपांयद्गर्भोऽवृणी३४३तदेवान्।

* ऊ० गा० २२प्र० १ख० ५सा०



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ २ २ १ २२ ५ २२ २ २
अदधादिन्द्रे पवमा ३ ४ ३ नओजाः । द्दाउहोवा३हायि ।

२ २ १ ३ ५ ४
अजनयत्सूर्ये ज्यो ३ ४ ३ तिरिन्दुः । तिरा ५ यिन्दाउ ।

वा(३) ॥ ८ * ॥ [३]

१ १२ २ १ २ २
॥ वात्सप्रम् ॥ द्दोई २ । ३ । अक्रान्त्समुद्रःप्रथ । मे

१ १ १ १ २ १२
विधार्म्मा २न् । धार्म्मा २न् । धार्म्मारन् । जनयन्प्रजा

२ १ १ ११२ १२२ १ २ १२
भुव । नस्यगोपा २ः । गोपा २ः । वृषापवित्र अधिसा ।

१२ १ १ १ २ १ २
नोअव्या २यि । अव्या २यि । अव्या २यि । बृहत्सो

२ १२ २ २ २ १ १ १
मोवावृधेसुवा । नोआद्रा २यि । आद्रा २यि । आद्रा

१ २२ १ २ १ २ २ १ १
२यि ॥(१) मत्सिवायुमिष्टये । राधसेना २ः । सेना २ ।

१ १ २ १२ २ २ २ १ १
सेना २ः । मत्सिमित्रावरुणा । पूयमाना २ः । माना

१ १ २ १२ २ २ १
२ः । माना २ः । मत्सिशर्द्धोमारुतम् । मत्सिदेवा २

१ १ १ २ १२२ २ १२ २२
न् । देवा २न् । देवा २न् । मत्सिद्यावापृथिवी । देव

* ऊ० गा० १३प्र० १ख० ८सा० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



सोमा२। सोमा२। सोमा२॥(२) मह्नत्सोमोम
हि। षश्वकारा२। कारा२। कारा२। अपायद्ग
र्भोंश्रवृ। णीतदायिवा२न्। दायिवा२न्। दायिवा
२न्। अदधादिन्द्रे पव। मानश्रोजा२:। श्रोजा२:।
श्रोजा२:। अजनयत्सूर्य्येज्यो। तिरायिन्दू२:। श्रा
यिन्दू२:। आयिन्दू२:। होई२। २। होया२। या
२३४औहोवा। ई२३४५(३)॥ ८ * ॥ [४] १

अथैषदेवइति दशर्च्चं द्वितीयं सूक्तम्

तत्र प्रथमा।

एषदेवोश्रमर्त्यःपर्णवीरिवदीयते।
अभिद्रोणान्यासदम्॥ १ † ॥

"देवः" द्योतमानः "अमर्त्यः" मरण-रहितः "एषः" सोमः "द्रोणानि" द्रोणकलशान् "अभि" लक्ष्य "आसदम्" आसत्तुम्

---

* ऊ० गा० १२प्र० १ख० ८गा०।

† ऋ० वे० ६, ७, १०, १।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



आसदनार्थम् "पर्णवीरिव"* यथा पक्षी तथा वेगेन "दीयते" गच्छति ॥

"दीयते"-"दीयति"—इति पाठौ ॥ १ ॥

अथ द्वितीया।

२ १ १ २र ३ १ २ ३ २ ३ १र २

एषविप्रैरभिष्टुतोपोदेवोविगाहते।

२ ३ १ २ ३ १ २

दधद्रत्नानिदाशुषे ॥ २ † ॥

"विप्रैः" मेधाविभिः स्तोतृभिः "अभिष्टुतः" आभिमुख्येन स्तुतः "देवः" द्योतमानः "एषः" सोमः "दाशुषे" हविर्षां प्रदात्रे यजमानाय "रत्नानि" रमणीयानि धनानि "दधत्" धारयत् प्रयच्छत्। "अपः" वसतीवरीः "वि गाहते" प्रविशति ॥ २ ॥

अथ तृतीया।

३ १र २र ३ २ ३ २ ३ १ २ ३ १ २

एषविश्वानिवार्य्याशूरोयन्निवसत्वभिः।

१ २

पवमानःसिषासति ॥ ३ ‡ ॥

---

* 'पर्णवीरिव—पर्णवानिव, पूतिका आपर्णवान् भवति, तथाप्येके आभिषव मिच्छन्ति तमप्यभिषूयमाणं पर्णवन्तं सोमं' -इत्यादि वि०।

† ऋ० वे० ६, ७, १०, १।

‡ ऋ० वे० ६, ७, १० ३।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"पवमानः" पूयमानः "शूरः" वीरः "एषः" सोमः "विश्वानि" सर्वाणि "वार्या" वरणीयानि धनानि* "सत्वभिः" बलैः "यन्ति च" गच्छन्ति च "सिषासति" अस्मदर्थं सम्भक्तुमिच्छति ॥ ३ ॥

अथ चतुर्थी ।

२ १ २ २ २ १ २ २

एषदेवोरथर्यतिपवमानोदिशस्यति ।

२ १ २ १ २

आविष्कृणोतिवग्वनुम् ॥ ४ † ॥

"पवमानः" अयमेव सोमो "देवः" "रथर्यति" अस्मदीयं यागं प्रत्यागमनाय रथं कामयते‡ ॥

"दिशस्यति"-"विशस्यति"—इति पाठौ ॥ ४ ॥

अथ पञ्चमी ।

२ १ २ १ १ २ २ २ ३ १ २ ३ १ २

एषदेवोविपन्युभिःपवमानऋतायुभिः ।

२ ३ १ २

हरिर्वाजायमृज्यते ॥ ५ ¶ ॥

---

* 'वार्या—उदकानि'—इति वि० ।

† ऋ० वे० ६, ७, २०, ४ ।

‡ 'रथर्यति—रथेयाति'—इति वि० ।

¶ ऋ० वे० ६, ७, २०, ५ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"पवमानः" क्षरन् "एषः" "सोमः" "देवः" "विपन्युभिः" स्तोतृभिः "ऋतायुभिः" यज्ञ-कामैः सत्य-कामैर्वा* "हरिः" अश्वइव "वाजाय" सङ्ग्रामार्थं "मृज्यते" स्तुतिभिरलङ्क्रियते ॥५॥

अथ षष्ठी ।

३ २ ३ २ ३ २ ३ २ ३ १ २
एषदेवोविपाकृतोतिह्वराᳬसिधावति ।
१ २ ३ १ २
पवमानोअदाभ्यः ॥ ६ † ॥

"विपा" [—अङ्गुलिनामैतत् (निघ०२,५,९)] अङ्गुल्या "कृतः" अभिषुतः "एषः" सोमः "देवः" "पवमानः" क्षरन् "अदाभ्यः" केनाप्यहिंसितश्च सन् "ह्वरांसि" शत्रून् "वि धावति" हन्तुमभिगच्छति ॥ ६ ॥

अथ सप्तमी ।

३ २ उ ३ १ २ ३ १र २र ३ १ २
एषदिवंविधावतितिरोरजाᳬसिधारया ।
१ २ ३ १ २
पवमानःकनिक्रदत् ॥ ७ ‡ ॥

"धारया" "पवमानः" क्षरन् "एषः" सोमः "कनिक्रदन्" अभिषूयमाणः शब्दं कुर्वन् "रजांसि" लोकान् "तिरः" तिरस्कुर्वन् यज्ञात् "दिवं" स्वर्गं प्रति "वि धावति" ॥ ७ ॥

---

* 'ऋतायुभिः—ऋतो यज्ञः, तं युञ्जन्ति ऋतायवः ऋत्विजः तैः'—इति वि० ।

† ऋ० वे० ९, ७, २१, १ ।

‡ ऋ० वे० ९, ७, २१, २ ।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथाष्टमी।

२ ३उ ३ १ २ १ २उ ३ १ २
एषदिवंव्यासरत्तिरोरजाᳬस्यस्तृतः।

१ २ १ २
पवमानःस्वध्वरः ॥ ८ * ॥

"पवमानः" क्षरन् "एषः" सोमः "स्वध्वरः" सुयज्ञः "अस्तृतः" केनाप्यहिंसितश्च सन् "रजांसि" लोकान्† "तिरः" तिरस्कुर्वन् यस्मात् "दिवं" प्रति "व्यासरत्" विसरति गच्छति ॥ ८ ॥

अथ नवमी।

३ २ १ २ ३ १ २ ३ २ ३ १ २ ३ २
एषप्रत्नेनजन्मनादेवोदेवेभ्यःसुतः।

१ २ ३ १ २
हरिःपवित्रेअर्षति ॥ ९ ‡ ॥

"हरिः" हरितवर्णः "देवः" द्योतमानः "एषः" सोमः "प्रत्नेन" पुराणेन "जन्मना" जननेन "देवेभ्यः" देवार्थं "सुतः" अभिषुतः सन् "पवित्रे" स्थातुम् "अर्षति" गच्छति ॥ ९ ॥

---

* ऋ० वे० ९, ७, ११, ३।

† 'रजांसि—त्रयो लोकास्तेषाम् उपरिष्टात् धावति'—इति वि०।

‡ इह च १,१, १७, १ (१भा० १९१पृ०)=ऋ० वे० ९, ७, ११, ४।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ दशमी।

२ २ ३ १ २ ३ १ २ ३ २ ३ १ ३ १ २
एषउस्यपुरुव्रतोजज्ञानोजनयन्निषः।

१ २ ३ २
धारयापवतेसुतः॥ १०* ॥ २

"एष उ स्यः" एष च स सोमः "पुरुव्रतः" बहुकर्मा "जज्ञानः" जायमान एव "इषः" अन्नानि "जनयन्" उत्पादयन् "सुतः" अभिषुतः "धारया" "पवते" क्षरति ॥ १० ॥ २

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य दशमस्याध्यायस्य प्रथमः खण्डः† ॥ १ ॥

---

अथ द्वितीये खण्डे—एषधियेत्यष्टर्चं‡ सूक्तम्,

तत्र प्रथमा।

३ २ ३ २ ३ २ ३ २ ३ १ २ ३ १ २
एषधियायात्यण्व्याशूरोरथेभिराशुभिः।

२ ३ १ २ २ २
गच्छन्निन्द्रस्यनिष्कृतम्॥ १ ¶ ॥

---

* ऋ० वे० ६, ७, २१, ५।

† 'उक्तो दशर्चः'—इति वि०।

‡ 'इदानीमष्टर्चः, इदानीं बहवो भवन्ति, यथानुतमः बहृचः, तृच उत्तमः'—इति वि०।

¶ ऋ० वे० ६, ८, ५, १।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"एषः" सोमः "शूरः" विक्रान्तः "अण्व्या" अङ्गुल्या* अभिषुतः "धिया" कर्मणा अतिगच्छति । कीदृशम्? इति उच्यते —"इन्द्रस्य" "निष्कृतं" स्थानं स्वर्गाख्यं प्रति "आशुभिः" शीघ्रगामिभिः "रथेभिः" रथैः "गच्छन्" इन्द्रेण रथेऽवस्थाप्य स्व-स्थान-नयनाङ्गत्वा अभिषूयमाणः सन् होम-द्वारा अग्निं गच्छतीत्यर्थः ॥ १ ॥

अथ द्वितीया ।

१ २ ३ २ २ ३ २ ३ १ २
एषपुरूधियायतेबृहतेदेवतातये ।

२ ३ १ २ ३ १ २
यत्रामृतासआशत ॥ २ † ॥

"एषः" सोमः "पुरु" बहुलं, "धियायते" धियं कर्म्म इच्छति [धी-शब्दात् याकारोपजनः(७,१,३९) । यद्वा द्वितीयार्थे तृतीया, (३,१,८५)छान्दसत्वालुक् ] । कस्मै ? "बृहते" महते "देवतातये" यज्ञाय "यत्र" यस्मिन् यज्ञे "अमृतासः" अमृताः देवाः "आशत" व्याप्नुवन्ति तदर्थम् ॥

"आशत"-"आसत"—इति पाठौ ॥ २ ॥

---

* 'अण्व्या—सूक्ष्मतमया'—इति वि० ।

† ऋ० वे० ९, ८, ५, २ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ तृतीया।

३ १ २ ३ २ ३ २ ३ १ २ ३ १ २
एतम्मृजन्तिमर्ज्यमुपद्रोणेष्वायवः।
२ २ ३ १र २र
प्रचक्राणम्महीरिषः॥ ३ *॥

"आयवः" मनुष्याः ऋत्विजः "एतं" सोमं "मर्ज्यम्" "उप मृजन्ति" निष्पीड़यन्तीत्यर्थः। कुत्र? "द्रोणेषु" द्रोणकलशेषु। कीदृशम्? "महीः इषः" महान्त्यन्नानि† "प्रचक्राणं" कुर्वाणं प्रभूत-रस-स्राविणमित्यर्थः॥ ३॥

अथ चतुर्थी।

३ २ ३ १र २र ३ २ ३ १ २ ३ २
एषहितोविनीयतेन्तःशुन्ध्यावतापथा।
१ २ ३ २ ३ १ २
यदीतुञ्जन्तिभूर्णयः॥ ४ ‡॥

"एषः" सोमः "हितः" निहितिः हविर्धाने "वि नीयते" तस्मात् स्थानात् आहवनीयं प्रति "अन्तः" तयोर्मध्यदेशे "शुन्ध्यावता" शुद्धिमता "पथा" मार्गेण "यदि" यदा "तुञ्जन्ति" प्रयच्छन्ति देवेभ्यः "भूर्णयः" भरणशीलाः¶ अध्वर्य्वादयः; तदा विनीयत इति समन्वयः॥

"शुन्ध्यावता"-"शुभ्रावता"—इति पाठौ॥ ४॥

---

* ऋ० वे० ९, ८, ५, ७।

† 'इषः—धानाः, करम्भः, पुराडाशः'—इति वि०।

‡ ऋ० वे० ९, ८, ५, ३।

¶ 'भूर्णयः—भरणशीलाः'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ पञ्चमी।

३ २ ३ १ २ ३ २ ३ १ २ ३ १ २

एषरुक्मिभिरीयतेवाजीशुभ्रेभिरꣳशुभिः।

२ ३ १ २ ३ १ २

पतिःसिन्धूनाम्भवन्॥ ५ * ॥

"एषः" सोमः "रुक्मिभिः" अध्वर्य्वादिभिः† सह "ईयते" गच्छति। कीदृश एषः? "वाजी" वेगवान् "शुभ्रेभिः दीप्तैः अंशुभिर्विशिष्टः [अथवा रुक्मिभिरित्येतदप्यंशु-विशेषणम्] "सिन्धूनां" स्यन्दमानानां रसानां "पतिः" "भवत्" भीयतइति॥ ५॥

अथ षष्ठी।

३ १र २र ३ १ २ ३ १ २ ३ २ १ २

एषशृङ्गाणिदोधुवच्छिशीतेयूथ्योꣳवृषा।

२ ३र २र ३ १ २

नृम्णादधानओजसा॥ ६ ‡ ॥

"एषः" सोमः "शृङ्गाणि"¶ शृङ्गवदुन्नतानंशून् अभिषवकाले "दोधुवत्" धुनोति "यूथ्यः" यूथार्हो यूथपतिः "वृषा" वृषभः यथा "शिशीते" तीक्ष्णे शृङ्गे धुनोति तद्वत्। कीदृशः? "ओजसा" बलेन "नृम्णा" नृम्णानि धनानि "दधानः" अस्मदर्थं धारयन्॥ ६॥

---

* ऋ॰ वे॰ ६, ८, ५, ५।

† 'रुक्मिभिः—सुवर्णहस्तैरङ्गुलिभिः'—इति वि०। यजुष्मतो रुक्मी यजमानः, तदाह कात्यायनः—"रुक्म भवः पदं कुरुते स्तोरिति (१५, ५, १६)"—इत्यपलभ्येयम्। ‡ ऋ॰ वे॰ ६, ८, ५, ४।

¶ 'मङ्गपत्रं हिमवतस्त्त स्थाने द्रवयन् शृङ्गे'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ सप्तमी।

२ १र २र    ३ १र २र    ३ १र    १र
एषवसूनिपिब्दनःपरुषाययिवाँ अति।

१ २ १ २
अवशादेषुगच्छति॥ ७ *॥

"वसूनि" आच्छादकानि रक्षांसि "पिब्दनः" पीडयन्† "एषः" सोमः "परुषा" पर्वणा "अति" अतिक्रम्य "ययिवान्" गच्छन् "शादेषु" शातनीयेषु रक्षःसु "अव गच्छति"‡॥

"पिब्दनः"--"पिब्दना"---इति पाठौ॥ ७॥

अथाष्टमी।

३ २ ३ २उ १ २ ३ १ २    ३ १ २
एषमुत्यन्दशक्षिपोहरिँहिन्वन्तिपातवे।

३ १ ३ १ २
स्वायुधम्मदिन्तमम्॥ ८ ¶॥ ३

"हरिं" हरितवर्णं "त्यं" तम् "एतम्" एतमेव§ सोमं "दश क्षिपः" दश-सङ्ख्याका अङ्गुलयः‖ "यातवे" गमनाय**

* ऋ० वे० ९, ८, ४, ६।

† 'पिब्दनः—पिषमाणः, सोमलक्षणानि'—इति वि०।

‡ 'बलात्कारेण'—इति वि०।

¶ ऋ० वे० ९, ८, ५, ८।

§ 'उ—इति पदपूरणं'—इति वि०।

‖ 'दशक्षिपः—सर्वसमर्था अङ्गुल्यः'—इति वि०।

** 'यातवे—प्रापणार्थम्'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"हिन्वन्ति" प्रेरयन्ति। कीदृशमेनम्? "स्वायुधं" शोभनायुधं* "मदिन्तमं" मादयितृतमं रक्षोहनन-प्रदर्शनाय स्वायुध-शब्द-श्रवणम्॥

"हरिंहिन्वन्तियातवे"-"सृजन्तिसमघोतयः"—इति पाठौ ॥ ८ ॥ ३

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य दशमस्याध्यायस्य द्वितीयः खण्डः॥ २॥

---

अथ तृतीय-खण्डे--

एषउस्येति षडृचं सूक्तम,

तत्र प्रथमा।

३ २ १ २उ ३ २उ ३ १ २
एषउस्यवृषारथोव्यावारेभिरव्यत।
२ ३ १ २ ३ १ २
गच्छन्वाजꣳसहस्रिणम्॥ १ † ॥

"स्यः" सः प्रसिद्धः "एषः" अभिषुतः सोमः "वृषा" वर्षिता "रथः" रंहण-स्वभावः "अव्यावारेभिः" अवेर्वालैः दशापवित्रेण "अव्यत" द्रोणकलशं प्रति गच्छति "वाजम्" अन्नम् "सहस्रिणं"

---

* 'स्वायुधं—शोभनैर्यज्ञायुधैर्युक्तम् यद्वा परशु-पाश-प्रभृतिभिः'—इति वि०।
† ऋ० वे० ९, ८, २८, १।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



सहस्र-सङ्ख्याकं यजमानाय प्रदातुं "गच्छन्" द्रोणकलशं प्रविशन्नव्यतेत्यर्थः* ॥

"अव्यावारेभिरव्यत"-"अव्योवारेभिरर्षति"—इति पाठौ॥ १ ॥

अथ द्वितीया।

२ २ ३ २ ३ १ २ ३ १ २ ३ १ २
एतन्त्रितस्ययोषणोहरिंहिन्वन्त्यद्रिभिः।
२ ३ १ २ ३ १ २
इन्दुमिन्द्रायपीतये ॥ २ † ॥

"एतम्" "इन्दुं" "हरिं" हरितवर्णं सोमं "त्रितस्य" एतन्नामकस्य ऋषेः "योषणः" अङ्गुलयः‡ "अद्रिभिः" अभिषव-पाषाणैः "हिन्वन्ति" प्रेरयन्ति। किमर्थम्? "इन्द्राय" इन्द्रस्य "पीतये" पानाय ॥ २ ॥

अथ तृतीया।

३ २ २र ३ २ ३ १उ ३ १ २
एषस्यमानुषीष्वाश्येनोनविक्षुसीदति।
१ २ ३ २उ ३ १२
गच्छञ्जारोनयोषितम्॥ ३ ¶ ॥

"स्यः" सः "एषः" सोमः "मानुषीषु" "विक्षु" प्रजासु "श्येनो न" श्येनइव शीघ्रमागम्य यजमानरूपासु अनुग्रहेण "आ"

---

* अत्र ऋचि 'उ—इति पदपूरणः'—इति वि०।

† ऋ० वे० ६, ८, २२, ३—६, ८, २८, २।

‡ 'योषणः—ऋत्विजः'—इति वि०।

¶ ऋ० वे० ६, ८, २८, ४।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



आगत्य "सीदति"। पुनः कइव ? "योषितं" "गच्छन्" अभिगच्छन् "जारो न" जार इव [स यथा सङ्केततः तस्याः काम-पूरणीय-गूढ़-गतिः तद्वदित्यर्थः] ॥ ३ ॥

अथ चतुर्थी ।

३ २उ   ३ १   २र   ३ १र   २र
एषस्यमद्योरसोवचष्टे दिवःशिशुः ।

२उ ३ २ ३ १ २
यइन्दुर्वारमाविशत् ॥ ४ * ॥

"स्यः" सः "एषः" "मद्यः" मद-निमित्तः "रसः" "अवचष्टे" सर्वमेव पश्यति "दिवः शिशुः" द्युलोकस्य पुत्रः [तत्रोत्पन्नत्वात् पुत्रत्वमस्य†]। "यः" "इन्दुः" दीप्तः सोमः "वारं" दशापवित्रम् "आविशत्" आविशति स एष इति ॥ ४ ॥

अथ पञ्चमी ।

३ २उ   ३ १ २ ३ १र   २र   ३ २
एषस्यपीतयेसुतोहरिरर्षतिधर्णसिः ।

२ ३ १   २ ३ २ ३ २
क्रन्दन्योनिमभिप्रियम् ॥ ५ ‡ ॥

"एषः" "स्यः" सः सोमः "पीतये" पानाय "सुतः" अभिषुतः "हरिः" हरितवर्णः "प्रियं"¶ स्व-प्रियभूतं "योनिं" स्थानं द्रोणकलशं "क्रन्दन्" शब्दयन् "अभ्यर्षति" अभिगच्छति ॥ ५ ॥

---

* 'अवचष्टे—अवचरति, दिवः—द्युलोकात्, शिशुः—शंसनीयः'—इति वि० ।

† ऋ० वे० ६, ८, २८, ५ ।

‡ 'अभिप्रियम्—अभिरूपम्'—इति वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ षष्ठी।

१२७ २१ ३ १२ २१ २ २१२
एतन्त्यᳪ हरितोदशमर्मृज्यन्त्यपस्युवः।
२ ३१२ ३१ २
याभिर्मदायशुम्भते॥ ६ *॥ ४

"एतं" "त्यं" तं सोमम् अध्वर्योः "दश" "हरितः" हरण-स्वभावाः अङ्गुलयः "अपस्युवः" कर्मेच्छवः सत्यः "मर्मृज्यन्ते" शोधयन्ति। "याभिः" अङ्गुलिभिरिन्द्रस्य "मदाय" "शुम्भते" दीप्यते शोध्यतइत्यर्थः; तमेतमिति सम्बन्धः॥ ७॥ ४

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य दशमस्याध्यायस्य तृतीयः खण्डः॥ ३॥

---

अथ चतुर्थ-खण्डे—

एषवाजीइति षड़्चं सूक्तम्,

तत्र प्रथमा।

३१२ २ ३ १र २र ३ १र २र३१ २
एषवाजीहितोनृभिःविंश्वविन्मनसस्पतिः।
२ ३ ३ २ १ २
अव्यंवारंविधावति॥ १ †॥

---

* ऋ० वे० ९, ८, २८, ६।

† ऋ० वे० ९, ८, १८, १।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"एष:" सोम:, "वाजी" वेजन-शील:, "हित:" अध्वर्युणा पात्रे निहित: धृत:, "विश्ववित्" सर्वज्ञ:, "मनस:" स्तोत्रस्य "पति:" स्वामी [अथवा सोमस्य मनोऽभिमानित्वात् मनस: स्वामित्वम्, "चन्द्रमा मनो भूत्वा हृदयं वा विशत्"—इति श्रुते: ; तादृशोऽसौ] "अव्यं वारं" अवि-सम्बन्धिनं वालं दशापवित्रं "वि धावति" विविधं गच्छति ॥

"अव्यम्"-"अव्ये"—इति पाठौ ॥ १ ॥

अथ द्वितीया।

२ २ ३ १ २ ३ १ २ ३ १ २ १ २
एषपवित्रेअक्षरत्सोमोदेवेभ्य:सुत: ।
२ ३ १ २ ३ २
विश्वाधामान्याविशन् ॥ २ * ॥

"एष:" सोम: "देवेभ्य:" देवार्थं "सुत:" अभिषुत: सन् पवित्रे "अक्षरन्" स्रवन् "विश्वा" सर्वाणि "धामानि" देव-शरीराणि "आ विशन्" प्रविशन् प्रवेष्टुमित्यर्थ: ॥ २ ॥

अथ तृतीया।

३ २ ३ १ २ ३ २ ३ १ ३ १ २
एषदेव:शुभायतेधियोनाथमर्त्त्य: ।
२ १ २ ३ १ २
वृत्रहादेववीतम: ॥ ३ † ॥

---

* ऋ० वे० ९, ८, १८, २।

† ऋ० वे० ९, ८, १८ ३।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"एषः" सोमः "देवः" "शुभायते"*। कुत्र? "अधियोनौ" स्वीये स्थाने†। कीदृशएषः? "अमर्त्त्यः" अमरणधर्म्मा "वृत्रहा" शत्रु-हन्ता "देववीतमः" अतिशयेन देवानां कामयिता‡ ॥ ३ ॥

अथ चतुर्थी।

२ ३उ १ २ १ २ ३ १ २ ३ १ ३ २ ३ २

एषवृषाकनिक्रदद्दशभिर्ज्जामिभिर्यतः।

२ १ २र

अभिद्रोणानिधावति॥ ४ ¶ ॥

"वृषा" कामानां वर्षिता "एषः" सोमः "कनिक्रदत्" शब्दं कुर्व्वन् "दशभिः" "जामिभिः" अङ्गुलिभिः "यतः" धृतः§ "द्रोणाणि" द्रुममयानि पात्राणि "अभि धावति" अभिगच्छति ॥ ४ ॥

अथ पञ्चमी।

२ १ २र ३ १ २ ३ १ २ ३ १ २

एषसूर्य्यमरोचयत्पवमानोअधिद्यवि।

३ १ २ ३ १र २र

पवित्रेमत्सरोमदः॥ ५ ‖ ॥

---

* 'शुभायते—शुभं करोति'—इति वि०।

† 'अधियोनौ—योनिद्रोणकलशः'—इति वि०।

‡ 'देववीतमः—देवानां भक्ततमः, अथवा'—इत्यादि वि०।

¶ ऋ० सं० ६, ८, १८, ४।

§ 'जामिभिः—जामयो भगिन्यः अङ्गुल्यः ताभिर्यतः संयतः पद इत्यर्थः—इति शि०।

‖ ऋ० सं० ६, ८, १८, ५।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"पवमानः" पूयमानः "एषः" सोमः "अधि द्यवि" द्युलोके स्थितं "सूर्य्यं" "रोचयत्" रोचयति। कीदृशः ? "पवित्रे" स्वयं दशापवित्रे स्थितः, "मत्सरः" मद-हेतु प्रामः, "मदः" हृष्टः ॥

"अधिद्यवि। पवित्रेमत्सरोमदः"—"विचर्षणिः। विश्वा धामानिविश्ववित्"—इति पाठौ ॥ ५ ॥

अथ षष्ठी।

२१ २र ३ १२ ३ १२
एषसूर्य्येणहासतेसंवसानोविवस्वता ।
१ २ ३ १र २र
पतिर्वाचोअदाभ्यः ॥ ६ * ॥ ५

"एषः" सोमः "संवसानः" सर्वमप्याच्छादयन् "विवस्वता" दीप्तिमता† "सूर्येण" "हासते" परित्यज्यते पवित्रइति शेषः। कीदृशः ? "वाचः" स्तुति-लक्षणायाः "पतिः" पालकः स्वामी वा‡ "अदाभ्यः" केनाप्यहिंस्यः ॥ ६ ॥ ५

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य दशमस्याध्यायस्य चतुर्थः खण्डः ॥ ४ ॥

---

* ऋ० वे० ९, ८, १७, ५।

† 'विवस्वता—स्वकीयेन तेजसा'—इति वि०।

‡ 'पतिर्वाचः—लौकिकाः वैदिकाश्च, तासां स्वामी'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ पञ्चम-खण्डे—

एषकविरिति षडृचं सूक्तम्,—

तत्र प्रथमा ।

३ २ ३ २ ३ १ २ ३ १ ३ १ २

एषकविरभिष्टुतःपवित्रेअधितोशत ।

३ २उ ३ १ २

पुनानोघ्नन्नपद्विषः ॥ १ * ॥

"एषः" सोमः "कविः" मेधावी "अभिष्टुतः" अभितःस्तुतः† "पवित्रे अधि" दशापवित्रे अधि दशापवित्रमतीत्य "तोशते" [यद्यपि तोशतिर्वधकर्मा तथाहि हनने गति-सद्भावात् अत्र गतिमात्रे वर्त्तते] गच्छतीत्यर्थः‡ [अथवा "पवित्रे अधि" कृष्णाजिने "तोशते" हन्यते पीड्यत इत्यर्थः] किङ्कुर्वन्? "पुनानः" पूयमानः "द्विषः" शत्रून् "अपघ्नन्" अपगमयन ॥

"द्विषः"-"स्त्रिधः"—इति पाठौ ॥ १ ॥

अथ द्वितीया ।

३ १ २र ३ १ २ ३ १र २र

एषइन्द्रायवायवेस्वर्जित्परिषिच्यते ।

३ १ २ ३ १ २

पवित्रेदक्षसाधनः ॥ २ ¶ ॥

---

* ऋ० वे० ६, ८, १०, १ ।

† 'स्तोतृभिःस्त्वैः'--इति वि० ।

‡ 'तोशते—तुशी दीप्तौ दीप्यते'—इति वि० ।

¶ ऋ० वे० ६, ८, १०, २ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"एषः" सोमः "स्वर्जित्" स्वर्गस्य सर्वस्य वा जेता "इन्द्राय" "वायवे" च "पवित्रे" "परिषिच्यते" परिस्राव्यते। कीदृगेषः? "दक्षसाधनः" बलकारी॥ २॥

अथ तृतीया।

२ २उ ३ १ २ ३ २ ३ १र २र ३ २
एषनृभिर्विनीयतेदिवोमूर्द्धावृषासुतः।
२ ३ १ २ ३ २
सोमोवनेषुविश्ववित्॥ ३ *॥

"एषः" सोमः "नृभिः" कर्म-नेतृभिः ऋत्विग्भिः "विनीयते" विविधं नीयते। कीदृशः? "दिवः" द्युलोकस्य "मूर्द्धा" शिरोवत् प्रधानभूतः "वृषा" अभिमत-वर्षकः "सुतः" अभिषुतः। कुत्र नीयते? "वनेषु" वननीयेषु पात्रेषु वन-सम्भूत-द्रुम-विकारेषु वा पात्रेषु† "विश्ववित्" सर्वज्ञ एष इति समन्वयः॥ ३॥

अथ चतुर्थी।

२ १ ३ १ २ ३ १ २ ३ २
एषगव्युरचिक्रदत्पवमानोहिरण्ययुः।
१ २ ३ १र २र
इन्दुःसत्राजिदस्तृतः॥ ४ ‡॥

"एषः" सोमः "पवमानः" पूयमानः "अचिक्रदत्" शब्दं करोति। कथम्भूतः सन्? "गव्युः" अस्माकं गा इच्छन्

* ऋ० वे० ६, ८, १७, ३।

† 'वनेषु—उदकेषु'—इति वि०।

‡ ऋ० वे० ६, ८, १७, ४



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"हिरण्ययुः" हिरण्यानीच्छन् "इन्दुः" दीप्तः सन्, "सत्राजित्" महतः शत्रोरसुरादेर्जेता, * "अस्तृतः" स्वयमन्यैरहिंस्यश्च सन् ॥ ४ ॥

अथ पञ्चमी।

२ २ ३क २र ३ १ २ ३ २ ३ १ २
एषशुष्म्यसिष्यददन्तरिक्षेवृषाहरिः।
३ १उ ३ २ ३ २
पुनानइन्दुरिन्द्रमा ॥ ५ † ॥

"शुष्मी" बलवान् सोमः "अन्तरिक्षे" दशापवित्रे "असिष्यदत्" स्यन्दते‡। कीदृशएषः? "वृषा" वर्षकः, "हरिः" हरितवर्णः, "पुनानः" पूयमानः, "इन्दुः" दीप्तः, सएव "इन्द्रम्" इन्द्रञ्चापि; गच्छतीति शेषः। "आ"—इति चार्थे¶ ॥ ५ ॥

अथ षष्ठी।

३ २ ३ १ २ ३ १ २ ३ १ २
एषशुष्म्यदाभ्यःसोमःपुनानोअर्षति।
३ १ २ ३ २
देवावीरघशᳫंसहा ॥ ६ § ॥ ६

"एषः" सोमः "शुष्मी" बलवान् "अदाभ्यः" अदम्भनीयः अहिंसनीयः "पुनानः" पूयमानः "अर्षति" गच्छति "देवावीः"

---

* 'सत्राजित्—सहसा जेता अथवा सत्राजित्—सदाजित'—इति वि०।

† ऋ० वे० ९, ८, १७, ९।

‡ 'असिष्यदत्—क्षीरति'—इति वि०।

¶ 'आ—आनुपूर्व्येण'—इति वि०।

§ ऋ० वे० ९, ८, १८, ६।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



देवानामविता* "अघशंसहा" अघान् शंसन्तीत्यघशंसाः तेषां वा हन्ता† ॥ ६ ॥ ६

इति सामवेदार्थप्रकाशे उत्तराग्रन्यस्य दशमस्याध्यायस्य

पञ्चमः खण्डः ॥ ५ ॥

——

अथ षष्ठे खण्डे—

स सुतः पीतयइति षड्‌चं सूक्तम्,

तत्र प्रथमा।

२ ३ २ ३ १ ३ २ ३ १र २ ३ १ २
स सुतः पीतये वृषा सोमः पवित्रे अर्षति।

२ १र २र ३ १
विघ्नन्रक्षांसि देवयुः ॥ १ ‡ ॥

"सः" सोमः "पीतये" इन्द्रादिपानाय "सुतः" अभिषुतः "वृषा" वर्षणः सन् "पवित्रे" "अर्षति" गच्छति। किङ्कुर्वन्? "रक्षांसि" "निघ्नन्"। "देवयुः" देवकामः। स इत्यन्वयः ॥ १ ॥

---

* 'देवावीः—देवानां भक्षभूतः'—इति वि०।

† 'अघं पापं यः शंसति सः अघशंसः, तस्य हन्ता'—इति वि०।

‡ ऋ० वे० ९, ८, २७, १।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीया।

२ ३ १ २　　३ १र २र　　　१ २
सपवित्रेविचक्षणोहरिरर्षतिधर्णसिः।

१ २उ　२ १ २
अभियोनिङ्कनिक्रदत्॥ २ * ॥

"सः" सोमः "विचक्षणः" [ पश्यति-कर्म्मैतत् ( निघ० ३, ११,३)] सर्वस्य द्रष्टा "हरिः" हरितवर्णः सोमः "धर्णसिः" सर्वस्य धारकः "पवित्रे" "अर्षति" गच्छति, पश्चात् "कनिक्रदत्" शब्दं कुर्वन् "योनिं" स्थानं द्रोणकलशम् "अभि" गच्छति † ॥ २ ॥

अथ तृतीया।

२ ३　१ २ १ २ ३ १र १र　३　१ २
सवाजीरोचनन्दिवःपवमानोविधावति।

२　१र　२र ३ १ २
रक्षोहावारमव्ययम्॥ ३ ‡ ॥

"सः" "वाजी" वेजनवान् ¶ अश्व-स्थानीयः "दिवः" "रोचनं" रोचकः "पवमानः" पूयमानः "विधावति"। कीदृशः? "रक्षोहाः" रक्षसां हन्ता, "अव्ययं वारं" दशापवित्रम् अतीत्य विधावति विविधं गच्छति॥

"रोचनं"-"रोचना"—इति पाठौ॥ ३॥

---

* ऋ० वे० ६, ८, २७, २।

† अभीत्युपसर्गदृष्ट्या क्रियापदाहृत्तिः।

‡ ऋ० वे० ६, ८, २७, ३।

¶ 'वाजी—अन्नवान्'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ चतुर्थी।

२ ३२उ ३१ २ ३१२
सत्रितस्याधिसानविपवमानोअरोचयत्।
३ १ २ ३१ २ ३२
जामिभिःसूर्यंसह ॥ ४ * ॥

"सः" सोमः "त्रितस्य" महर्षेः "अधिसानवि" समुच्छ्रिते यज्ञे† [ अधीति सप्तम्यर्थानुवादी ] "पवमानः" पूयमानः "जामिभिः" प्रवृद्धैः बन्धुभूतैर्वा सुतेजोभिः ‡ "सह" सहितः सन् "सूर्यम्" "अरोचयत्" प्रकाशितवान् ॥ ४ ॥

अथ पञ्चमी।

१२३१२ २३१ १२ ३ १ २
सवृत्रहावृषासुतोवरिवोविददाभ्यः।
२ ३ १ २
सोमोवाजमिवासरत्॥ ५ ¶ ॥

"सः" सोमः "वृत्रहा" शत्रूणां हन्ता "वृषा" वर्षकः "सुतः" अभिषुतः "वरिवोवित्" § यष्टुर्धनस्य लम्भकः "अदाभ्यः"

---

* ऋ० वे० ६, ८, २७, ४।

† 'त्रितस्याधिसानवि—त्रितस्यार्थे, अधिसानति ध्रुवे स्थाने'—इति वि०।

‡ 'जामिभिः—भगिनीभिः'—इति वि०।

¶ ऋ० वे० ६, ८, २७, ५।

§ 'वरिवोभक्षः'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अन्यैरहिंसनीयः; एवङ्गुणः सन् "वाजमिव" सङ्ग्राममिव * "असरद्" गच्छति कलशम् ॥ ५ ॥

अथ षष्ठी ।

१ २ २   ३ १ २ ३ २   ३ १   २ १ २
सदेवःकविनेषितोऽभिद्रोणानिधावति ।

२ ३ १ २   ३ १ २
इन्दुरिन्द्रायमंहयन् ॥ ६ † ॥ ७

"सः" सोमः "देवः" "इन्दुः" क्लिद्यमानः "कविना" आक्रान्त-प्रज्ञेनाध्वर्युणा ‡ "उषितः" प्रेरितः ¶ सन् "द्रोणानि" द्रोण-कलशान् § "अभि धावति" अभिगच्छति । किङ्कुर्वन्? "इन्द्राय" इन्द्रं "मंहयन्" स्ववीय-रसेन पूजयन् ॥

"मंहयन्"-"मंहना"—इति पाठौ ॥ ६ ॥ ७

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य दशमस्याध्यायस्य षष्ठः खण्डः ॥ ६ ॥

---

* 'वाजम्—अन्नम्, इव असरत्'—इति वि० ।

† ऋ० वे० ६, ८. २७, ६ ।

‡ 'कविना—ब्रह्मणा'—इति वि० ।

¶ 'उषितः—चिप्तः'—इति वि० ।

§ 'द्रोणानि—द्रोण-कलश-सम्बन्धानि पात्राणि'—इति वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ सप्तम-खण्डे—

यःपावमानीरिति षड्चं सूक्तम्,

तत्र प्रथमा ।

१ २ ३ २ ३ १र २र ३ १ २ ३ १ २
यःपावमानीरध्येत्यृषिभिःसम्भृतꣳरसम् ।

२ ३ २ ३ १ २ ३ १ २ ३ १ २
सर्वꣳसपूतमश्नातिस्वदितम्मातरिश्वना ॥ १ * ॥

"यः" जनः "पावमानीः पवमान-देवताकाः † सर्वा ऋचः तद्रूपं "ऋषिभिः" सूक्तद्रष्टृभिः मधुच्छन्दःप्रभृतिभिः "सम्भृतं" सम्पादितं "रसं" वेदसारभूतं ‡ पावमानं सूक्तसङ्घं यः "अध्येति," ¶ "सः" जनः "सर्वं" भोज्यजातं "पूतं" परिशुद्धमेव "अश्नाति" भक्षयति § कथमस्य पूतत्वम् ? तत्राह—स्वास्वादनात् प्रागेव "मातरिश्वना" [ मातरि अन्तरिक्षे श्वसितीति मातरिश्वा वायुः, स च पवित्रमेव ] पवित्रेण वायुना "स्वदितं" स्वादूकृतं परिपूतमेवान्नं पश्चात् स नरोऽश्नाति ॥ १ ॥

---

* ऋ० वे० ७, ९, १८, ६ ।

† 'पावमान्यश्च या सोमदेवत्यः ऋचः त्रिष्वपि पवमानेषु, तासामिष्टिः साम्प्रतं आख्यायते—यः पावमानीरध्येतीति'—इति वि० ।

‡ 'रसं—वीर्यम्'—इति वि० ।

¶ 'यः अध्येति तस्य किं फलं भवति? सर्वं स पूतम् अश्नाति, यत् किञ्चित् खादति तत् पूतं भवति'—इति वि० ।

§ 'अध्ययनस्यास्य आर्षच्छन्दोदैवतब्राह्मणैः स्वदितं परिज्ञानं प्रशस्यते'—इति वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीया।

३ २उ ३ १२ २र ३ १ २ ३ १ २
पावमानीर्यो अध्येत्यृषिभिःसम्भृतꣳरसम्।
२ ३ १ २ ३ २ ३ १र २र १ २
तस्मैसरस्वतीदुहेक्षीरꣳसर्पिर्मधूदकम्॥ २ * ॥

"यः" ब्राह्मणः "पावमानीः" पवमान-देवताका ऋचः "ऋषिभिः" मधुच्छन्दःप्रभृतिभिर्मन्त्रद्रष्टृभिः "सम्भृतं रसं" वेद-सारं सूक्तसङ्घम् "अध्येति" अधीते, "तस्मै" पवमानाध्ययनं कुर्वते जनाय "सरस्वती" सर्वत्र सरणवती वाग्देवता † "क्षीरं" यज्ञ-साधनं पयः, "सर्पिः" तादृशं घृतं "मधु" मदकरम् "उदकं" सोमं "दुहे" स्वयमेव दुग्धे यागादि-पर-वेदशास्त्रं विदं करोतीत्यर्थः ‡ [दुह प्रपूरणे (अदा० प०) कर्मकर्त्तरि "न दुह-स्नु-नमाम् (३, १, ८९)"—इत्यादिना यकः प्रतिषेधः, "लोपस्त आत्मनेपदेषु (७, १, ४१)"—इति त-लोपः ॥ २ ॥

अथ तृतीया।

३ २ ३ १ २ ३ २ ३ १ २ ३ १ २
पावमानीःस्वस्त्ययनीःसुदुघाहिघृतश्चुतः।
१ २ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ २
ऋषिभिस्सम्भृतोरसोब्राह्मणेष्वमृतꣳहितम्॥ ३¶ ॥

---

* ऋ० वे० ७, २, १८, ७।

† 'सरस्वती—वाग्रूपा'—इति वि०।

‡ 'क्षीरं, सर्पिः, मधु, उदकम्—एतानि रसयन्ति द्रव्याणि तस्य सम्पद्यन्ते'—इति वि०।

¶ ऋ० वे० ७, २, ५, १।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



याः पावमान्य ऋचः ताः "स्वस्त्ययनीः" क्षेम-प्रापिकाः "सुदुघाः" सुष्ठु फलं दुहानाः "घृतश्चुतः" * [घृतं स्नोतन्ति चारयन्तीति घृतश्चुतः ईदृग्भूताः] अस्माननुगृह्णान्त्विति शेषः। "ऋषिभिः" मन्त्र-दर्शिभिर्मुनिभिः "रसः" फलसारः "सम्भृतः" अस्मासु सम्पादितः "ब्राह्मणेषु" ब्रह्माणो मन्त्राः तत्पाठकाः ब्राह्मणाः, तेष्वस्मासु † "अमृतम्" अविनाश-बलं "हितं" सम्पादितम्॥ ३॥

अथ चतुर्थी।

२ १ २ ३२ ३ १र २र ३ २
पावमानीर्द्दधन्तु न इमं लोकमथो अमुम्।
२ ३ १ २ ३ २ ३२ ३ १ २
कामान्त्समर्द्धयन्तु नो देवीर्द्देवैः समाहृताः॥ ४ ‡॥

"देवैः" इन्द्रादिभिः "समाहृताः" सम्पादिताः "पावमानीः देवीः" पवमान-मन्त्राभिमानिनी देव्यः "नः" अस्माकम् "इमम्" ईदृग्भूतं "लोकं" भूलोकम् "अथो" अपि च "अमुं" स्वर्गलोकं "दधन्तु" प्रयच्छन्तु। तत्रत्यान् "कामान्" च "नः" अस्मदर्थं "समर्द्धयन्तु" समृद्धान् कुर्वन्तु॥ ४॥

---

* 'घृतश्चुतः—घृतस्राविणः, अथवा घृतमुदकं तत् श्रवन्ति, कामवर्षी पर्जन्यो भवति'—इति वि०।

† 'ब्राह्मणेषु—अधिकरणभूतेषु'—इति वि०।

‡ ऋ० वे० ७, २, ५, २।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ पञ्चमी।

१ २ ३ २ ३ १ २ ३ १ २ ३ २ ३ १ २
येनदेवाःपवित्रेणात्मानम्पुनतेसदा।

१ २ ३ १ २ ३ १ २
तेनसहस्रधारेणपावमानीःपुनन्तुनः॥ ५ *॥

"देवाः" इन्द्राद्याः "येन" पवित्रेण शुद्धि-साधनेन "सदा" "आत्मानं" स्व-देहं पुनते शोधयन्ति, "सहस्रधारेण" सहस्रावान्तर-भेद-युक्तेन "तेन" साधनेन "पावमानीः" पावमान्य ऋचः "नः" अस्मान् "पुनन्तु" ॥ ५ ॥

अथ षष्ठी।

२ २ ३ १ २ ३ १ २ १ २
पावमानीःस्वस्त्ययनीस्ताभिर्गच्छतिनान्दनम्।

१ २ ३ १ २ ३ १ २
पुण्यांश्चभक्षान्भक्षयत्यमृतत्वञ्चगच्छति॥ ६† ॥ ८

"पावमानीः" पवमानः पावकः पूयमानो वा सोमः, तत्सम्बन्धिन्यस्तद्देवताका ऋचः पावमान्यस्ताः "स्वस्त्ययनीः" स्वस्तीत्यविनाश-नाम, तथाविध-फलस्य प्रापयित्र्यः, "ताभिः" उक्त-लक्षणाभिः पावमानीभिः, तत्पाठेन स्तोता "नान्दनं"‡ नन्द-

---

* ऋ० वे० ७, २, ५, ३।

† ऋ० वे० ७, २, ५, १६।

‡ 'नान्दनं—पुत्र-वस्तु-धन-धान्यादिभिः'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



याः पावमान्य ऋचः ताः "स्वस्त्ययनीः" क्षेम-प्रापिकाः "सु-दुघाः" सुष्ठु फलं दुहानाः "घृतश्चुतः" * [घृतं श्चोतन्ति चारयन्तीति घृतश्चुतः ईदृग्भूताः] अस्माननुगच्छन्त्विति शेषः। "ऋषिभिः" मन्त्र-दर्शिभिर्मुनिभिः "रसः" फलसारः "सम्भृतः" अस्मासु सम्पादितः "ब्राह्मणेषु" ब्रह्माणो मन्त्राः तत्पाठकाः ब्राह्मणाः, तेष्वस्मासु † "अमृतम्" अविनाश-बलं "हितं" सम्पादितम्॥ ३॥

अथ चतुर्थी।

३ १ २ ३ २ ३ १र २र ३ २
पावमानीर्दधन्तु न इमंलोकमथो अमुम्।
१र ३ १ २ ३ २ ३ २ ३ १ २
कामान्त्समर्द्धयन्तु नो देवीर्देवैःसमाहृताः॥ ४ ‡॥

"देवैः" इन्द्रादिभिः "समाहृताः" सम्पादिताः "पावमानीः देवीः" पवमान-मन्त्राभिमानिनी देव्यः "नः" अस्माकम् "इमम्" ईदृग्भूतं "लोकं" भूलोकम् "अथो" अपि च "अमुं" स्वर्ग-लोकं "दधन्तु" प्रयच्छन्तु। तत्रत्यान् "कामान्" च "नः" अस्मदर्थं "समर्द्धयन्तु" समृद्धान् कुर्वन्तु॥ ४॥

---

* 'घृतश्चुतः—घृतस्राविणः, अथवा घृतमुदकं तत् स्रवन्ति, कामवर्षी पर्जन्यो भवति'—इति वि०।

† 'ब्राह्मणेषु—अधिकरणभूतेषु'—इति वि०।

‡ ऋ० वे० ७, २, ५, २।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ पञ्चमी।

१ २ ३ २ ३ १ २ ३ १ २ ३ २ ३ १ २
येनदेवाःपवित्रेणात्मानम्पुनतेसदा।
१ २ ३ १ २ ३ १ २
तेनसहस्रधारेणपावमानीःपुनन्तुनः॥ ५ * ॥

"देवाः" इन्द्राद्याः "येन" पवित्रेण शुद्धि-साधनेन "सदा" "आत्मानं" स्व-देहं पुनते शोधयन्ति, "सहस्रधारेण" सहस्रावान्तर-भेद-युक्तेन "तेन" साधनेन "पावमानीः" पावमान्य ऋचः "नः" अस्मान् "पुनन्तु" ॥ ५ ॥

अथ षष्ठी।

३ २ ३ १ २ ३ १ २ १ २
पावमानीःस्वस्त्ययनीस्ताभिर्गच्छतिनान्दनम्।
१ २ ३ १ २ ३ १ २
पुण्याꣳश्चभक्षान्भक्षयत्यमृतत्वञ्चगच्छति॥ ६† ॥ ८

"पावमानीः" पवमानः पावकः पूयमानो वा सोमः, तत्सम्बन्धिन्यस्तद्देवताका ऋचः पावमान्यस्ताः "स्वस्त्ययनीः" स्वस्तीत्यविनाश-नाम, तथाविध-फलस्य प्रापयित्र्यः, "ताभिः" उक्त-लक्षणाभिः पावमानीभिः, तत्पाठेन स्तोता "नान्दनं" ‡ नन्द-

---

* ऋ० वे० ७, २, ५, ३।

† ऋ० वे० ७, २, ५, १६।

‡ 'नान्दनं—पुत्र-वस्तु-धन-धान्यादिभिः'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



यति सुकृतिन इति नन्दनः स्वर्गः स एव नान्दनः [स्वार्थिकस्तद्धित-प्रत्ययः] तम् "गच्छति" प्राप्नोति। किञ्चेह लोके ...ग्यान्"* सुकृत-सम्पादितान् "भक्षान्" भक्षणीयान् भोगान् अन्न-पानादि-लक्षणान् "च" भक्षयति। किञ्च "अमृतत्वं च गच्छति" अमृतत्वं नाम सोमस्तञ्च प्राप्नोति ॥ ६ ॥ ८

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य दशमस्याध्यायस्य सप्तमः खण्डः† ॥ ७ ॥

---

अथाष्टमे खण्डे‡—

अगन्मेति-तृचात्मकं प्रथमं सूक्तम्,

तत्र प्रथमा।

१२ ३१र २र३ १ २ ३
अगन्ममहानमसायविष्ठ

२ ३ २३ १ २३ १२ ३ २
योदीदायसमिद्धःस्वेदुरोणे।

---

* 'पुण्यान्—मन्त्रपूतान् अथवा धानाः करम्भः पुरोडाशः प्रतीवापः पयस्येति अथवा * * *)—इति वि०।

† 'उक्ताः पावमान्यः, उक्तश्च बहिष्पवमानं, नयमस्याङ्गः'—इति वि०।

‡ 'इदानीमाज्यानि भवन्ति'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ १ २ ३ १ २ ३ ३ ३ १

चित्रभानुꣳरोदसीअन्तरुर्वी

२ ३ १ २ ३ १ २

स्वाहुतंविश्वतःप्रत्यञ्चम् ॥ १ * ॥

"यः" अग्निः "स्वे दुरोणे" आहवनीयाख्ये स्वे स्थाने "समिद्धः" काष्ठैः सम्यग्दीप्तः सन् "दीदाय" दीप्यते, तमिमं "यविष्ठं" युवतमम् "उर्वी" विस्तीर्णयोः "रोदसी" रोदस्योः द्यावा-पृथिव्योः "अन्तः" मध्ये अन्तरिक्षे "चित्रभानुं" चित्रकालं "स्वाहुतं" सुष्ठु आहुतिभिर्हुतं सन्तं "विश्वतः" सर्वतः "प्रत्यञ्चं" प्रतिगच्छन्तमग्निं "मह्ना" महता "नमसा" नमस्कारेण "अगन्म" वयमुपगच्छामः ॥ १ ॥

अथ द्वितीया।

२ ३ १र २र ३ १ २ ३ २

समह्नाविश्वादुरितानिसाह्वा

३ १ २ ३ २ ३ २ ३ १२

नग्निष्टवेदमआजातवेदाः।

१ २ ३ १ २ ३ २

सनोरक्षिषद्दुरितादवद्या

३ १ २ ३ २ ३ १ २ ३ १ २

दस्मान्गृणतउतनोमघोनः ॥ २ † ॥

* ऋ० वे० ५, २, १५, १।

† ऋ० वे० ५, २, १५, २।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



यः "अग्निः" "मह्ना" महत्वेन "विश्वा" विश्वानि "दुरिता" दुरितानि "साह्वान्" अभिभवन् "जातवेदाः" जात-धनः जात-प्रज्ञो वा "दमे" यज्ञगृहे "स्तवे" अस्माभिः स्तूयते, "सः" अग्निः "गृणतः" स्तुवतः "नः" अस्मान् "दुरितात्" पापात् "अवद्यात्" निन्दिताच्च कर्मणः "रक्षिषत्" रक्षतु। "उत" अपिच "मघोनः" हविष्मतः "नः" अस्मान् रक्षतु ॥ २ ॥

अथ तृतीया।

१ २र ३ २ ३ १ २ ३ १
त्वंवरुणउतमित्रोअग्नेत्वां

१ ३ २ ३ १ २
वर्द्धन्तिमतिभिर्वसिष्ठाः।

१र २र ३ १ २ ३ १
त्वेवसु*सुषणनानिसन्तुयूय

१ ३ २ ३ १ २
म्पातस्वस्तिभिःसदानः ॥ ३ † ॥ ९

हे "अग्ने!" "त्वं" "वरुणः" असि पापानां निवारको भवसि "उत" अपिच "मित्रः" असि, पुण्य-प्रापणे सखा भवसि। "वसिष्ठाः" एतन्नामका ऋषयः हे अग्ने! "त्वां" "मतिभिः" स्तुतिभिः "वर्द्धन्ति" वर्द्धयन्ति "त्वे" त्वयि विद्यमानानि "वसु" वसूनि "सुषणनानि" सुसम्भजनानि "सन्तु"। हे अग्ने! "यूयं"

* "वसु"—इति क॰-मु॰-पुस्तकयोः पाठः।

† ऋ॰ वे॰ ५, २, १५, ३।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



त्वदाद्याः सर्वे देवाः "स्वस्तिभिः" क्षेमैः "नः" अस्मान् "सदा" सर्वदा "पात" रक्षत ॥ ३ ॥ ९

अथ तृचात्मके द्वितीय-सूक्ते—

तत्र प्रथमा।

३ २३ ३ १र २र ३ १ २ ३ १ २
महा१ं इन्द्रोयओजसापर्ज्जन्योवृष्टिमा१ं इव।

१ २ ३ १ २
स्तोमैर्वत्सस्यवावृधे ॥ १ * ॥

"यः" "इन्द्रः" "ओजसा" बलेन "महान्" सर्वेभ्योऽधिकः। क इव ? "वृष्टिमानिव" यथा वृष्ट्या युक्तः "पर्जन्यः" रसानां प्रार्जयिता देवः महान्, स इन्द्रः "वत्सस्य" पुत्र-स्थानीयस्य स्तोतुः वत्स-नाम्न एव वा ऋषेः "स्तोमैः" स्तोत्रैः "वावृधे" प्रवर्द्धते ॥ १ ॥

अथ द्वितीया।

२ ३ २ ३ १र २र३ १ २ ३ २ ३ १ २
कण्वाइन्द्रंयदक्रतस्तोमैर्यज्ञस्यसाधनम्।

३ १ २ ३ १ २
जामिब्रुवतआयुधा ॥ २ † ॥

"कण्वाः" [स्तोतृ-नामैतत् (निघ० ३,१५,७)] स्तोतारः कण्वगोत्रा वा "इन्द्रं" "स्तोमैः" स्तोत्रैः "यज्ञस्य" यागस्य "साधनं"

* ऋ० वे० ५, ८, ९, १ = य० वे० ७, ४०।

† ऋ० वे० ५, ८, ९, २।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



साधयितारं निष्पादकं "यद्" यदा "अक्रत" अकार्षत [करोते-र्लुङि "मन्त्रे घसेति (२, ४, ८०) च्लेर्लुक्, तदानीं "आयुधा" शत्रूणां हिंसकानि वाणादीनि "जामि" * [अतिरिक्तनामैतत्] अतिरिक्तम् अधिकं प्रयोजन-रहितं "ब्रुवते" कथयन्ति। "आयुधा" आयुधस्य सर्वस्य कार्य्यस्येन्द्रेण कृतत्वात् आयुधानि निःप्रयोजना-नीत्यर्थः [यद्वा, 'आयुधा' आयुधमायोधनशीलमिन्द्रं 'जामि' जामिं भ्रातरं 'ब्रुवते' वदन्ति॥

"आयुधा"–"आयुधम्"—इति पाठौ॥ २॥

अथ तृतीया।

३ २ ३ २ ३ १ २ ३ १र २र ३ १ २
प्रजामृतस्यपिप्रतःप्रयद्भरन्तवह्नयः।

१ २ ३ २ ३ १ २
विप्राऋतस्यवाहसा॥ ३ †॥ १०

"ऋतस्य" यज्ञस्य सत्यस्य वा "प्रजा" प्रकर्षेण जातमिन्द्रं "पिप्रतः" नभसः प्रदेशान् पूरयन्तः "वह्नयः" वाहका अश्वा "यद्" यदा "प्र भरन्त" प्रकर्षेण भरन्ति वहन्ति तदा "विप्राः" मेधाविनः

* 'जामि—जानामि'—इति वि०।

† ऋ० वे० ५, ८, ८, २।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



स्तोतारः "ऋतस्य" यज्ञस्य "वाहसा" प्रापकेण स्तोत्रेण तम् इन्द्रं स्तुवन्तीति शेषः ॥ ३ ॥ १०

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य दशमस्याध्यायस्य

अष्टमः खण्डः * ॥ ८ ॥

---

अथ नवमे खण्डे †—

पवमानस्येति तृचात्मकं प्रथमं सूक्तम्, ‡

तत्र प्रथमा ।

१२   ३ १२३ १२३ १ २
पवमानस्यजिघ्नतोहरेश्चन्द्राअसृक्षत ।

३ १ २ ३१ २
जीराअजिरशोचिषः ॥ १ § ॥

"जिघ्नतः" पुनः पुनः तमांसि विनाशयतः ‖ "हरेः" हरित-वर्णस्य "अजिरशोचिषः" सर्वत्र-गमन-शील-तेजसः "पव-

---

* 'उक्तान्याख्यानि'—इति वि० ।

† 'इदानीं माध्यन्दिनः पवमानः'—इति वि० ।

‡ 'उत्तरादारात्मतप्रभृतीनि सामानि ब्राह्मणोक्तार्थानि'—इति वि० ।

¶ "अजीर"—इति ख० पु० पाठः ।

§ ऋ० वे ७, २, ११, ५ ।

‖ 'जिघ्नतः—घ्नन्यमानस्य'—इति वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



मानस्य" "चन्द्राः" [ चदि आह्लादे (भ्वा० प०)] देवानामाह्लादयितारः "जीराः" चिप्रं चरण-शीलाः * धाराः "असृचत" सृजन्ति पवित्रान्निर्गच्छन्तीत्यर्थः॥

"जिन्नतः"-"जङ्गतः"—इति पाठौ॥ १॥

अथ द्वितीया।

१ २ ३ १ २ ३ १ २ ३ १ २
पवमानोरथीतमःशुभ्रेभिःशुभ्रशस्तमः।
१ २ ३ १ २
हरिश्चन्द्रोमरुद्गणः॥ २ †॥

"पवमानः" देवः "रथीतमः" अतिशयेन रथवान् [ "इन्द्र-थिनः (८,२,१७ वा०)"—इतीकारः। तथा "शुभ्रेभिः" शोभायुक्तेभ्यस्तेजोभ्योऽपि "शुभ्रशस्तमः" अत्यन्तं दीप्यमानश्च [यद्वा, निर्मलतम-यशोयुक्तः] "हरिश्चन्द्रः" [ "ह्रस्वाच्चन्द्रोत्तरपदे मन्त्रे (६,१,१५१)"—इति सांहितिकः सुट्] हरित-वर्ण-दीप्तिः हरित-धारा-युक्तो वा "मरुद्गणः"मरुतो यस्य गणाः सहाय-भूताः स तथोक्तः तादृशः सोमः सर्वान् स्व-रश्मिभिः व्याप्नोतित्युत्तरेण सम्बन्धः॥ २॥

---

* 'जीराः—जीरणात्मकाः'—इति वि०।

† ऋ० वे० ९, २, १२, १।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ तृतीया ।

१ २ ३ २र ३ १ २ ३ १ २
पवमानव्यश्नुहिरश्मिभिर्वाजसातमः ।
१ २ ३ २ ३ १ २
दधत्स्तोत्रे सुवीर्य्यम् ॥ ३ * ॥ ११

हे "पवमान" सोम ! त्वं "रश्मिभिः" स्व-दीप्तिभिः "व्यश्नुहि" सर्वं जगद् व्याप्नुहि । कीदृशस्त्वम् ? "वाजसातमः" अतिशयेनान्नस्य दाता बलस्य सम्भक्ता वा तथा "स्तोत्रे" पवमानं स्तोत्रं कुर्वते जनाय "सुवीर्य्यं" शोभन-वीर्योपेतं पुत्रं धनं वा "दधत्" विदधत् पयच्छत् व्याप्नुहि ॥

"पवमानव्यश्नुहि"-"पवमानोव्यश्नवत्"—इति पाठौ ॥ ३ ॥ ११

अथ तृचात्मके द्वितीय-सूक्ते—

प्रथमा ।

२ ३ १ २ ३ २उ ३ १ २ ३ २ ३ २
परीतोषिञ्चतासुतꣳसोमोयउत्तमꣳहविः ।
३ १र २र ३ २ २उ ३ २ ३ २ ३ १ २
दधन्वाꣳयोनर्यौअप्स्वा३न्तरासुषावसोममद्रिभिः ॥१†॥

हे ऋत्विजः ! "सुतम्" अभिषुतं सोमम् "इतः" अस्मात् कर्मण ऊर्द्धम् अथवा अस्मात् प्रदेशात् ऊर्द्ध्वं "परिषिञ्चत" वसतीवरीभिः [ इतोषिञ्चतेत्यत्र संहितायां छान्दसं रो रुत्वम्, आदेश-

---

* ऋ० वे० ७, २, १२, २ ।

† उ० आ० ६, १. ३, २ (२भा० ७७ पृ०) = ऋ० वे० ७, ५, १२, १ ।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



प्रत्यययोरिति षत्वम् ] "यः" "सोमः" देवानाम् "उत्तमं" प्रशंस्यं "हविः" भवति "आ" अपिच "नर्यः" मनुष्य-हितः यश्च सोमः "अप्सु" वसतीवरीषु अन्तरिक्षे वा "अन्तर्" "दधन्वान्" गच्छन् भवन् भवति तं "सोमम्" "अद्रिभिः" ग्रावभिः अध्वर्युः "सुषाव" अभिषुतं चकार ; तं परिषिञ्चतेति समन्वयः ॥ १ ॥

अथ द्वितीया।

२ १ २ २ १ २ २ १ २ ३ १ २ ३ १ २
नूनम्पुनानोविभिःपरिस्रवादब्धःसुरभिन्तरः।
३ १ २ ३ १ २ ३ १ २ ३ २ ३ २ ३ १ २
सुतेचित्त्वाप्सुमदामोअन्धसाश्रीणन्तोगोभिरुत्तरम् ॥२॥*

हे सोम! "अदब्धः" कैश्चिदप्यहिंसितः "सुरभितरः" अत्यन्तं सुगन्धि त्वं "नूनम्" इदानीं "पुनानः" पूयमानः "अविभिः" अवि-वाल-कृतैः पवित्रैः "परिस्रव" परिक्षर "सुते चित्"† अभिषुते सति "अन्धसा" भक्त-लक्षणेनान्नेन "गोभिः" गोर्विकारैः क्षीरादिभिः "श्रीणन्तः" मिश्रयन्तः वयम् "उत्तरम्" उद्गततरम् ‡ "अप्सु" वसतीवरीषु स्थितं "त्वा" त्वां "मदामः" मदामहे ॥ २ ॥

---

* ऋ० वे० ७, ५, १९, २।

† 'चित्—इति पदपूरणः'—इति वि०।

‡ 'उत्तरम्—उत्तरेषु भुवनेषु'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ अध्यास्वरूपा तृतीया ।

१२ ३ १र २र  २ १ २ ३ २ ३ १ २  १ २
परिस्वान*श्चक्षसेदेवमादनःक्रतुरिन्दुर्विचक्षणः ॥३†॥ १२

"स्वानः" सुतः अभिषूयमाणः सोमः "चक्षसे"‡ सर्वेषां दर्शनाय "परि" स्रवति। कीदृशः? "देवमादनः" देवानां तर्पयिता, "क्रतुः" कर्त्ता,¶ "इन्दुः" पात्रेषु चरण-शीलः दीप्तो वा, "विचक्षणः" "सर्वस्य" विद्रष्टा ॥ ३ ॥ १२

५ ४  २र ३ ४ र ५  १र र
॥ पृष्ठम् ॥ परा३यितोषिञ्चतासुताम् । सोमोयउत्त

१  २ १र र र
मꣳहवार३यिर्हौइया । दधन्वाꣳयोनर्योअप्सुवन्तरार३

१  २ १र  २  १  २
हौइया । सुषावार२३सो । ममद्रा२३यिभा३४३यिः ॥(१)

५ ४ २ ३र ४ ५  १ र र  १
सुषा३वसोममद्रिभायिः । सुषावसोममद्रिभा२३यिर्हौ

२र १ र र  १  २ १
इया । नूꣳनानोअविभिःपरिस्रवा२३हौइया । अदब्धा

१ १ २  ५ ४ २ ३ ४ ५
२३ःह्व । रभिन्तार२३रा३४३ः ॥(२) अदा३ब्धःसुरभिन्तराः ।

---

* "सुवान"—इति ऋ० पाठः ।

† ऋ० वे० ७, ५, १२, ३ ।

‡ 'चक्षसे—चक्षाय'—इति वि० ।

¶ 'क्रतुः—यज्ञः'—इति वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अदब्ध सुरभिन्तरार३होइया। सुतेचित्त्वाप्सुमदामोअ्

न्धसार३होइया। श्रीणन्तोर३गो। भिरुतार ३रा ३ ४

३म्। ओर३४५ई। डा॥ १ *॥ [१]

॥ कौल्मलबर्हिषम्॥ परा३यितो३षिञ्चतासुताम्। सो

मोयउत्तमार३होवार ३ ४ यिः। दधन्वा३योनर्य्योअ्सा।

एहोयि। प्स्व२अन्तरा। सुषावसोममोवा३ओ२३४वा।

द्रा५यिभोई३हायि ॥(१) सुषा३वा३सोममद्रिभायिः। सु

षावसोममा२द्रायिभार ३ ४यिः। नूनम्पुनानोअवायिभा

यिः। ऐहोयि। पा२रिस्रवा। अदब्धःसुरभोवा३ओ

२३४वा। तापूरो६हायि॥(२) अदा३ब्धा३ःसुरभिन्तराः।

अदब्धःसुरभार२यिन्तारार ३ ४ः। सुतेचित्त्वाप्सुमादा।

---

* ऊ० गा० ५प्र० १अ० १मा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



ऐहोयि । मो२अन्धसा । श्रीणन्तोगोभिरोवा३ओ२३४वा । तापूरोइ्हायि(३) ॥ २ * ॥ [२]

॥ अर्कपुष्पाद्यम् ॥ परोतोषिञ्चतासुतम् । ऊवे२३ । सोमोयउत्तमꣳहविः । ऊवे२३ । दधन्वाꣳयोनर्य्योअप्स्वन्तरा । ऊवे२३ । सुषावसोममद्रिभिः । ऊवे२३ ॥(१) सुषावसोममद्रिभिः । ऊवे२३ । सुषावसोममद्रिभिः । ऊवे२३ । नूनम्पुनानोविभिःपरिस्रव । ऊवे२३ । अदब्धःसुरभिन्तरः । ऊवे२३ ॥(२) अदब्धःसुरभिन्तरः । सुरभिन्तरः । ऊवे२३ । अदब्धःसुरभिन्तरः । ऊवे २ ३ । सुतेचित्त्वाप्सुमदामोअन्धसा । ऊवे २ ३ । श्रीणन्तोगोभिरुत्तरम् । ऊवे२३ । ऊवे२३ । होवा३हा२ । हा

* ज० गा० ५प्र० २ख० २सा० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५र २ २ १र २ र १र २ १ १ १
३४ । औहोवा । अर्कोदिवाना२म्परमे वियो२मा २ ३ ४

१
५न् (३) ॥ ३ * ॥ [३]

२ र १र र र र र २
॥ दैर्घश्रवसम् ॥ परीतोषिञ्चतासुतमोहाओहा३ए ।

१र १र १ २ १ २ १ ऽ २ ऽ २ २ ३ २
सोमोयउत्तम९हविः । ओ३हा । ओ३हा३ए३४ । दधा

३र २ १ २ १ २ ऽ २
३४न्वा९याः । नारियः । अप्सू अन्तरा । ओ ३ हा ।

ऽ २ २ २ २ ३ २ २ १ ५ ४
ओ३हा३ए३४ । सुषा३४वसो३ । ममो२३४वा । द्रा५

५ २ र र र र र २
यिभो६हायि ॥(१) सुषावसोममद्रिभिरोहाओहा३ए ।

२ १र १ १र २ १ २ ऽ २ ऽ २ २ ३र २
सुषावसोममद्रिभिः । ओ३हा । ओ३हा३ए३४ । नूना

३ २ १ २ १ २ ऽ २ ऽ
३४म्पुना । नोअवि । भिःपारिस्रवा । ओ३हा । ओ३

२ २ १ २ ३ २ र १ ५ ४
हा३ए३४ । अदा३४ब्धःसू३ । रभो२३४वा । ता५रो६

५ २ र र र २ १ २
हायि ॥(२) अदब्धःसुरभिन्तरओहाओहा३ए । अदब्धः

१ २ ऽ २ ऽ २ २ ३ २
सुरभिन्तरः । ओ३हा । ओ३हा३ए३४ । सुता३४यि

* ऊ० गा० ५प्र० २खं० ३सा० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



चित्त्वा। आप्सुम। दामोअन्धसा। ओ३हा। ओ३वा३ए३४। औणा३४न्तोगो३। भिरो२३४वा। तापूरो६हायि(३)॥ ४ *॥ [४]

॥ दन्ताश्रर्वैयश्वम्॥ परीतोषिञ्चतासुताम। सोमो। यउत्तमꣳहविः। दधान्वा१यो२ः। नर्यो अप्सुवन्तरा। सुषावा१सो२। ममद्रा२३यिभा३४३यिः॥(१) सुषावसोममद्रायिभायिः। सुषा। वसोममद्रिभिः। नूनाऽपू१ना२। नोअविभिःपरिस्रव। अदाब्धा१ःसु२रभिन्ता२३रा३४३ः॥(२) अदब्धःसुरभिन्तारः। अदाब्धःसुरभिन्तरः। सुतायिचा१यित्वा२। अप्सुमदामोअन्धसा। औणान्तो१गो२। भिरुत्ता२३रा ३ ४ ३म्। ओ२३४५ई। डा(३)॥ ५ †॥ [५]

---

* ऊ० गा० ५प्र० २ख० ४सा०। † ऊ० गा० ५प्र० २ख० ५सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



॥ आभीशवाद्यम् ॥ परीतोषिञ्चतासुतम्। ए। सोमोयउ३त्तामꣳहाविः। दा२३४धा। हायि। न्वाꣳयोनर्य्योअप्सूअन्तारा। सू२३४षा। हायि। वासोमभिमो२३४वा। द्रा५यिभोꣳहायि॥(१) सुषावसोममद्रिभिरे। सुषावसो३मामद्रिभायिः। नू२३४नाम्। हायि। पुनानोअविभिःपारिस्रावा। आ२३४दा। हायि। व्याः सूरभो२३४वा। ता५रो६हायि॥(२) अदब्धःसुरभिन्तरए। अदब्धःसू३राभिन्तारः। स्व२३४ते। हायि। चित्वाप्सुमदामोअन्धासा। आ२३४यिणा। हा। तोगोभिरो२३४वा। ता५रो६हायि(३)॥ ६ *॥ [६]

॥ माधुच्छन्दसम् ॥ परीतोषा। होयिः। चतासुताइमे। सोमेयज्ञ। तामꣳहा२३४वोः। दधन्वाꣳयोन

* ऊ० गा० ५प्र० १खं० ६गा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



औंआ। स्तुवान्तारा। औहोऽ४वाबायि। सुवाबर्हा। औहोऽ३४वावा। ममद्राऽ२३यिभाऽ३४ऽ३यि:। यितेराऽ१। ई। डा(३)॥३*॥[७]

॥ ऐडमायास्यम्॥ आयिपरायि। नोपायि। बभ्रसुताम्। सोमीयजऽ३१। तमऽच्चवायिः। दाधन्याऽ३१:। नर्य्योआ। स्तुवन्तरा। सूषावसोऽ३१। ममद्राऽ३यिभाऽ३४३यिः॥(१) आयिसुषा। वासो। ममद्रिभायिः। सूषावसौऽ३१। ममद्रिभायिः। नूनम्पुनाऽ३१। नोभ्रविभायिः। परिस्रवा। आदब्धःसूऽ३१। रभिन्तारऽ२३राऽ३४३:॥(२) आअदा। ब्धाःसू। रभिन्तराः। आदब्धःसूऽ३१। रभिन्तराः। सूतेचित्त्वाऽ३१। स्तुमदा।

* ऊ० गा० ७प्र० १ख० ९सा० ।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ ९ ९ ९ ९
॥ आभीशवाद्यम्॥ परीतोषिञ्चतासुतम्। ए। सो

९ ऽ १ ७ २ ३ ५ २ १९
मोयजऽत्तामऽ्हाविः। दा२३४धा। हायि। न्वा॒

९ ९ ७ २ ३ ५ २ १९ २
योनर्य्योअप्सूअन्तारा। सू२३४षा। हायि। वासोम

१ ५ ४ ५ २९ ९
मोर२३४वा। द्रा५यिभोई हायि॥(१) सुषावसोममद्रिभि

९ ९ ऽ १ ७ २ ३ ५ २
रे। सुषावसो३मामद्रिभायिः। नू२३४नाम्। हायि।

१९९ ७ २ ३ ५ २ १
पुनानोअविभिःपारिखावा। आ२३४दा। हायि। व्याः

२ १ ५ ४ ५ २
सूरभो२३४वा। ता५रोई हायि॥(२) अदब्धःसुरभिन्त

ऽ १ ७ २ ३ ५ २ १
रए। अदब्धःसू३राभिन्तारः। स्व२३४ते। हायि। चि

९ ९ ७ २ ३ ५ २ १ ९
त्वाप्सुमदामोअन्धासा। आ२३४यिणा। हा। तोगो

२ १ ५ ४ ५
भिरो२३४वा। ता५रोई हायि(३)॥ ६ *॥ [६]

३ ४९ ५९ ९ २ ३ ४९ ५
॥ माधुच्छन्दसम्॥ परीतोषा। होयिः। चतासुता

५ २९ १ २ १ २ ३ ५ २ १९ ९
ईमे। सोमायज। तामऽ्हार२३४वोः। दधन्वा॒योन

* ऊ० गा० ५प्र० २अ० ६सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



य्यांश्च। प्सुवान्तारः। औहो३४वाहायि। सुषावाहो। औहो३४वाहा। ममद्रा२३यिभा३४३यिः। ओ२३४५ ई। डा(३) ॥ ३ * ॥ [७]

॥ ऐडमायास्यम् ॥ आयिपरायि। तोषायि। चता सुताम्। सोमोयऊ३१। तमऌ्हवायिः। दाधन्वाऌ् या३१ः। नर्य्याश्रा। प्सुवन्तरा। सूषावसो३१। ममद्रा२३ यिभा३४३यिः ॥(१) आयिसुषा। वासो। ममद्रिभा यिः। सूषावसो३१। ममद्रिभायिः। नूनम्पुना३१। नोश्रविभायिः। परिस्रवा। आदब्धःसू३१। रभिन्ता २३रा३४३ः ॥(२) आश्रदा। ब्धाःसू। रभिन्तराः। आ दब्धःसू३१। रभिन्तराः। सूतेचित्त्वा३१। प्सुमदा।

* ऊ० गा० ७प्र० १ख० ९सा०।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२र १ र र २ १ २
मोअन्धसा । आयिणन्तीगो३१ । भिरुत्तार२३रा३४३म् ।

१
ओ२३४५ई । डा(३) ॥ ४ * ॥ [८]

२ १ ४ र ५ १र २र
॥ पृश्नि ॥ परायितो२३षिच्चतासुतꣳहाउ । सोमो

१ २ १ २ १ २ १ २ २
यउत्तमꣳहविः । दधन्वाꣳ१या २ ३ः । होवा३हायि ।

२ २र १ २ १ २ २ १
मारियोअ । सुवान्ता१रा२३ । होवा३हायि । सषा

२ १ २ २ १ २ १ २
वा१सो२३ । होवा३हा । मामद्रिभिः । इडा२३मा३४

१
३ । ओ२३४५ई । डा(१) ॥ २ † ॥ [९]

२ र र र
॥ अभीशवोत्तरम् ॥ परीतोषिच्चतासुतम्ए । ए ।

र र १ ७ २ ३ ५ २ २
सोमोयजऽ३त्तामꣳहाविः । दा२३४धा । हा३हायि ।

१र र र ७ २ ३ ५ २ २ १र
न्वाꣳयोनर्य्याअप्स्वअन्तारा । सु२३४षा । हा३हायि । वा

२ १र ५ ४ ५ २ र र
सोममो२३४वा । द्रा५यिभोईहायि ॥(१) सुषावसोम

---

* ऊ० गा० ७प्र० १ख० ४सा० ।

† ऊ० गा० ७प्र० २ख० ३सा० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



मद्रिभिरे। ए। सुषावसोऽमामद्रि। भायि:। नू२३४

नाम्। हा३हायि। पुनानोअविभिःपरिस्रावा। अ

२३४हा। हा३हायि। अदाःस्वरभोर३४वा। तापूरो६

हायि॥(२) अदब्धःसुरभिन्तरए। ए। अदब्धःसू३राभि

न्तारः। सू२३४ते। हा३हायि। चित्त्वाप्सुमदामोअ

न्धासा। आर२३४यिणा। हा३हा। तोगोभिरोर२३४

वा। तापूरो६हायि(३)॥४*॥[१०]

॥ सम्मतम्॥ परीतोषिञ्चतासुताम्। सोमोयउत्त

मऽहवायि:। दधन्वाऽ२३याः। नारियोअ। प्सु वा

न्तारा। औहो३४वाहायि। सु। षावा२३सो३। हो

वा३हा। ममद्रा२३यिभा३४३यिः॥(१) सुषावसोमम

द्रिभायि:। सुषावसोऽममद्रिभायि:। नूनम्पू२३ना।

* ऊ० गा० ७प्र० २ख० ४सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ २ १ २ ३र २ ३र २ १
नोअविभिः। परायिसावा। औहो३४वाहायि। अ।

२ १ २ २ १ २
दाब्धा२३ःसू३। होवा३हा। रभिन्तार२३रा३४३ः ॥(२)

१ २ १ २ १ २ १ २
अदब्धःसूरभिन्तराः। अदब्धःसूरभिन्तराः। सुतेचार२३

२ १ २र र १ २ ३र २ ३र २
सित्वा। आप्सुमदा। मोआन्धासा। औहो३४वाहा

१र २ १ २ २ १
यि। औ। गान्तोर२३गो३। होवा३हायि। भिरुत्ता

२ १
र२३रा३४३म्। ओर२३४५ई। डा(३) ॥ ३ * ॥ [११]

५ र २ ४ ५ ४र ५ २र १ २
॥ कालेयम् † ॥ परीतो३षिञ्चतासुताम्। सोमोय

१ २३ ११ २३र २ १
उ। तमु२हवा२३यिः। दधन्वा२याइः। नार२३४।

३४र ५ २ २ १ ३२ २ ५
रियोअप्सुव। ताउरा। सुषावसो। वा३४३औ३४वा।

४ ४
ममा५द्रिभायिः। हो५ई। डा(३) ॥ ४ ‡ ॥ [१२]

२र र १ ५ १
॥ रौरवम् ॥ परीतोषिञ्चा३तासू२३४ताम्। सोऽ

---

* ऊ० गा० ९प्र० १ख० ३गा०।

† "महाकालेयम्"—इति ख०-पाठः।

‡ ऊ० गा० ९प्र० २ख० ४गा०



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



सोयउत्तमꣳहविर्द्धन्वाꣳयोनर्य्योअप्सुवा२न्तरा। ओ

हा३उवा। सुषावसोममा २ ३ द्रायि। ओहा३उवा।

द्रिभायिः। औ३होवा॥(१) सुषावसोमा३मद्रा२ ३ ४

यिभायिः। सू५षावसोममद्रिभिर्न्नूनम्पुनानोअविभिःपरा२

यिस्रवा। ओहा३उवा। अदब्धःसुरभा२३यिहायि। ओ

हा३उवा। तरा। औ३होवा॥(२) अदब्धःसुरा३भि

न्तार३४राः। आ। दब्धःसुरभिन्तरःसुतेचित्त्वाप्सुमदा

मोअ२न्धसा। ओहा३उवा। श्रीणन्तोगोभिरु२३हा

यि। ओहा३उवा। तराम्। औ२३होवा। हो५ई।

डा(३)॥११*॥[१३]

॥आष्टादꣳष्ट्रोत्तरम्॥ परीतोषिञ्चतासुतमैयादौ।

हो३वा। सोमोयउत्तमम्। हौवा२३यिः। ऐया२३त्।

---

* ऊ० गा० ९प्र० ३अ० ११सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



ओ२३होवा । दधन्वा२ँ योनर्यो अप्सुव । तारा २ ३ ।
ऐया२३त् । ओ२३होवा । सुषावसोमम । द्रायिभा
२३यिः । ऐया२३त् । ओ२३होवा३४३ ॥(१) सुषावसो
ममद्रिभिरैयादौ । हो३वा । सुषावसोमम । द्रायिभा
२३यिः । ऐया२३त् । ओ२३होवा । नूनम्पुनानोविभिः
परि । स्रावा२३ । ऐया२३त् । ओ२३होवा । अदब्धः
सुरभि । ता२३त् । ऐया२३त् । ओ२३होवा३४३ ॥(२)
अदब्धःसुरभिन्तरऐयादौ । हो३वा । अदब्धःसुरभि ।
तारा२३ः । ऐया२३त् । ओ२३होवा । सुतेचित्त्वाप्सु
मदामोअ । धासा२३ । ऐया२३होवा । श्रीणन्तोगो
भिरु । तारा२३म् । ऐया२३त् । ओ२३होवा३४३ ।
ओ२३४५ । ई । डा(३) ॥ १८ * ॥ [१४]

---

* ऊ० गा० १२प्र० १ख० १८सा० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



३ ४र ३र ४ ३र ४ ५ र ३
॥ उत्सेधम् ॥ परीतोषिञ्चतासुतम् । सोमः । य

२ ३र ४र ५ २ १
ऊ३४औहोवा । तमङ्हवाऽरयिः । हा३१उवा २ ३ ।

२ ५ ३ २ ४र ५र ४ ५ १
ऊ ३ ४ पा । दधाइन्चाङ्या । औहोवाहायि । नारि

२र १ २ १ २र २ ५
योआ । स्सुवन्तारा । हा३१उवा२३ । अ३४पा ।

३ २ ४ र ५र ४ ५ ३ २ ४
सुषा३वसो । अहौवाहायि । ममा३द्रा५यिभा ६ ५ ६

४ ३र ४ ३र ४ ३ ४ ५ र ३ २ ३र ४र
यिः ॥(१) सुषावसोममद्रिभिः । सुषा । वसो३४औहो

५ २ १ २ ५
वा । ममद्रिभाऽरयिः । हा३१उवा२३ । ऊ ३ ४ पा ।

३र २ ४ र ५र ४ ५ १ २ १ २
नूना३पुना । औहोवाहायि । नोअविभायिः । परि

१ २ २ ५ ३ २ ४ ५र
स्राव । हा३१उवा२३ । ऊ३४पा । अदा३ब्धः सु । औ

४ ५ ३ २ ४ ३ ४
होवाहायि । रभा३यित्ता५राइ५६ः ॥(२) अदब्धः सुर

३ ४ ५ ३ २ ०र ४र ५ २ १
भिन्तरः । अद । ब्धः सू३४औहोवा । रभिन्तराऽरः ।

२ ५ ३ २ ४ ५र ४
हा३१उवा२३ । ऊ३४पा । सुता३यिचित्त्वा । औहो

५ १ २ १ २र १ २र
वाहायि । आप्सुमदा । मोअन्धासा । हा३१उवा२



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



३। अ३४पा। औ३ऽ२न्तोगो। औहोवा३हायि। भि

क्षन्ताऽ५राइ५इम्(३) ॥ २० * ॥ [१५]

॥ पृश्नि ॥ परायितो२३षिञ्चतासुत१ृहाउ। सोमो

यउत्तम१ृहविः। दधान्वा१ृ१यार२३:। होवा२३हायि।

नारियोअ। प्सुवान्ता१र्रा२३। होवा३हायि। सुषा

वा१सो२३। होवा३हा। मामद्रिभिः। इडा२३॥(१)

सुषावा२३सोममद्रिभिर्होउ। सुषावसोममद्रिभिः। नू

नाम्पू१ना२३। होवा३हायि। नोअविभिः। परायि

स्वा१वा२३। होवा३हायि। अदाब्धा१:सू२३। होवा३

हा। राभिन्तरः। इडा२३॥(२) अदाब्धा२३:सुरभि

न्तरोहाउ॥(२) अदब्धःसुरभिन्तरः। सुतायिचा१यि

त्वा२३। होवा३हायि। अप्सुमदा। मोआन्धा१सा

* ऊ० गा० १२प्र० २ख० २०सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२३। ह्वोवा३हायि। औबान्तो१गो२३। ह्वोवा३हायि। भायिरुत्तरम्। इडा२३(३)॥ ६ *॥ [१५]

॥ वाम्रम्॥ परीतोषिञ्चता। हा३हा३यि। सू२३४। तऽसुतोवा। सोमोहो२यि। यऊहो२। ताऽसन्हावा२यिः। दाधन्वाऽय। नरायियोआ। प्सुवाउवा३। ऊ३४पा। तरा२। सूषा२वासो२। ममद्रा२यिभा२३४औहोवा॥(१) सुषावसोममा। हा३हायि। द्रा२३४यि। भिद्रिंभोवाःसुषाहो२ई। वसाहो२। मामद्रायिभा२यिः। ननम्पुना। नोआवायिभायिः। पराउवा३। ऊ३४पा। स्रवा२। आदा२ब्धाः सू२। रभि। ता२रा२३४औहोवा॥(२) अदब्धःसुरभि। हा३हा३यि। ता२३४। रस्तरोवा। अदाही

* अ० गा० १५प्र०१ख० ६सा०।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



रयि । ब्धःस्त्वो२ । राभिन्तारा२ः । स्तेचित्वां । पुरु

माद्रा । मश्राउवा३ । ऊ३४पा । धसा२ । आयिणा

रन्तोगो२ । भिरू । ता२रा२३४औहोवा । ऊ२३२

४पा(३) ॥ १२ * ॥ [ १६ ]

॥ मानवोत्तरम् ॥ होवायि । परीतोषिञ्चतासुतम् ।

होवायि । सोमोयउत्तमꣳहविः । दाधन्वाꣳयः । ना

रियोआ३१ । प्सूवारन्ता२३४रा । सुषावा२ ३ सो ३ ।

मा२मा२३४औहोवा । द्रा२३४यिभीः ॥(१) होवायि ।

सुषावसोममद्रिभिः । होवायि । स्वषावसोममद्रिभिः ।

नूनम्पुना । नोअविभा३१यिः । परा२यिस्रा२३४वा ।

अदाभ्वा२३ःस्त्व३ । रा२३४औहोवा । ता२३४राः ॥(२)

होवायि । अदब्धःसुरभिन्तरः । होवायि । आदब्धः

* ऊ० गा० १५प्र० २अ० १२गा० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ ७र
सुरभिन्तरः । ह्वोवायि । आदध्मः सुरभिन्तरः । ह्वते
२ र १ ७ २ ७र २ ५ २र १
चित्त्वा । आप्सुमदा२१ । मोआ२न्धा२३४सा । श्रीणा
२ १ ३ ५र र ३
न्तो २ ३ गो ३ । भा२यिह्व२३४औहोवा । ता २ ३ ४
५
राम्(३) ॥ १३ * ॥ [१७]

१२ १२ र
॥ आनूपं वाध्र्यश्वम् ॥ परायिपरायि । तोषिञ्चा ३
१२ १ र २ १ २ १
ता२१ता२म् । सोमोयउ । तमा२हा१वा२यिः । दा
१ १र २१ २ १ २ र
धा२न्वा२या२ः । नर्यो अप्सुवन्ता२३रा । सुषावा३सो
१ ४ २ ५ १२१२
३ । मा२३मा३ । द्रा३४५यिभो६हायि ॥(१) सूषासूषा ।
र १२ १र२र १२
वसोमा३माद्रा१यिभा२यिः । ह्वूषावसो । ममाद्रा१यि
१ १ १र ११ २
भा२यिः । नूना२म्पूना२ । नोअविभिः परिस्रा२३वा ।
१ २ २ १ ४ २ ५
अदाभ्या३ःह्व३ । रा२३भा३यि । ता३४५रो६हायि ॥(२)
१२२२ १ २ १ २
अदाअदा । भ्यःसुरा३भायिन्ता१रा२ः । आदभ्यःसु ।

---

* ऊ० गा० १५प्र० २ख० १३सा० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



रभायिन्ता१रा२ः। स्तेर्चायित्वा२। अप्सूमदीमो

अन्धा२३सा। औणान्तो३गो३। भा२३यिह्न३। ता

३४५रो६हायि(३) ॥ १४ * ॥ [१८]

॥ यौधाजयम् ॥ परा३१यि। तो३षि। च। ताह्न

२३४ताम्। सोमो३। गऊर। तमा३४५म्। हा२

३४वीः। दधान्वा१ण्याः। न। व्यीश्रा२। पसुवा३४५।

ता२३४रा। सुषा२। वासोर। ममा३४५। द्रा२३४

यिभीः॥(१) सुषा३१। वा३सो। मम्। आद्रा२३४यिभायिः।

ह्रषा३। वसोर। ममा३४५। द्रा२३४यिभीः। नूनाग्नु

ना। नः। अविभार्यिः। परा३४५यि। स्वा२३४वा।

अदार। श्वाःह्नर। रभा३४५यि। ता२३४राः॥(२)

अदा३१। श्वा३ःसू। र। भिन्ता२३४राः। आदा३।

* ऊ० गा० १५प्र० २ख० १४सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अः स्व२। रभा३४५यि। ता२३४राः। सुतायिषित्वा।
अ। त्सुमदा२। मो अ३४५। धा२३४सा। श्रीणा२।
तोगो२। मिह्व३४५। ता२३४राम्(३)॥५*॥[१९]

॥ दैगतम्॥ परीतो३षिञ्चतासुताम्। सोमोयउ।
तमा२ ष्वा१वा२यिः। दधा३। हौ३वो३वा। ण्वा२
योनर्व्याऽप्स्वन्तारा२। सुषा२३। वा२सो२३४औहो
वा। ए३। ममा२द्रिभा२३४५यिः॥(१) सुषावा३सोम
मद्रिभायिः। स्वषावसो। ममाद्रा१यिभा२यिः। नूना
२म्। हौ३वो३वा। पुनानोअविभिःपारिस्रावा२। अ
दा२३। व्धा२ःसू२३४औहोवा। ए३। रभा२षिन्तरा
२३४५ः॥(२) अदव्धा३ःसुरभिन्तराः। आदव्धःसू। र
भायिन्ता१रा२ः। सुता३यि। हौ३हो३वा। चित्वा

० ऊ० गा० २६प्र० १ख० ५सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



स्मदामो अन्धासा २ । औणा२३ । तो२गो२३४औ
होवा । ए३ । भिह्व२त्तरा२३४५म्(३) ॥ ६ * ॥ [२०]

॥ कण्वरथन्तरम् ॥ पारीतोषिञ्चतासुताम् । सो
मोयऊ । ता३मा२हा३वायिः । दधन्वा२योनर्यो अप्सु
वन्तरा२३४ऐही । सुषावा२३४सो । ममा३१उवा२३ ।
ए३ । द्रिभिरा ॥(१) स्वषावसोममद्रिभायिः । सुषावसो ।
मा३माद्रा३यिभायिः । नूनम्पुनानो अविभिःपरिस्रवा२३
४ऐषी । अदब्धा२३४ःस्व । सू । रभा३१उवा२३ । ए३ ।
तरभा ॥(२) आदब्धःसुरभिन्तराः । अदब्धःस्व । रा३
भायिन्ता३राः । सुतेचित्ताप्सुमदामो अन्धसा२३४ऐही ।
औण्तो२३४गो । भिह्व३आउवा२३ । ए३ । तरभा(३)

॥ १८ † ॥ [२२]

---

* ऊ० गा० १६प्र० १ख० ६मा० ।

† ऊ० गा० १६प्र० १ख० [illegible]मा० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ तृचात्मके तृतीय-सूक्ते

प्रथमा ।

१ २ ३ १ २ २ ३ ३ २ ३
असाविसोमोअरुषोवृषाहरी

१ २ ३ २ ३ १र २र
राजेवदस्मोअभिगाअचिक्रदत्।

२ २उ ३ १ २ ३ १ २ ३ १र
पुनानोवारमत्येष्यव्ययꣳश्येनो।

२र ३ १ २ ३ १ २
नयोनिंघृतवन्तमासदत्॥ १ *॥

"सोमः" "असावि" अभिषुतोऽभूत्। कीदृशः सोमः? "अरुषः" आरोचमानः, "वृषा" वर्षकः, "हरिः" हरितवर्णः; स च राजेव "दस्मः" दर्शनीयः सन् "गाः" उदकानि "अभि" लक्ष्य "अचिक्रदत्" शब्दं करोति स्व-रस-निर्मोक-समये, पश्चात् पुनानः "अव्ययम्" अविमयं "वारं" वालं दशापवित्रम् "अत्येषि" हे सोम! अतिक्रम्य गच्छसि। ततः "श्येनो न" श्येन इव "योनिं" स्वीयं स्थानं "घृतवन्तम्" उदकवन्तम् "आसदत्" प्रविशति॥

"अत्येषि"-"पर्येति"—इति पाठौ, "आसदन्"-"आसदम्" —इति च॥ १॥

---

* ऋ० सा० ६, २, २, ९ (२भा० १९१ पृ०) — ऋ० सं० ७, ३, ७, १।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीया।

३ १ २ ३ १ २ ३ १ २ १ २ ३
पर्जन्यः पिता महिषस्य पर्णिनो

१ २ ३ १ ३ २ ३ १ २
नाभा पृथिव्या गिरिषु क्षयन्दधे।

१ २ ३ १ २ ३ १३ ३ १ २ ३
स्वसार आपो अभि गा उदासर

२र २र ३ १ २ ३ २
न्सङ्ग्रावभिर्वसते वीते अध्वरे ॥ २ * ॥

यस्य "महिषस्य" महतः "पर्णिनः" पर्णवतः पतनवतो वा सोमस्य "पर्जन्यः" "पिता" जनकः "सः" सोमः "पृथिव्याः" † "नाभा" नाभौ नाभिस्थानीये ‡ हविर्द्धाने "गिरिषु" गिरि-सम्बन्धिषु ग्रावसु "क्षयं" निवासं "दधे" धारयति अभिषव-समये। तथा "स्वसारः" अङ्गुलयः "आपः" वसतीवर्यः ¶ "गाः" आगिरार्था: स्तुतयो वा § "अभि" आभिमुख्येन "उदासरन्" उद्गच्छन्ति गच्छन्तु, "वसते", "सम्" गच्छते च, "ग्रावभिः" साकम्। कुत्र? "वीते" कान्ते "अध्वरे" यज्ञे॥

"उदासरन्"–"उतासरन्"—इति पाठौ, "वीते"-वीथे"—इति च॥ २॥

---

* ऋ० वे० ७, ३, ७, २।

† 'इषिवाः समुत्पन्नः'—इति वि०।

‡ 'नाभा—नाभि-स्थानीयः'—इति वि०।

¶ 'अप्सु भास्वरूपः'—इति वि०।

§ 'गाः—सोमस्य रश्मयः'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ तृतीया।

३ १२ ३ १२ ३१ २ ३ १ २
कविर्वेधस्यापर्य्येषिमाहिन

३ १ २ ३ १ २ ३ १ २ ३ २
मत्यो न मृष्टो अभिवाजमर्षसि।

३ १ २ ३ १ २
अपसेधन्दुरितासोममृळ

३ १२ ३१ २ ३ २ ३ १ २
घृतावसानः परियासिनिर्णिजम्॥ ३ *॥ १३

हे "सोम!" "कविः" क्रान्तदर्शी सन् "वेधस्या" यागविधानेच्छया "माहिनं" महनीयं पवित्रं "पर्य्येषि" परिगच्छसि, पश्चात् "मृष्टः" प्रक्षालितः "अत्यो न" † अश्व इव "वाजं" ‡ सङ्ग्राममभि "अभ्यर्षसि"। सोम! "दुरिता" अस्मदीयानि दुरितानि "अपसेधन्" परिहरन् ¶ "नः" अस्मान् "मृड़" सुखय "घृतावसानः" घृतानि उदकानि वसानः आच्छादयन् "परि यासि" अभिगच्छसि। किन्तत्? "निर्णिजम्" पवित्रम्॥

"सोमनोमृड़घृता"-"सोममृडयघृतम्"—इति पाठौ॥३॥१३

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य दशमस्याध्यायस्य नवमः खण्डः॥ ९॥

---

* ऋ०वे० ७, ३, ७, १।

† 'अत्यः—अतीत्य गच्छति'—इति वि०।

‡ 'वाजम्—अन्नं सह पुरोडाशादिलक्षणम्'—इति वि०।

¶ 'अपसेधन्—एष इन्दौ (भू० आ०) अप्सुभिः स्वतः संवर्द्धति'—इति वि०।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीया ।

३ १ २ ३ १ २ ३ १ २ ३ १ २ ३

पर्जन्यःपितामहिषस्यपर्णिनो

१ २ ३ १ ३ २ ३ १ २

नाभापृथिव्यागिरिषुक्षयन्दधे ।

१ २ ३ १ २ ३ १उ ३ १ २ ३

स्वसारआपोअभिगाउदासर

२र २र ३ १ २ ३ २

न्त्सङ्ग्रावभिर्वसतेवीतेअध्वरे ॥ २ * ॥

यस्य "महिषस्य" महतः "पर्णिनः" पर्ण्णवतः पतनवतो वा सोमस्य "पर्जन्यः" "पिता" जनकः "सः" सोमः "पृथिव्याः" † "नाभा" नाभौ नाभिस्थानीये ‡ हविर्द्धाने "गिरिषु" गिरि-सम्बन्धिषु यावसु "क्षयं"निवासं "दधे"धारयति अभिषव-समये। तथा "स्वसारः" अङ्गुलयः "आपः" वसतीवर्य्यः ¶ "गाः" आगिरार्थाः स्तुतयो वा § "अभि" आभिमुख्येन "उदासरन्" उद्गच्छन्ति गच्छन्तु, "वसते", "सम्" गच्छते च, "ग्रावभिः" सा-कम्। कुत्र ? "वीते" कान्ते "अध्वरे" यज्ञे ॥

"उदासरन्"–"उतासरन्"—इति पाठौ, "वीते"-वीथे"—इति च ॥ २ ॥

---

* ऋ० वे० ७, ३, ७, २ ।

† 'पृथिव्याः समुत्पन्नः'—इति वि० ।

‡ 'नाभा—नाभि-स्थानीयः'—इति वि० ।

¶ 'वपुष्ठ भास्वरूपः'—इति वि० ।

§ 'गाः—सोमस्य रश्मयः'—इति वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ तृतीया।

३ १२ ३ १२ ३१ २ ३२

कविर्वेधस्या पर्येषि माहिन

२ ३ २ ३ १ २

मत्यो न मृष्टो अभि वाजमर्षसि।

१ २ ३ १ २

अपसेधन्दुरिता सोम नो मृड

३ १२ ३१ २ ३ १ २

घृता वसानः परि यासि निर्णिजम्॥ ३ *॥ १३

हे "सोम!" "कविः" क्रान्तदर्शी सन् "वेधस्या" यागविधानेच्छया "माहिनं" महनीयं पवित्रं "पर्येषि" परिगच्छसि, पश्चात् "मृष्टः" प्रक्षालितः "अत्यो न"† अश्व इव "वाजं" सङ्ग्रामम्‡ "अभ्यर्षसि"। सोम! "दुरिता" अस्मदीयानि दुरितानि "अपसेधन्" परिहरन्¶ "नः" अस्मान् "मृड़" सुखय "घृता वसानः" घृतानि उदकानि वसानः आच्छादयन् "परि यासि" अभिगच्छसि। किन्तत्? "निर्णिजम्" पवित्रम्॥

"सोमनो मृडघृता"-"सोमम्मृडयघृतम्"—इति पाठौ॥३॥ १३

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य दशमस्याध्यायस्य नवमः खण्डः॥ ९॥

---

* ऋ०वे० ७, २, ७, २।

† 'अत्यः—अतीत्य गच्छति'—इति वि०।

‡ 'वाजम्—अन्नं चरुपुरोडाशादिलक्षणम्'—इति वि०।

¶ 'अपसेधन्—एष इहो (भ्रा० आ०) अस्मभिः कृतः संवर्द्धति'—इति वि०।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२र र २ र र
॥ महासामराजम् ॥ हाउहोवा३हायि । असावि

५ १ २ ४ १र १ १ १ १ १ २र र
सोमे।३आ । रुषो३वा३ । षाहरा२३४५यिः । राजेव

र ५ १ २ ४ २ ३ १ १ १ १ २ र
दस्मो३आ । भिगा३ । आ३ । चिक्रदा२३४५त् । पुना

र र ५ १ २ ५ २ ५ १ १ १ १ २र
नोवारा३मा । जिया३यिषी३ । अव्यया२३४५म् । द्रो

र र १ २ ४ २र २
नोनयोनी३घा । तवा३न्ता३म् । आसदा३दाउ ॥(१)

२ २ ५ १ २ ४ २ ३ १ १ १ १
पर्ज्जन्यःपिता३मा । हिषा३स्या३ । पर्णिना २ ३ ४ ५ः ।

२र र र ५ १ र ४ २ ३ १ १ १ १
नाभापृथिव्या३गायि । रिषू३ता३ । यन्दधा२३४५यि ।

२ र र र १ र ४ २र ३ १ १ १ १
स्वसारआयो३आ । भिगा३ऊ३त् । आसरा२३४५न् ।

२ र १ २र ४ २
सङ्गावभिर्वा३सा । तेवा३यिते३ । अध्वरा३२उ ॥(२)

र र ५ १ २ ४ २र ३ १ १ १ १ २ र
कविर्वेधस्या३पा । रिया३यिषी३माहिना२३४५म् । अत्यो

र ५ १ २ ४ २ ३ १ १ १ १ र र
नम्रष्टो३आ । भिवा३जा३म् । अर्षसा२३४५यि । अप

१ १र ४ २र ३ १ १ १ १ २र
सेधन्दू३रायि । तासो३मा३ । नोमृडा२३४५ । हाउ



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



द्यौवा३द्यायि। घृतावसाना३ःपा। रिया३सौ३। निर्जा३मा३उवा२३४५(३) ॥ ८ * ॥ [१]

॥ द्विरभ्यासाल्लौशम् ॥ असाविसोमो अरुषो वृषा वृषा। हरायिः। हरा२३४यिः। राजे३१२३४। वदग्मो अभिगा अचि। क्रदात्क्रदात्। पुना३१२३४। नोवार मत्येष्व। व्ययांव्ययाम्। श्येनो३१२३४। नयोनिघृत वं। नमा३मा५द्वाइ५ईत् ॥(१) पर्ज्जन्यःपितामहिषस्य प। र्णिना२३४५ः। नाभा३१२३४। पृथिव्यागिरिषुत्तयम्। दधायिदधायि। स्वसा३१२३४। रआपो अगाउद्रा। सरान्सरान्। सङ्गा३१२३४। वश्निर्वसतेवो। ते आ३ध्वा पूरा३५ईयि ॥(२) कविर्वेधस्यापरियेषिमा। ह्निनाम्। ह्निना२३४५म्। अत्यो३१२३४। नमृष्टो अभिवाजम।

---

* छ० गा० ५प्र० २ख० ८सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ २ १ २ ३ २ २र र र
षसायिषसायि। अपा३१२३४। मेधन्दुरितासोमनः।
१ २ १ २ ३ २ २र २ ३ २
मृडामृडा। घृता३१२३४। वसानःपरिया। मिना३
४
यिणा५यिजा६५६म् (३) ॥ २ * ॥ [२]

२ र १ २र १
॥ ऐडमायास्यम् ॥ असावायिसो२३। सोअरुषा२
२ २र २र र १ २र २
३ः। ए३। वृषाहरिरे३। राजेवादा२३। स्मोअभा
२ २ २ र १ २ १
यिगा२३ः। ए३। अचिक्रदद्दे३। पुनानोवा२३। रमता
२ २ २र र १ २
यिये२३। ए३। षिअव्ययमे३। श्येनोनायो२३। नि
१ २ २र २ १
क्षृतावा२३। ए३। तमासददे३४३ ॥(१) पर्ज्जन्याःपा२
२र १ २ २ २र र
३यि। तामश्वायिषा२३। ए३। स्यपर्णिनए३। नाभा
१ २र १ २
पार्था२३यि। व्यागिरायिषू२३। ए३। त्तयन्दधए३।
२ र १ २र १ २ २ र
स्वसाराआ२३। पोअभायिगा२ ३ः। ए३। उदासरन्ने
२ र ३ २ १ २
३। सङ्गवाभा२३यिः। वसतायिवा२३यि। ए३। पो

* ऊ० गा० ८प्र० १ख० २मा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अभायिगा२३:। ए३। उदासरम्ने३। सङ्क्रावाभार३ यिः। वसतायिबा२३यि। ए३। तेअध्वरए३४३॥(२) कविर्वायिधा२३। स्यापरायिये२३। ए३। षिमाहिम मे३। अत्योनामा२३। ष्टोअभायिवा२३। ए३। अ मर्षस्तिए३। अपसायिधा२३न्। दुरितासार३। ए३। मनोम्तृव२३। घृतावासा२३। नःपरायियार३। ए३। सिनिर्णिजमे३४३। ओ२३४५ई। डा(३)॥४*॥ [३]

॥ वासिष्ठम् ॥ हायि। उङ्वायि। असा३४औहो वा। विसो। सो३अरु। षोवृषाहरायिः। राजे३४ औहोवा। वदा। स्मो३अभि। गाअचिक्रदात्। पुना ३४औहोवा। नोवा। रा३मति। एषिअव्ययाम्। श्ये नो३४औहोवा। नयो। निघृत। व। तमा३सा५दाई५

* ऊ० गा० १७प्र० २ख० ४सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



३ २ ३र ४र ५ १ २ १
६त् ॥(१) पञ्जा३४औहोवा। न्यःपायि। ता ३ मह्वि।
१ २ ४ ५ ३र २ ३र ४र ५ १ २ १
षस्यपर्णिनाः। नाभा३४औहोवा। पृथायि। व्या३गि
२ ३ ४ ५ ३ २ ३र ४र ५ १ २
रि। पृक्षयन्दधायि। स्वसा३४औहोवा। रश्मा। पो
१ २ ३ ४र ५ ३ २ ३र ४र ५ १
३अभि। गाउदासरान्। सङ्गा३४औहोवा। वभायिः।
२ १ र २ ३र २ ४ ३ २ ३र ४र
वसते। वौ। तेआ३ध्वा५राई५६यि ॥(२) कवा३४औहो
५ १र २ १ २र ३ ४र ५ ३ २
वा। वेधा। स्या३परि। पृषिमाह्विनाम्। अत्यो ३ ४
३र ४र ५ १ २ १ २र ३ ४ ५ ३ २
औहोवा। नमा। ष्टो३अभि। वाजमर्षसायि। अषा
३र ४र ५ १र २ १ र २र ३ ४र ५ २
३४औहोवा। सेधान्। दुरिता। सोमनोम्टडा। ह्वा
३ २ ३ २ ३र ४र ५ १ २ १
यि। उक्कवायि। घृता३४औहोवा। वसा। नःपरि।
२ ३ २ ४
या। मिना३यिर्णा५यिजा६५६म्(३) ॥ १७ * ॥ [४]

२ १ २ १
॥ सौमानानिषेधम् ॥ असो। वाह्वायि। वायि
२ र २र १ १ र र
सोमोअरूषो। वृषाहारा२यिः। राजेवदस्मोअभिगाः।

* ऊ० गा० २२प्र० २ख० १७मा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ १ १ २ १ २ . २ ४र
अचिक्कादा२३त्। पू२३ना। नो२३वा३४। रमतिये
५ २ २ १ २ १ २ ३
षिञ्च। व्या३याम्। ध्या२३यिनो। ना२३यो३४। नि
४ ५ ३ २ ४ २ १ २
ष्कृतव। तमा३स्रा५दा६५६त्॥(१) पञ्जौ। वाद्दायि।
१ र २ १ १ र र
न्या:पितामहिषा। स्यपर्णायिना२ः। नाभापृथिव्यागि
२ १ १ २ १ २
रिषू। चयन्दाधा२३यि। स्वा२३सा। रा२३आ३४
३र४ ३ ४र ५र २ २ १ २ १ २
पोअभिगाउद्दा। सा३रान्। सा२३ग्रा। वा२३भा३४
३ ४र५र ३र २ ४ २ १
यिः। वसतेषो। तेआ३ध्वा५रा६५६यि॥(२) कषो।
२ १ र २ र १
वाद्दायि। वायिधस्यापरियायि। षिमाद्दायिना२म्।
१ र र २ १ १ २
आत्यौनम्तृष्टोअभिवा। जमर्षासा२३यि। आ२३पा।
१ २ ३ ४र र ५ २ २ १
सा२३यिधा३४न्। दुरितासामनः। मा३र्डी। घा२३
२ १ २ ३ ४ ५र ३ २ ४
र्ता। वा२३सा३४। नःपरिया। मिना३यिर्मा५यिजा
६५६(३)॥ २० *॥ [५] १३

* क० गा० २३प० २प्र० २०मा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ दशमे खण्डे —

प्रगाथात्मके प्रथम-सूक्ते,

प्रथमा ।

१ २ ३ २ ३ १र २र
आयन्तइव सूर्य्यं विश्वेदिन्द्रस्यभक्षत ।
१ २ २ १र २र ३ १ २ ३ १ २ ३ १र २र
वसूनिजातोजनिमान्योजसाप्रतिभागन्नदीधिमः ॥ १* ॥

हे अस्मदीया जनाः ! "आयन्त इव" सूर्य्यं यथा समाश्रिता रश्मयः सूर्य्यं भजन्ते तथा "इन्द्रस्य" "विश्वेत्" विश्वान्येव धनानि "भक्षत" भजत । "वसुजातः" प्रादुर्भूत इन्द्रः यानि "वसूनि" धनानि "ओजसा" बलेन "जनिमा" जनिष्यमाणानि करोति अतो "भागं न" पित्र्यं भागमिव तानि धनानि "प्रति दीधिमः" प्रतिधारयेम ॥

"जातोजनिमानि"-"जातजनिमानि"—इति पाठौ ॥ १

अथ द्वितीया ।

१ २ ३ १र २र ३ १र २र ३ १ २
अलर्षि†रातिंवसुदामुपस्तुहिभद्राइन्द्रस्यरातयः ।
१ २ ३ १ २ ३ १र २र ३ १ २ ३ १ २ ३ १ २
यो अस्यकामंविधतोनरोषतिमनोदानायचोदयन् ॥२‡॥ १४

हे स्तोतः ! "अलर्षिरातिम्" अपापक-दानम् अपापिष्ठस्य दातारइत्यर्थः [अलर्षि-पद-समानार्थमनर्श-पदं यास्केन व्याख्या-

* छ० व्या० ३, २, ३, ५ (२भा० ५५१ पृ०) = ऋ० वे० ७, ३, ३, ४ ।
† "अलर्षि"--इति क० पु० पाठः ।
‡ ऋ०



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



तम्—"अनर्शरातिमनश्लील-दानमश्लीलं पापकम्"-इति (निरु० नै० ६,२३ ) ] "वसुदां" धनस्य दातारमिन्द्रम् "उप स्तुहि"* यतः "इन्द्रस्य" "रातयः" दानानि "भद्रा" कल्याणानि महदैश्वर्यकारीणीत्यर्थः। "यः" इन्द्रः स्वकीयं "मनः" "दानाय" अभीष्ट-प्रदानाय "चोदयन्" प्रेरयन् "विश्वतः" परिचरतः "अस्य" स्तोतुः "कामम्" इच्छां "न रोषति" न हिनस्ति। तमिन्द्रमुपस्तुहीति सम्बन्धः॥

"अलर्षिरातिम्"—इति छन्दोगाः पठन्ति, "अनर्शरातिम्"—इति बह्वृचाः; "योअस्य"-"सोअस्य"—इति च॥ २॥ १४

॥ आयन्तीयम् ॥ आयन्तइवसू१रायाम्। विश्वा२ यिदिद्रा२। स्वभा२क्षाता। वामूनिजातीजनिमा। नियोजा१सा२। प्रतिभागन्नदी२धिमः। प्रा२३ती। भागान्ना३दा। छम्। धिमा३ः। ओ२३४वा॥(१) प्रतिभागन्नदा१यिधायिमाः। प्रता२यि। भागा२म्। नदा२यिधायिमाः। आलर्षिरातिम्वसदाम्। उपास्त१

---

* 'उपस्तुहि—समीपे स्थित्वा स्तुहि'—इति वि०।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ १र २ र १ २ १ २ १ २
चायि। भद्राइन्द्रस्यरातयः। भा२३द्राः। इन्द्रास्या३

२ १ ३ २ १ ५ २ र
रा। ऊम्। तया३ः। औ२३४वा॥(२) भद्राइन्द्रस्य

२ १ १ १ १
रा१तायाः। भद्रा२इन्द्रा२। स्यरा२तायाः। याञ्च

२ र १ २ १ २ ११ र १र र २ र १
स्यकामम्बिधतः। नरोषा१ता२यि। मनोदानायचोद

२ १ २ १र २ २ १ ३ २
यन्। मा२३नाः। दानाया ३ चो। ऊम्। दया३।

१ ५ ३ १ १ १ १
औ२३४वा। हे२३४५(३)॥ ९ *॥ [१]

२र २र १ २ १
॥ निषेधम ॥ आयन्तइवा३सूरियाम्। विश्वायिन्द्रा।

२ १ १ २ १ १ ४ ५ २ ३
स्यभक्षता२। इहा३। वासू३नायिजा। हाहौ२ ३ ४

५ १ २ १ २ र १ २ १ २ १ २
हा। तोजनिमा। नियोजा२३सा। इहा३। प्राता

४ ५ २ २ ५ ३ २ ४
३यिभागाम्। हाहो२३४हा। नदा३यिधा५यिमाई५

३ १ १ १ १
६ः। हे२३४५(३)॥ २ †॥ [२] १४

---

* ऊ० गा० ५प्र० २च० ९सा०।

† ऊ० गा० १प्र० २च० २सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ प्रगाथात्मके द्वितीय-सूक्ते--

प्रथमा।

१२ ३१२ ३१२ ३१२
यतइन्द्रभयामहेततोनोअभयङ्कृधि।
१२ ३१उ ३१२१ २२२उ ३१२ २८
मघवञ्छग्धितवतन्नऊतयेविद्विषोविमृधोजहि ॥१*॥

हे "इन्द्र!" "यतः" हिंसकान् "भयामहे" वयं, ततः "नः" अस्मभ्यम् "अभयं" "कृधि" कुरु। हे "मघवन्" धनवन्निन्द्र! "नः" अस्मानुद्दिश्य "तत्" तस्यै "तव ऊतये" त्वत्कर्त्तृकायै रक्षायै "शग्धि" शक्तो भव। किञ्च "वि द्विषः" अस्मद्द्वेष्टॄन् विजहि; "वि मृधः" अस्मद्धिंसकान् विजहि॥

"ऊतये"-"ऊतिभिः"—इति पाठौ॥१॥

अथ द्वितीया।

२र २र ३१२ ३२उ ३१२ २२
त्वꣳहिराधसस्पतेराधसोमहःक्षयस्यासिविधर्त्ता।
१२ ३१२ २१२
तन्त्वावयम्मघवन्निन्द्रगिर्वणःसुतावन्तोहवामहे ॥२†॥१५

हे "राधसस्पते" धनस्य स्वामिन्! "त्वं हि" त्वं खलु "महः" महतः "राधसः" धनस्य "क्षयस्य" गृहस्य च ‡

---

* ऋ० सं० ३, २, ४, २ (१भा० ५६४ पृ०) = ऋ० वे० ६. ४. ३१, ३।

† ऋ० वे० ६, ४, ३१, ४।

‡ 'क्षयो निवासः, तस्य'--इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"विधर्त्ता असि हि" अस्मभ्यं दातुं धारको भवसि खलु। हे "गिर्वणः" गीर्भिर्वननीय! "मघवन्" धनवन्निन्द्र! "तं" तादृशं "त्वा" त्वाम् "वयं" "सुतावन्तः" अभिषुत-सोमाः "हवामहे" आह्वयामः।

"राधसस्पते"-"राधस्पते"—इति पाठौ, "विधर्त्ता"-"विधर्त्ते"—इति च॥ २॥ १५

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य दशमस्याध्यायस्य
दशमः खण्डः *॥ १०॥

१ २ १ २ २ १ २ २ २
॥ समन्तम् ॥ यतइन्द्रभयामहायि। ततोनोआभ

१ १ २ १ २
यङ्कृधायि। मघवा२३ङ्क्षा। ग्धायितवतल्। नऊतायाः।

२ २ ३२ २ १ २ १ २ २
औहो३४वाहायि। वि। द्वायिषो२३वी३। होवा३हा

२ १२ २ १ २२१ २२
३हायि। न्मृधोजा१२३हा३४३यि॥(१) विद्विषोविम्मृधोज

१ २ २१२ २
हायि। विद्विषोवायिम्मृधोजहायि। तुव७हा२३यिरा।

१ २ ३२ १ ३२ २ १ २
धसोमाहा। औहो३४वाहायिच। यास्या२३सी३।

---

* 'उक्तो माध्यन्दिनः पवमानः नवमभवः। वामदेव्यं मैत्रावरुणं साम, आपन्तीयं मध्यसाम, गायत मच्छावाकं साम च'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



हौवा३हायि। विधार२३र्त्ता३४३ ॥(१) त्वयस्यासीविधर्त्ता। तन्त्वावा२३याम्। माघवन्नि। द्रगायिर्वाणा। औहो ३४वाहायि। सु। तावार२३न्ता३। हौवा३हायि। हु वामा२३हा३४३यि। ओ२३४५ई। डा(३) ॥ १०* ॥ [१] १५

अथैकादश-खण्डे†—

त्वंसोमेति-तृचात्मकं प्रथमं सूक्तम्‡,

तत्र प्रथमा।

त्वꣳसोमासिधारयुर्म्मन्द्र ओजिष्ठो अध्वरे।
पवस्वमꣳहयद्रयिः ॥ १¶ ॥

हे "सोम!" अभिषूयमाण-पवमान! "मन्द्रः" मादयितृतमः "ओजिष्ठः" ओजस्वितमः त्वम् "अध्वरे" हिंसा-रहिते ऽस्मदीये यज्ञे "धारयुः" अभिपव-धारा-कामः "असि" भवसि।

---

* ऊ० गा० ५प्र० २ष्म० १०सा०।

† 'इदानीमार्भवः पवमानः'—इति वि०।

‡ 'त्वं सोमासि धारयुरिति त्र्यृचस्तत्र प्रष्टनोभि सामानि त्राष्यणोमार्षाणि'—इति वि०।

¶ ऋ० वे० ७, २, १३ १।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



ततः "त्वं" "मंहयद्रयिः" स्तोतृभ्यः प्रदीयमान-धनः सन्*
"पवस्व" द्रोणकलशे ग्रहादिषु दशापवित्रेण पूतो भव [ यद्वा,
"धारयुः" तदर्थं भाष्यत इति मत्वर्थीयो युस् ]। हे सोम!
त्वं धारावानसि ततः पवस्वेति सम्बन्धः ॥ १ ॥

अथ द्वितीया।

२ ९ २ ३ १ २ ३ १ २ ३ १ २
त्वꣳसुतोमदिन्तमोदधन्वान्मत्सरिन्तमः।
१ ९ २ १र २र
इन्दुःसत्राजिदस्तृतः ॥ २† ॥

हे सोम! "सुतः" अभिषुतः "त्वं" "मदिन्तमः" अतिशयेन
मदयुक्तोऽसि। कीदृशस्त्वम्? "दधन्वान्" यज्ञस्य धारकः,
"मत्सरिन्तमः" अतिशयेन मदकारी,‡ "इन्दुः" दीप्तः, "सत्रा-
जित्" बहूनां जेता,¶ "अस्तृतः" केनाप्यहिंसितः ॥

"मदिन्तमः"-"नृमादनः"—इति पाठौ, "इन्दुःसत्राजिद-
स्तृतः"—"इन्द्रायसूरिरन्धसा"—इति च ॥ २ ॥

अथ तृतीया।

१ २ ३ १र २र ३क२र ३ १ २
त्वꣳसुष्वाणोअद्रिभिरभ्यर्षकनिक्रदत्।
९ २ ३ २ ३ १ २
द्युमन्तꣳशुष्ममाभर ॥ ३ § ॥ १६

---

* 'यद्यपि मंहतिः पूजार्थः तथाप्यत्र लाभार्थो द्रष्टव्यः'—इति वि०।

† ऋ० वे० ७, २, १२, २।

‡ 'मत्सरिन्तमः—अत्तणीयतमः—इति वि०।

¶ 'सत्राजित्—सदा जेता अथवा सहजेता'—इति वि०।

§ ऋ० वे० ७, २, १२, ३।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



हे "पवमान" सोम! "अद्रिभिः" ग्रावभिः "सुष्वाणः" सुन्वानः अभिषूयमाणस्त्वं "कनिक्रदन्" भृशं शब्दं कुर्वन् "अभ्यर्ष" कलशं पात्राणि चाभिगच्छ। किञ्च "द्युमन्तं" दीप्तियुक्तं "शुष्मं" शत्रूणां शोधकं बलं वा "आभर"* ॥

"आभर"-"उत्तमम्"—इति पाठौ ॥ ३ ॥ १६

॥ आश्वसूक्तम् ॥ आ३औ२हो४वा५हायि। तुवꣳसोमा। सिधा। रयुः। ऐहीयैहो१। मान्द्रओजिष्ठोआध्वरे। ऐहीयैहो१। आ२यि। पावा२स्वामा२। हयत्। रा२या२३४औहोवा ॥(१) आऔहोवाहायि। तुवꣳसुता:। महायि। तमः। ऐहीयैहो१। दाधन्वान्मत्स रायिन्तमः। ऐहीयैहो१। आ२यि। आयिन्दू२:सा चा२। जिद। स्तार२त्ता२३४औहोवा ॥(२) आऔ होवाहायि। तुवꣳसुष्वा। णोआ। द्रिभिः। ऐहीयै हो१। आभियर्षकनायिक्रदत्। ऐहीयैहो१। आ२

* स्वर्विदमिति प्रतीक-ग्रहणं स्वर्गस्य वेत्तारमिति तद्व्याख्यानञ्च विवरणे प्रामादिकं इव उपलक्ष्यते।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ १ १२ ३ ५२ २
यि। द्यूमा२न्नाष्ठ२। क्षमा। भा२२रा२३४औहोवा।
१ १ २ २ ३ १ १ १ १
भ्रुक्आऊता२३४५:(३) ॥ ११* ॥ [१]

३ ४ ५२ २ २ २ ३ ५
॥ प्राम्भदम्॥ तुव७सोमासिऐ। होऐहो२३४या।
१२ १ ५ १ २ २ १
धारयुरै२हो३या। मन्द्रओजिष्ठोअध्वरऐ२होऐ२हो३
२ १ २ २ १ ५ ४
या। प्रावास्वामा३१२३। हयो२३४वा। रा५योहृदा
३ ४ ५ २ २ २ ३ ५ १
यि ॥(१) तुव७सुतोमऐ। होऐहो२३४या। दिन्तमऐ
१ ऽ २ २ २ १ ऽ २
२होऐ२हो३या। दधन्वान्मत्सरिन्तमऐ२होऐ२हो३या।
१ २ २ १ ५ ४ ५
आयिन्दू:साचा३१२३। जिदो२३४वा। स्वा५चोहृदा
३ ४ ५ २ २ २ ३ ५ १
यि ॥(२) तुव७सुष्वाणऐ। होऐहो२३४या। अद्रिभि
१ २ १ १ ऽ २
रै२होऐ२हो३या। अभियर्षकनिक्रदऐ२होऐ२हो३या।
१ २ २ १ ५ ४ ५
द्यूमान्ना७ष्ठ ३ १ २ ३। क्षमो २ ३ ४ वा। भा५रोहृदा
वि(३) ॥ १२† ॥ [२]

---

* ऊ० गा० ५प्र० २अ० ११सा०।

† ऊ० गा० ५प्र० २अ० १२सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२१ ४र र ५
॥ द्वावसुनिधनम् ॥ तुवꣳसोर३मासिधारयुर्हाउ।

१ २र र १ २ १ २ २ १
मान्द्रओजि। ष्ठोआध्वा१रा२३यि। होवा३हायि। प

२ १ २ २ १ ३ ५र
वाखा१मार३। होवा३हा। हयत्। रा२या२३४औ

र २१ ४र र ५ १ २र
होवा ॥(१) तुवꣳमूर३तोमदिन्तमोहाउ। दधन्वान्मत्स

१ २ १ २ २ १ २
रायिन्ता१मार३ः। होवा३हायि। इन्दूःसा१त्रा२३।

१ १ २ १ ३ ५र र २
होवा३हा। जिद। स्तार३त्तां२३४औ औहोवा ॥(२) तु

१ ४र र ५ १ २ १ २
वꣳसूर३षाणोअद्रिभिर्हाउ। अभियर्ष। कनायिक्रा१

१ २ २ १ २ १ २
दार३तु। होवा३हायि। द्युमान्ता१ꣳसूर२३। होवा

२ १र ३ ५र र २ २र १
३हा। धमसा। भा२रा२३४औहोवा। ए३। दाव

२११११
सू२३४५(३) ॥ १३* ॥ [३]

१ र २र १
॥ प्रतीचीनेडङ्काश्रीतम् ॥ त्वꣳसोमासि। धा२रयूः।

२र र १ ७ २र २ १
मान्द्रओजि। ष्ठोआध्वरा२३४यि। हाहोयि। पवस्व

* ऊ० गा० ५.प्र० २षा० १३सा०।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



माꣳहा३यात्। रयायिः। औ३होवा॥(१) त्वꣳसु तोम। दा२यिन्तमाः। दाधन्वान्म। त्सरायिन्तमा२ ३४ः। हाहोयि। इन्दुःसत्राजी३दा। स्तृता। औ३ होवा॥(२) त्वꣳसुषाणः। आ२द्रिभायिः। आभियषी कनायिक्रदा२३४त्। हाहोयि। द्युमन्तꣳशूष्मा३मा। भरा। औ३होवा। ई३डा(३)॥ १४ *॥ [४]

॥ हाविष्कृतम्॥ त्वꣳसोमासिधाहाउरायूः। मन्द्र ओजायि। ष्ठोआध्वा२३रायि। पवा२हो१। स्वा२३ मा। हयत्। रा२या२३४औहोवा॥(१) त्वꣳसुतोम दाहाउतामाः। दधन्वान्मा। त्सरिन्ता२३माः। इन्दू २र्हो१यि। सा२३त्रा। जि२। स्ता२र्त्ता२३४औहो वा॥(२) त्वꣳसुषाणआहाउद्रायिभायिः। अभियर्षा।

---

* ऊ० गा० ५प्र० २ख० १४मा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ २ १र
कनिक्रा२३दात्। द्युमा२हो१। ता२३ऽश्नू। य्यमा।

२ ५र ५र २ १ ३ १ १ १ १
भा२रा३४औहोवा। हविष्कृते२३४५(३) ॥१५*॥[५]१६

अथ त्वचात्मके द्वितीय-सूक्ते—

प्रथमा।

१ २ ३ १ २ ३ २ ३ १ २ ३ १ २
पवस्वदेववीतयइन्दोधाराभिरोजसा।

२ ३ २ १ २
आकलशम्मधुमान्त्सोमनःसदः ॥ १† ॥

हे "इन्दो" सोम! "देववीतये" देवानां भक्षणाय "ओजसा" बलेन "धाराभिः" आत्मीयाभिः "पवस्व" क्षर। हे "सोम!" "मधुमान्" मदकर-रसवान् त्वं "नः" अस्मदीयं "कलशं" द्रोणाभिधानम् "आसद" आसीद [ सदेर्लुङि रूपम् ] ॥ १ ॥

अथ द्वितीया।

१ २ ३ १ २ ३ २ ३ २ ३ १ २
तवद्रप्साउदप्रुतइन्द्रम्मदायवावृधुः।

२ ३ १ २ ३ १ २ ३ १ २
त्वान्देवासोअमृतायकम्पपुः ॥ २‡ ॥

---

* ऊ० गा० ५प्र० २ख० १५सा०।

† छ० आ० ६, २, ३, ६ (२भा० २१३ ४० ) = ऋ० वे० ७, ५, १०, २।

‡ ऋ० वे० ७, ५, १०, २।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"उद्प्रुतः" वसतीवर्याख्यमुदकं प्रति गच्छन्तः* [यद्वा, उदकस्य निर्गमयितारः] "तव" स्वभूताः "द्रप्साः" द्रुतगामिनो रसाः† "मदाय" मदार्थम् इन्द्रम् "वावृधुः" वर्द्धयन्ति । ततः "देवासः" देवा इन्द्रादयः "कं" सुखकरं‡ "त्वाम्" "अमृताय" अमरणार्थं "पपुः" पिबन्ति ॥ २ ॥

अथ तृतीया ।

१ २ ३ २ २ ३ २
आनःसुतासइन्दवःपुनानाधावतारयिम् ।
३ १ २ ३ १ २
वृष्टिद्यावोरीत्यापःस्वर्विदः ॥ ३¶ ॥ १७

हे "सुतासः" अभिषूयमाणाः ! हे "इन्दवः" दीप्ताः पात्रेषु चरन्तो वा "रीत्यापः" यैः पृथिवीं प्रति स्रवणशीला आपः, तादृशा हे सोमाः ! "पुनानाः" पूयमानाः यूयं "नः" अस्मभ्यं "रयिम्"§ "आ धावत" आगमयत । कीदृशाः ? "वृष्टिद्यावः"‖ वृष्टिमभि द्यौर्यैः क्रियते, वृष्ट्यभिमुख-द्युलोकवन्तः "स्वर्विदः" सर्वस्य लम्भकाः** ॥ ३ ॥ १७

---

* 'उद्प्रुतः—उदकेन प्लाविताः'—इति वि० ।

† 'द्रप्साः—द्रव्यभूताः सोमाः'—इति वि० ।

‡ 'कं—जातिभूतम् अथवा कम् उदकभूतम्—इति वि० ।

¶ ऋ० वे० ७, ५, १०, ४ ।

§ 'रयिं—सोमाख्यं धनम्'—इति वि० ।

‖ 'वृष्टिद्यावोरीत्यापः—यथा द्युलोके भवान् वृष्टिः रीतिभिः सङ्घातः'—इत्यादि वि० ।

** 'स्वर्विदः—स्वर्गस्य वेत्तारः'—इति वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



॥ वैश्वमनसम् ॥ पवस्वदेववीता३यायि। आयिन्दो धारा२। भिरो३४५। जसआकलशम्मधुमान्त्सो२३४५। मना२ः। सादा२आ२३४औहोवा ॥(१) तवद्रप्सोउदप्रु३ताः। आयिन्द्रम्मदा२। यवा३४५। वृधुरात्वान्देवा सोअमृता२३४५। यका२म्। पापूररा२३४औहोवा ॥(२) आनःसुतासइन्दा३वाः। पूनानाधा२। वता३४५। रयि सावृष्टिद्यावारीत्यापा२३४५ः। सुवा२ः। वोयिदा२आर आर२३४औहोवा। ऊ२३४५(३) ॥ १७* ॥ [१]

॥ सुज्ञानम् ॥ पवस्वदा। ववीतयायि। इन्दोधा रा२। भिरोजसा। आकलाशा२म्। मधु। मार न्त्सो२३४औहोवा। मनःसदए३ ॥(१) तवद्रप्साः। उद प्रुताः। इन्द्रम्मादा२यिवावृधः। तुवान्दायिवा२। सा

* ऊ० गा० ५प्र० २ख० १७सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ २ ५र र १ २ २र
अ। मा२र्त्ता२३४औहोवा। तकम्यपुरे३ ॥(२) आनः

१ २र १ र १
सुता। सइन्दवाः। पुनानाधा२। बतारयायियिम्।

२ १ २ १ ३ ५र र १ २
वृष्टिद्यावा२ः। रीति। आ२पा२३४औहोवा। सुवर्वि

१ ११११
दए३उपा२३४५(३) ॥ १८* ॥ [२] १७

अथ तृचात्मके तृतीय-सूक्ते —

प्रथमा।

१ ३ १ १ ३ १र २र ३ १ २ ३ १ २
परित्यꣳहर्यतꣳहरिम्बभ्रुम्पुनन्तिवारेण।

२ ३ २उ ३ २उ ३ १ २ ३ १र २र
योदेवान्विश्वाꣳइत्परिमदेनसहगच्छति ॥ १† ॥

"हर्यतं" सर्वैः स्पृहणीयं "हरिं" हरितवर्णं "बभ्रुं" बभ्रुवर्णं च "त्यं" तं सोमं "वारेण" वालेन पवित्रेण "परि पुनन्ति" परिशोधयन्ति "यः" सोमः "विश्वान्" एतत्सर्वानिन्द्रादीन् देवान् अनेन "मदेन" मादकेन रसेन "सह" "परि गच्छति" ॥ १ ॥

---

* ऊ० गा० ११प्र० २ख० १९सा०।

† ऋ० सा० ६, २, १, ८ (२भा० १६७पृ०) = पुनरिदेव ८, २, ८, ३ = ऋ० वे० ९, ४, २४, १।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीया।

२उ ३ १२ ३ १२ ३ १ २
द्विर्यम्पञ्चस्वयशसꣳसखायोअद्रिसꣳहतम्।
३ १र २र ३ २ २ ३ १२ ३ १ २
प्रियमिन्द्रस्यकाम्यम्प्रस्नापयन्तऊर्म्मयः॥ २* ॥

"द्विः पञ्च"† दश-सङ्ख्याकाः "सखायः" समान-ख्याना अङ्गुलयः ‡ "स्वयशसं" स्वभूत-यशस्कम् ¶ "अद्रिसंहतम्" ग्रावभिरभिषुतम् "इन्द्रस्य प्रियं" "काम्यं" सर्वैः काम्यमानम् "ऊर्मयः" § [ द्वितीयैकवचने प्रथमा-बहुवचनम् ] ऊर्मिं प्रभूततरं "यं" सोमं "प्र स्नापयन्ते" वसतीवरीभिः प्रकर्षेण सेवयन्ति [ यद्वा, ऊर्मय इत्यङ्गुलि-विशेषणं प्रभूता इति ]; तं सोमं पुनन्तीति पूर्वेण सम्बन्धः॥

"सखायः"-"स्वसारः"—इति पाठो, "प्रस्नापयन्तऊर्मयः"-"प्रस्नापयन्त्यूर्मिणम्"—इति च॥ २॥

अथ तृतीया।

१ २ ३ १ २ ३ १र २र
इन्द्रायसोमपातवेवृत्रघ्नेपरिषिच्यसे।
१ २ ३ १ २ ३ १ २ ३ १२
नरेचदक्षिणावतेवीरायसदनासदे॥ ३ ‖ ॥ १८

* ऋ० वे० ७, ४, १०, ६।

† 'द्विः—द्विःकृत्य। यं सोमं। पञ्च ऋत्विजः'—इति वि०।

‡ 'सखायः—ऋत्विजः'—इति वि०।

¶ 'स्वयशसं—स्वयशसा सम्पन्नम्'—इति वि०।

§ 'ऊर्मयः—उदक-सङ्घाताः'—इति वि०।

‖ ऋ० वे० ७, ४, २४, ४।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



हे "सोम !" "वृत्रघ्ने" वृत्रस्य हन्त्रे "इन्द्राय" [ षष्ठ्यर्थे चतुर्थी ] इन्द्रस्य "पातवे" पानार्थं "परिषिच्यसे" परितः पात्रेषु सिच्यसे वसतीवरीभिर्वा। किञ्च "दक्षिणावते" ऋत्विग्भ्यो दक्षिणा-दानेन तद्वते, "वीराय" विक्रान्तायेन्द्राय हवींषि दातुं "सदनासदे" यज्ञ-यज्ञे सीदते,* "नरे"† मनुष्याय यजमानाय तस्मै फल-प्रदानार्थं परिषिच्यसे ॥

"वीराय"-"देवाय"—इति पाठौ ॥ ३ ॥ १८

॥ गौरीवितम् ‡ ॥ परि। त्यꣳहा३। र्यंतꣳहरायिम्। बभ्रुम्पुनन्तिवारेणार ३। योदेवान्वा३१२३यि। स्वाꣳ आ५यित्पराायि। मादेनसा३१२३। हगोवा। क्का५तो ६हायि ॥(१) द्विर्यम्। पञ्चा३। स्वयशसाम्। सखा योअद्रिसꣳहता२३म्। प्रायमिन्द्रा३१२३। स्यका५मि याम्। प्रास्नापया३१२३। तओवा। मा५योई्हायि ॥(२) इन्द्रा। यसो३। मपातवायि। वृत्रघ्ने परिषिच्यसार३

* 'सदनासदे—यानि यज्ञे सदनानि द्रोणकलश-प्रभृतीनि, तेषु आसीदति ।' इति वि० ।

† 'नरे—नराकारे'—इति वि० । ‡ "महागौरीवितम्"—इति ख०-पु०-पाठः



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



यि। नारिषदा३१२३। श्विणा५षतायि। वायिरायसा
३१२३। इनोषा। सा५द्धोई्हायि(३)॥ १८* ॥ [१]

॥ निह्ववम्॥ आयिही३। आयिही। एहिया।
ओ२३४वा। हायि। परित्य९ह्र्यता३९हारा३यिम्।
हारायिम्। हरा। ओ२३४वा। हायि। बभ्रुम्पुन
न्तिवा३रेणा३। रेणा। रेणा। ओ२३४वा। हायि।
यो देवान्विश्वा९ई३त्पारा३यि। परायि। परा। ओ२३
४वा। हायि। मदेनसहगा३च्छाता३यि। च्छातायि।
च्छता। ओ२३४वा। हायि॥(१) दिव्यम्पञ्चस्वया३
श्रासा३म्। श्रासाम्। श्रसा। ओ२३४वा। हायि।
सखायोयद्रिमा३९हाता३म्। हाताम्। हता। ओ
२३४वा। हायि। प्रियमिन्द्रस्यका३माया३म्। मा

* ऊ० गा० ५प्र० २अ० १८सा०।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



याम् । मिया । ओ२३४वा । हायि । प्रजापयन्त ऊ ३र्म्मयाइः । मया । ओ२३४वा । हायि ॥ (२) इन्द्रा यसोमपा३तावा३यि । तावायि । तवा । ओ२३४वा । हायि । वृत्रघ्न परिषी३च्यासा३यि । च्यासायि । च्यसा । ओ२३४वा । हायि । नरे चदक्षिणा३वाता३यि । वाता यि । वता । ओ२३४वा । हायि । वीरायसदना३सा दा३यि । सादायि । सदा । ओ२३४वा । हायि । आयिही३ । आयिही । एहिया । ओ२३४वा । हा ३४ । औहोवा । ई२३४५ (३) ॥ १८* ॥ [२]

॥ वद्राचिष्ठीयम् ॥ परित्यꣳहर्य्यतꣳहरिम् । परि त्यꣳहोवा । यंतꣳहरायिम् । बभ्रुम्पू२३ना । तिवारे णा । योदेवा२३न्वायि । आꣳइत्परायि । मदेना२३

* ऊ० गा० १५० पृ० १८गा० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



सा । ष्वगच्छा२३ता३४३यि ॥(१) दिव्यं प्यन्त्वस्वयशसम् । दिव्यं प्यन्त्वोवा । स्वयशसाम् । सखायो२३आ । द्रि सञ्हताम् । प्रियमा२३यिन्द्रा । स्यकामियाम् । प्रस्ना पा२३या । तऊर्म्मा२३या३४३: ॥(२) इन्द्रायसोमपात वे । इन्द्रायसोवा । मपातवायि । वृत्रघ्ना२३यिपा । रिषिच्यसायि । नरेचा२३दा । त्तिणावतायि । वीरा या २ ३ सा । दनासा२३दा३४३यि । औ २ ३ ४ ५ ई । डा(३) ॥ २०* ॥ [३]

॥ आसिताद्यम् ॥ परित्यञ्हर्यताम् : हरायिम् । बभ्रुम्पुनन्तिवारे२३णा । योदे२वान्वा२यि । श्वाऽइ त्परायि । मादे२नासा२ । ह्गोवा३औ२३४वा । च्छा पूतोा६इहायि ॥(१) दिव्यं पन्त्वस्वया । शसाम् । सखायो

* ऊ० गा० ५प्र० १ख० २०सा० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ १ १ १र
अद्रिस२ऽवा२३ताम्। प्राया२मायिन्द्रा२। स्यकामि

१ १ १ १ ५ ४
याम्। प्राशा२पाया२। तओवा३ओ२३४वा। मा५

५ १र २र १ र
योऽ६हायि॥(२) इन्द्रायसोमपा। तवायि। वृत्रघ्नेप

२ १ १ १र
रिषिच्या२३सायि। न्तारे२वादा२। चिशावतायि।

१ १ २ १ ५ ४
वायिरा२यासा२। दनोवा३ओ२ ३ ४ वा। सा५दो६

५
हायि(३)॥ १*॥ [४]

र १ ४ ५ १ ५ २ १
॥ साम॥ परित्या३ऽहर्य्यतऽहरायिम्। बभ्रु

२ १ ३ २ ३ ४ १र२र१र २र
पुना२। तिवा३४५। रे२३४णा। योदेवान्विश्वा२ऽ

२ २ २ १ १ १ १ १ २ १ १ २ ३ ५
इत्परा२३४५यि। मादाओ२३४वा। नासाओ२३४वा।

४ ५ १ ४ ५ ४ ५ २ १
हगा५च्छतायि॥(१) दिर्य्यम्या३च्चस्वयशसाम्। सखा

२र १ २ २ ३ ५ १ १ १ १र
योआ२। द्रिसा३४५। हा२३४ताम्। प्रियमिन्द्रस्यका

२ १ १ १ १ १ २ ३ ५ १ २ १ ५
मिया२३४५म्। प्राशाओ२३४वा। पायाओ२३४वा।

---

* ज० गा० ६प्र० १ख० १गा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



तऊ५र्मयाः ॥(२) इन्द्रायाउसोमपातवायि। वृत्राघ्नेपा२। रिषाउ४५यि। च्याउ४से। नरेचदक्षिणावताउ४५यि। वायिराओ२३४वा। यासाओ२३४वा। दना५सदायि। ह्वोउ५ई। डा(३) ॥ २* ॥ [५]

॥ वसिष्ठस्याकूपारम् ॥ परित्याउ९हर्य्यं। तउ९हाउ४रायिम्। बभ्रू२म्पुना। तिवारेणा। योदेवान्वा२यि। स्वाउ९इत्परायि। मदेवासाउ३। हाउगाउ। क्काउ४५तोईहायि ॥(१) दिर्य्यम्याउ३स्वस्व। यज्ञाउ४साम्। सखा२योआ। द्रिसउ९हताम्। प्रियमायिन्द्रा२। स्यकामियाम्। प्रस्नापायाउ३। ताउ३ऊ३३माउ४५योईहायि ॥(२) इन्द्रायाउ३सोम। पाताउ४वायि। वृत्रा२घ्नेपा। रिषिच्यसायि। नरेचादा२क्षि

* ऊ० गा० ६प्र० १ख० १गा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



णावतायि। वीरायासा२३। दा२३ना३। सा ३४५

दो६हायि(३) ॥ ३* ॥ [६]

॥ श्यावाश्वम् ॥ परा३१यि। त्या३१उह। र्यन्तम्।

हा ३ रिम्। एहिया। बा। अनुनन्तायि। श्वा।

रेणा२। एहिया२। योदेवाञ्चायिस्वा३१उआ३यित्।

पा२३४रायि। ऐहा२यि। एहिया२। मदेनस

हा३गा३। च्छा३४५तो६हायि॥(१) दिव्या३१म्।

पा३च्च। स्वय। भ्रा३सम्। एहिया। सा। स्वायोमद्रा

यि। स। हता२म्। एहिया२। प्रियमिन्द्रास्या३का

३। मा२३४याम्। ऐहा२यि। एहिया२। प्रस्वाप

यान्ता३ऊ। मा३४५योइहायि॥(२) इन्द्रा३१। या३

सो। मपा। ता३वे। एहिया। वा। चघ्नूपरायि। षि।

---

* ऊ० गा० ६प्र० १ख० ३सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ २र र १ २ ४
च्यसा२यि । एह्निया२ । नरेचदाच्चा३यिणा३ । बा२

५ २र २र र र १ २ ४
३४तायि । ऐन्द्रा२यि । एह्निया२ । बीरायसादा३ना

२ ५
३ । सा३४५दो६हायि(३) ॥ १* ॥ [७]

१ २ १
॥ आन्धीगवम् ॥ परित्य७ हर्य्यंता१७ हारायिम् । ब

२ १ २र र २र २र
भ्रुम्पु । नन्ता२३यिवा । ऊम्मा२१ऽ२ । रेणयोदेवान्हि

२र १ २ ३ १ १ १ १ १ २ २ १
स्वा७इत्परा२३४५यि । मादा३उवा । ना२सा । हा२

२ १ २ ४ ५ २
३गा । च्छता । औ३होवा ॥(१) दिव्यं म्पञ्चस्वया१मा

२ १ र २ १ १
साम् । सखायः । अद्रा२३यिसा । ऊम्मा२१ऽ२ । ह

२ १ र २ १ १ १ १ १ २ २
त्प्रियमिन्द्रस्यकामिया२३४५म् । प्राख्ना३उवा । पा२

१ २ १ २ ४ ५ २ र र
या । ता२३ऊ । मया । औहोवा ॥(२) इन्द्रायसो

२ १ र २ १
मपा१तावायि । वृत्रघ्ने । परा२३यिषा । ऊम्मा२१ऽ२ ।

१ र र २ १ २र २ १ १ १ १ १ २
च्यसेनरेचदक्षिणावता२३४५यि । बायिरा३उवा । या२

---

* ऊ० गा० १९प्र० २ख० १मा० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



सा। दा२३ना। सदा। औ३होवा। चो५ई।

डा(३) ॥ २* ॥ [८]

॥ आसिताद्यम् ॥ इन्द्रायसोमपा। तवायि। वृत्र

घ्ने परिषिच्या२३सायि। ना२ेरचादा२। चिणावता

यि। वायिरा२यासा२। दनोवा३ओ२३४वा। सा५

दो६हायि ॥(१) तꣳसखायःपुरू। रुचाम्। वयंयूय

ञ्चसूरा२३याः। आभ्या२मावा२ जगन्विथाम्। स्वा

ने२मावा२। जपोवा३ओ२३४वा। स्ता५योऽ६हायि ॥(२)

परित्यꣳहर्यताम्। हरायिम्। बभ्रुम्पुनन्तिवारे२३

णा। योदे२वान्वा२यि। श्वाꣳइत्परायि। मादे२मा

सा२। हगोवा३ओ२३४वा। च्छा५तो६हायि(३)॥१६†॥[९]

---

* ऊ० गा० १२प्र० २ख० २सा०।

† ऊ० गा० १४प्र० २ख० १६सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



॥ एडकौत्सम् ॥ इन्द्रादीयार२३। सोमपातवईया। वृत्रघ्न परिषिच्यसि। नारेचद। क्षिणावार२३तायि। वायिरा३द्दा। यासा३द्दा। दनासार२३दा३४३यि॥(१) तꣳसद्धोखार२३। यःपुरुहूचमीया। वयंयूयञ्चसूरयः। आश्यामवा। जगन्धा२२३याम्। सानाइहायि। मावाइहा। जपस्ता२३या३४३म् ॥(२) परीहित्या २ ३म्। हर्य्यतꣳहरिमीया। बभ्रुम्पुनन्तिवारेण। योदेवान्वि। श्वाꣳइत्या२३रायि। मादाइहायि। नासाइहा। हगच्छा२३ता३४३यि। ओ२३४५ई। डा(३)॥ १७* ॥ [१०]

॥ प्रुङ्काप्रुङ्कीयाद्यम् ॥ इन्द्रायसोमपातवायि। वृत्रघ्ने परिषिच्या२३सायि। नरेचदक्षिणावार२३तायि। वीरायार२३सा३। दार। नासा३४औहोवा। दा२३४५

* ज० गा० १४प्र० २ख० १७गा०।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ २र १र२१ र २१र २
यि ॥(१) तꣳसखायःपुरूरुचाम् । वयंयूयञ्चसूरा२३याः ।
१र र२१ २ १र २ १
अश्व्यामवाजगन्ध्या२३याम् । सनेमा२३वा३ । जा २ ।
१२ ५र र २१११ १२१ २ १
पश्वा३४औहोवा । या२३४५म् ॥(२) परित्यꣳहर्यतꣳ
२१ २१र २ १रर र २र
हरायिम् । बभ्रुम्पुनन्तिवारे२३णा । योदेवान्विश्वाꣳ
१ २ १र २ १ ३ २ ५र
इत्था२३रायि । मदेना२३सा३ । हा२ । गच्छा३४औ
र २ १११
होवा । ता२३४५यि(३) ॥ १८* ॥ [११]
२र १र २र२र २
॥ क्रौञ्चाद्यम् ॥ इन्द्रायसौहो । मापातवायि । वृ
र १ २ ४ २र१र
त्रघ्नेपा३ । रायिषा३यिच्चाप्सा६५६यि । नरेचदौहो ।
१र१र २र र १ २ ४
क्षोणावतायि । वीरायसा३ । दाना३स्वाप्दा६५६यि ॥(१)
२ १रर २र१र १ र १ २
तꣳसखायौहो । पूरूरुचाम् । वयंयूया३म् । चासू३
४ २ र १ र २र१ २ र
रा५या६५६ः । अश्व्यामवौहो । जागन्धियाम् । सन
१ २ ४ २ १ र
मवा३ । जापा३स्वाप्या६५६म् ॥(२) परित्यꣳहौहो ।

* ऊ० गा० १४प्र० २ख० १८गा० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२र १ २ १ २ ४
यीतꣳचरायिम् । बभ्रु गुपुना३ । तायिवा३रे५णाई५६ ।

२र र १र र २र १ २ र १ २
योदेवान्वैत्यौ । स्वाꣳदूत्परायि । मदेनसा३ । हागा

४
३च्छा५ताई५६यि(३) ॥ १९* ॥ [१२]

२ र १ २ २ ऽ
॥ रयिष्ठम् ॥ इन्द्रायसो । मपाता३वायि । औ३

२ २ १र २ ३ ११११ २ र
हो३वा । वृत्रघ्ने परिषिच्यसा२३४५यि । वृत्रघ्नेपा । रि

१ २ २ ऽ २ २ १र२१ २र ३ ११
षायिच्या३सायि । औ३हो३वा । नरेचदक्षिणावता२३

११ २र १ २ २ ऽ २ २
४५यि । नरेचदा । क्षिणावा३तायि । औ३हो३वा ।

र१र २ र १ ३ ११११ २र र १ २ २
वीरायसदनासदा२३४५यि । वीरायसा । दनासा३दा

ऽ २ २ २ र १ ३ २ २
यि । औ३हो३वा ॥(१) तꣳसखायाः । पुरूरुचाम् ।

ऽ २ २ १२र १ २र१ ३ ११११ २ र
औ३हो३वा । वयंयूयञ्चसूरया२३४५ः । वयंयूयाम् ।

१ २ २ ऽ २ २ १ र २१र २ . ९ १ १
चसूरा३याः । औ३हो३वा । अश्यामवाजगन्धिया२ ३

११ २ र १ २ २ ऽ २ २
३५म् । अश्यामवा । जगान्धा३याम् । औ३हो३वा ।

---

* ऊ० गा० १४प्र० २ख० १९सा० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१र२१र २ ३ ११११ २र १ २ २
सनेमवाजपस्त्यिया२३४५म् । सनेमवा । जपास्त्या३याम् ।

ऽ २ २ २ १ २ २
औ३हो ३ वा ॥(२) परित्यꣳहा । र्यताꣳहा३रायिम् ।

ऽ २ २ १ २ १रर२११११ २
औ३हो३वा । बभ्रुम्पुनन्तिवारिणा२३४५ । बभ्रुम्पुना ।

१ २ २ ऽ २ २ १र२र१र २र १२३११
तिवारे३णा । औ३हो३वा । योदेवान्विश्वाꣳइत्परा२३

११ २र र र र १ २ १ ऽ
४५यि । योदेवान्वायि । श्वाम्बायित्पा३रायि । औ३

२ २ १र २ १ २ ३११११ २र
हो३वा । मदेनसहगच्छता२३४५यि । मदेनसा । ह

१ २ २ ऽ २ २ ऽ २ २ ऽ १
गाच्छा३तायि । औ३हो३वा । औ३हो३वा । ई३या ।

ऽ २ ५ २ २
ई३या३४ । हा । हाउवा३ । ऊ३२३४पा(३) ॥२०*॥[१३]

४ ३ ४ २ ४र
॥ यज्ञायज्ञीयम् ॥ इन्द्राऽ५य । सो३मा३पाता

५ १ र १ २ २ १ १
वायि । वार्चघ्नपा । री३षायिच्या३सायि । नरे२च ।

२ १ २ २ १ र
दक्षा२३यिणा । ऊम्मायि । वा३तायि । वायिरायस

१ २ १ २ १र र र
दनार्सदा३ ॥(१) दायिताम् । सखायःपुरूरुचंवयंयू

---

* ऊ० गा० १४प्र० १ख० २०सा० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ १२ २ १ १ १ २
याम्। चा३सूरा३याः। अश्शा२म। वाजा२३गा।
१ २ २ १ २ २ ३ २
ऊम्मायि। धा३याम्। सानेमवाजपा२स्तियाउ॥(२)
१ २ १ २ १ २ २
याम्मा। रित्य(ऌ)र्हर्य्यत(ऌ)हरिम्बभ्रुम्पुना। तो३वा२२णा।
१२ १२ २ १ २ २
योदे२वान्। विश्वा(ऌ)२३आ। ऊम्मायि। पा३रायि।
१२ ३ २
माढेनसच्चगा२च्छताउ(३)॥ २१*॥ [१४]

१ २ १ २ १ २ १
॥ ऊर्द्ध्वत्वाष्ट्रीसाम॥ परित्य(ऌ)र्हर्यत(ऌ)हरायिम्। बा
१ ३ २ २ ५ १२ २२ २२ २२
भ्रू२म्युना२। तिवा३४५। रे२३४णा। योदेवान्विश्वा(ऌ)
१२ २ १११२ ३२२१ २१ २
इत्परा२२४५यि। मदेनसा। हगच्छा२२ता३४३यि॥(१)
१ २ १ २ १ १ १२ ३ २
दिर्व्यम्पस्त्वस्वयशसाम्। साखा२योआ२। द्रिसा३ ४ ५।
२ ५ २१ २ १२ ३११११ ३२ २
हा२३४ताम्। प्रियमिन्द्रस्यकामिया२३४५म्। प्रस्नाप
१ २१२ २ १ २ २ २ १२ २ १
या। तऊम्मा२३या३४३ः॥(२) इन्द्रायसोमपातवायि।
१ १२ ३ २ २ ५ १२२१
वार्चा२घ्नेपा२। रिषा२३४यि। च्या२३४से। नरेचद

* ऊ० गा० १४प्र० २ख० २१सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२र ३ १ १ १ १ १ ३र र १ १ २ १र २
च्चिणावतार३४५यि। वीरायसा। दनासार२३दा३४३यि।
१
ओ२३४५ई। डा(३) ॥ ८* ॥ [१५]

४ ३ ४ २ ४
॥ यज्ञायज्ञीयम् ॥ परा५यित्यम्। द्दा३यौ३व०
५ १ २ १ २ २ १र १र
द्दारायिम्। बाभ्रुरूपुना। तौ३वारे३णा। योदे२वान्।
२ १ २ २ १ र
विश्व०२३आ। ऊम्मायि। पा३रायि। सादेनसद्दगा
१ २ १ २ १ र
२च्छताउ ॥(१) तायिद्दायिः। यम्यन्वसयशसव०सखा
र २ १ २ १ १ १
योआ। द्रौ३सा०हा३ताम्। प्रिया२मि। द्दुया २ ३
२ १ १ २ १ र १
का। ऊम्मायि। मा ३ याम्। प्रास्त्रापयन्तऊ २ म्मै
२ १ १ १र र र र र २
याउ ॥(२) याआयि। द्रायसोमपातवेवृत्रघ्नेपा। री३
१ १ २ १ १ २ १
घायिच्चा३सायि। नरे२च। द्द्वा२३यिणा। ऊम्मा
२ २ १ र ३२ १ १ १
यि। रा३तायि। वायिरायसदनार२सदाउ। वा ३४५ (३)
॥ ८† ॥ [१६]

---

* ऊ० गा० १७प्र० १अ० ८सा०।

† ऊ० गा० १७प्र० १अ० ९सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



॥ आसितोत्तरम्॥ परायित्या२३ऌ्हर्य्य तऌ्हरिऌ्हाउ। बभ्रुम्पुनन्तिवारे२ ३ णा। योदेवा३न्वा ३ यि। स्वाऌ्इत्पा२३४रायि। मदेना३सा३। ह्नगो२३४वा। छा५तोई्हायि(३) ॥ २* ॥ [१७]

॥ वाङ्निधनक्रौञ्चम्॥ परायित्याऌ्हा३१२३४। यं तम्। हरा३यिम्। बभ्रुम्पुना३१२३४। तिवा। रे णा३। योदेवान्वा३१२३४यि। स्वाऌ्इत्। परा३यि। मदेनासा३१२३। ह्नगा५च्छताउ ॥(१) द्वियम्पाञ्चा३१२३४। स्वय। शसा३म्। सखायोआ३१२३४। द्रि स। हता३म्। प्रियामायिन्द्रा३१२३४। स्यका। मि या३म्। प्रस्नापाया ३ १ २ ३। तऊ५म्म याउ ॥(२) इन्द्रायासो३१२३४। मपा। तवा३यि। वृत्रघ्नेपा३१२

* ऊ० गा० १७प्र० २ख० ९सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



३४। रिषि। च्यसा३यि। नरेचाइा३१२३४। चित्रा

वता ३ यि। वीरायासा ३ १ २ ३ । दना ५ सदाउ।

वा(३) ॥ ४* ॥ [१८] १८

अथ तृचात्मके चतुर्थ-सूक्ते—

प्रथमा ।

पवस्वसोममहेदक्षायाश्वोननिक्तोवाजीधनाय ॥ १† ॥

हे "सोम !" "अश्वो न" अश्वइव "निक्तः" वसतीवरीभिरद्भिर्निर्णिक्तः,‡ "वाजी" वेगवान् त्वं "महे" महते "दक्षाय" बलाय¶ "धनाय" धनार्थं "पवस्व" क्षर ॥

"महे"—"क्रत्वे"—इति पाठौ ॥ १ ॥

अथ द्वितीया ।

प्रतेसोतारोरसम्मदायपुनन्तिसोमम्महेद्युम्नाय ॥ २§ ॥

---

* ऊ० गा० २०प्र० २श्च० ४सा० ।

† छ० श्चा० ५, १, ५, ४ ( १भा० ८७४ पृ० ) ऋ० वे० ७, ५, २०, १० ।

‡ 'अश्वो न निक्तः—न-शब्द उपमार्थीयः अश्वइव स्नापितः'—इति वि० ।

¶ 'दक्षाय—महर्षये अथवा दक्षिणे शीघ्रकर्मणे यजमानाय'—इति वि० ।

§ ऋ० वे० ७, ५, २१, १ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"सोतारः" अभिषोतारः ऋत्विजः, हे सोम! "ते" तव स्वभूतं "रसं"* "मदाय" मदार्थं "पुनन्ति"। तदेवोच्यते—"महे" महते "द्युम्नाय" ["द्युम्नं द्योततेर्यशो वान्नं वेति (निरु० नै० ५,५) यास्कः] अन्नाय यशसे वा पुनन्ति सोमं शोधयन्ति यद्वा, सोममभिषूयमाणं रसं पुनन्तीति एकवाक्यतया योजनीयम्॥

"प्रते"-"तन्वे"—इति पाठौ॥ २॥

अथ तृतीया।

१ २ ३ १र २र
शिशुञ्जज्ञानꣳहरिम्मृजन्ति
३ ० ३ १ २ ३ २ ३ १ २
पवित्रेसोमन्देवेभ्यइन्दुम्॥ ३† ॥ १९

"शिशुम्" एषां पुत्रभूतं‡ "जज्ञानं" जायमानं "हरिं" हरितवर्णम् "इन्दुं" दीप्तं सोमं "देवेभ्यः" "पवित्रे"¶ "मृजन्ति" ऋत्विजा मार्जयन्ति॥ ३॥ १९

२र २ र २ र १
॥ विधर्म्मम्॥ ओहोऽ३वा। ओहोऽ३वा। ओहो

---

* 'रसं—वीर्यम्'—इति वि०।

† ऋ० वे० ७, ४, २१, २।

‡ 'शिशुं'—शंसनीयम्'—इति वि०।

¶ 'पवित्रे—वालमये'—इति वि०।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



३ ५र ५ १ २ र १२ २र१ १ १ १ १
२वा२३४ओहोइवा । पवस्वसोममहेदक्षाया २ ३ ४ ५ ।

१ २र १ २ १र १र ३ १ १ १ १ १ २ २र १र२र १ २ १
अश्वोननिक्तोवा२जीधना२या२३४५ । प्रतेसोतारोरसम्म

र २ १ १ १ १ २ १ २ १र २ १र २ १र १ १ १ १ १
दाया२३४५ । पुनन्तिसोममम्महेद्युम्नाया२३४५ । शिशु

२र १ २ २ १ १ १ १ २ १ २र १र २ र १र २ १ १ १
ञ्जज्ञानꣳहरिम्मृजन्ती२३४५ । पवित्रेसोमदेवेभ्यइन्दू२३

१ १ १ २ र ३ १ १ १ १ १ २ १र २र २ १ १ १ १
४५म् ॥(१) पवस्वसोमा२३४५ । महेदक्षाया२ ३ ४ ५ ।

१ २र १ २ २ २र १र २ १ १ १ १ १ र २र १र २
अश्वोननिक्ताः । वाजीधना२या२३४५ । प्रतेसोतारा

१ १ १ १ १ २ १ र २ १ १ १ १ २ १ २ १र १ १ १ १
२३४५ः । रसम्मदाया२३४५ । पुनन्तिसोमा२३४५म् ।

२ १र २ १र १ १ १ १ १ २ ३र २ २
महेद्युम्नाया२३४५ ॥(२) शिशुञ्जज्ञाना१म् । हरिम्मृज

३ १ १ १ १ २ १ २र १र १ १ १ १ २र १र २ ३ १ १ १ १
न्ती२३४५ । पवित्रेसोमा२३४५म् । देवेभ्यइन्दू२३४५म् ।

२र २ र १ ३ ५र ५ २ १ २
ओहोइवा । २ । ओहो२वा२३४ओहोइवा । ए३ । विश्व

३ १ १ १ १
म्मी२३४५(३) ॥ ४* ॥ [१] १९

---

* ऊ० गा० ६प्र० १ख० ४सा० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ तृचात्मके पञ्चम-सूक्ते—

प्रथमा ।

२ ३ २ ३ २ ३ २ ३ १ २ ३ १र २र
उपोषुजातमप्तुरङ्गोभिर्भङ्गम्परिष्कृतम् ।
१ २ ३ १ २
इन्दुन्देवाअयासिषुः ॥ १* ॥

"जातम्" प्रादुर्भूतम् "अप्तुरं" वसतीवरीभिः प्रेरितम् "भङ्ग" शत्रूणां भञ्जकम् "गोभिः" गोविकारैः पयोभिः "परिष्कृतम्" अलङ्कृतम् "इन्दु" सोमं "देवाः" इन्द्रादयः "उपायासिषुः" उपगच्छन्ति ॥ १ ॥

अथ द्वितीया ।

१र २र ३ २ २ ३२ ३ १ २
तमिद्वर्द्धन्तुनोगिरोवत्सꣳसꣳशिश्वरीरिव ।
१र २र ३ १ २
यइन्द्रस्यहृदꣳसनिः ॥ २† ॥

"यः" सोमः "इन्द्रस्य" "हृदंसनिः"‡ हृदयस्य सम्भक्ता भवति "तमित्" तमेव सोमं "नः" अस्माकं "गिरः" स्तुतिरूपा वाचः "संवर्द्धन्तु" संवर्द्धयन्तु। तत्र दृष्टान्तः—"वत्सं"

* छ० आ० ६, १, १,१ ( २भा० ४३ पृ० )=इहैव १, २, १८, १ (३भा०१६३ पृ०) = ऋ० वे० ७, १, २०, १ ।

† ऋ० वे० ७, १, २०, ४ ।

‡ 'हृदंसनिः—हृदिलाभः स्थितः'—इति वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



वालं "शिश्वरीरिव" यथा शिश्वर्यो बहुपयस्का मातरो वत्सं सम्यक् वर्द्धयन्ति तद्वदित्यर्थः ॥ २ ॥

अथ तृतीया।

१ २ ३ १२ ३२ ३ १ २ १ २ २ १ २

अर्षा नः सोम शङ्गवे धुक्षस्व पिप्युषीमिषम्।

१ २ ३ १ १

वर्द्धा समुद्रमुक्थ्य ॥ ३* ॥ २०

हे सोम!" त्वं "नः" अस्माकं† "गवे" "शं" सुखम्‡ "अर्ष" चर¶। अपिच "पिप्युषीम्" प्रवृद्धाम्§ "इषम्" अन्नं‖ "धुक्षस्व" प्रपूरय**। किञ्च हे "उक्थ्य" प्रशस्य! †† "समुद्रम्"‡‡ "वर्द्ध"¶¶ वर्द्धय ॥

"अर्षा नः"-"अर्षाणः"—इति पाठौ, "उक्थ्य"-"उक्थ्यम्"—इति च ॥ ३ ॥ २०

* ऋ० वे० ७, १, २०, ५।

† 'नः अस्मभ्यम्'—इति वि०।

‡ 'शंगवे—गवां सुखार्थम्'—इति वि०।

¶ 'अर्ष—गच्छस्व द्रोणकलशम्'—इति वि०। मूले त्वर्षाइति दीर्घान्तः पाठः "द्व्यचोऽतस्तिङः (६, ३, १३५)"—इति तत्र दीर्घः।

§ 'पिप्युषीं—पान-समर्थाम्'—इति वि०।

‖ 'सोमलक्षणं'—इति वि०।

** 'धुक्षस्व—दुग्धस्व'—इति वि०।

†† 'उक्था—उक्थानि सामानि'—इति वि०। एवञ्च "उक्था"—इति विवरण-पाठो गम्यते परं तत् प्रामादिकम् एव संहिता-पद-पुस्तकेषु तथा पाठादर्शनात्।

‡‡ 'समुद्रं—द्रोणकलशम्'—इति वि०।

¶¶ "वर्द्धा"—इति संहितायां दीर्घः।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



॥ अध्यम् ॥ उपोषुजा२तम्। अप्तुरोवा। गोभि र्भङ्गाम्। परिष्कृताम्। इन्दुर्देवाअ। या२३। सि षाउवा। अूधिया२॥(१) तमिद्वर्धा२न्तु। नोगिरो वा। वत्सꣳसꣳशायि। स्वरीरिवा। यइन्द्रस्यव। दा २३म्। सनाउवा। अूधिया२॥(२) अर्षानःसो२म। शङ्कोवा। धुक्षस्वपायि। प्युषीमिषाम्। वर्हासमु द्रम्। ऊ२३। क्थियाउवा। अूधिया२। ए२३हिया २४३। औ२३४५ई। डा(३)॥ ५* ॥ [१]

॥ प्रतीचीनेडङ्काशीतम् ॥ उपोषजातम्। आ२ प्तुराम्। गोभिर्भङ्गम्। परायिष्कृता२३४म्। हाहो यि। इन्दुर्देवाआ३या। सिषूः। औ२३होवा ॥(१) तमिद्वर्धन्तु। नो२गिराः। वात्सꣳसꣳशि। स्वरायि

---

* ज० गा० ६प्र० १अ० ५सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



रिवा२३४। हाहोयि। यदिन्द्रस्याहा३र्हीम्। सनायिः। औ२३होवा॥(२) अर्षानःसोम। आ२ङ्गवायि। धूम खपि। प्युषायिमिषा२३४म्। हाहोयि। वर्त्तासमू द्रा३म्। क्थिया। औ३होवा। ई३डा(३)॥ ११* ॥[२]२०

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य दशमस्याध्यायस्य-
एकादशः खण्डः† ॥ ११ ॥

---

अथ द्वादश-खण्डे‡—

आघायेअग्निमिति त्र्यचात्मकं प्रथमं सूक्तम्,

तत्र प्रथमा।

आघाये अग्निमिन्धतेस्तृणन्तिबर्हिरानुषक्।
येषामिन्द्रोयुवासखा॥ १¶ ॥

---

* ऊ० गा० १९प्र० २ख०११सा०।

† 'यज्ञायज्ञीयमग्निष्टोमसाम'—इति वि०।

‡ 'इदानीमुक्थानि'-इति वि०।

¶ ऋ० शा० २, १, ४, ९ (१भा० ७२० पृ०)=ऋ० वे० ६, ३, ४२, १= य० वे० ७, ३२।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"ये" ऋषयः "आ घा" आभिमुख्येन खलु "अग्निम्" "इन्धते" दीपयन्ति, येषाञ्च "युवा" नित्य-तरुणः "इन्द्रः" "सखा" भवति, ते "आनुषक्" आनुपूर्व्येण "बर्हिः स्तृणन्ति"॥ १ ॥

अथ द्वितीया।

४ २उ ३ १ २ ३ १ २ ३ २ ३ १२ २१
बृहन्निदिध्मएषाम्भूरिशस्तं* पृथुःस्वरुः ।
२ ३ २ ३ २ ३ १ २
येषामिन्द्रोयुवासखा ॥ २† ॥

"एषाम्" ऋषीणाम्‡ "इध्मः"¶ "बृहत् इत्"§ महान् खलु, "भूरि" बहु "शस्तं" स्तोत्र-स्वरूपश्च "पृथुः" महान्। शिष्टमन्यत् ॥ २ ॥

अथ तृतीया।

१ २ ३ २ ३ २उ ३ २ ३ १ २ ३ १ २
अयुद्धइद्युधावृतंशूरआजतिसत्वभिः ।
२ ३ ३ १ १ ३ १ २
येषामिन्द्रोयुवासखा ॥ ३ ‖ ॥ २१

---

* "शस्त"—इति स०-पाठः ।

† ऋ० वे० ६, ३, ४२, २।

‡ 'येषां—यजमानानाम्'—इति वि०।

¶ 'इध्मः—इन्धनार्थीयः'—इति वि०

§ 'इत्—इति पदपूरणः'—इति वि०।

‖ ऋ० वे० ६, ३, ४२, ३।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



रिवा२३४। द्वाहोयि। यदिन्द्रस्याहा३र्द्दीम्। स्तनायिः। औ२३होवा॥(२) अर्षानःसोम। आ२ङ्गवायि। धूक्ष्व पि। प्युषायिमिषा२३४म्। द्वाहोयि। वर्द्धासमु द्रा३म्। क्थ्यया। औ३होवा। ईडा(३)॥ ११* ॥[२]२०

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य दशमस्याध्यायस्य-

एकादशः खण्डः† ॥ ११ ॥

---

अथ द्वादश-खण्डः‡—

आघायेअग्निमिति तृचात्मकं प्रथमं सूक्तम्,

तत्र प्रथमा।

आघाये अग्निमिन्धते स्तृणन्ति बर्हिरानुषक्।

येषामिन्द्रो युवासखा॥ १¶ ॥

---

* ऊ० गा० १९प्र० २ख० ११सा०।

† 'यज्ञायज्ञीयमग्निष्टोमसाम'—इति वि०।

‡ 'इदानीमुक्थानि'-इति वि०।

¶ छ० आ० २, १, ४, ९ (१भा० ७२० पृ०)=ऋ० वे० ६, ३, ४२, १= य० वे० ७, ३२।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"ये" ऋषयः "आ घा" आभिमुख्येन खलु "अग्निम्" "इन्धते" दीपयन्ति, येषाञ्च "युवा" नित्य-तरुणः "इन्द्रः" "सखा" भवति, ते "आनुषक्" आनुपूर्व्येण "बर्हिः स्तृणन्ति" ॥ १ ॥

अथ द्वितीया ।

२ ३उ २ १ २ ३ १ २ ३ २ ३ १र २र
बृहन्निदिध्मएषाम्भूरिशस्त्रं* पृथुःस्वरुः ।
२ ३ २ ३ २ ३ १ २
येषामिन्द्रोयुवासखा ॥ २† ॥

"एषाम्" ऋषीणाम्‡ "इध्मः"¶ "बृहत् इत्"§ महान् खलु, "भूरि" बहु "शस्त्रं" स्तोत्र-स्वरूपञ्च "पृथुः" महान् । शिष्टमन्यत् ॥ २ ॥

अथ तृतीया ।

१ २ ३ २ ३ २उ ३ २ ३ १ २ ३ १ २
अयुद्धइद्युधावृतꣳशूरआजतिसत्वभिः ।
२ ३ २ ३ १ ३ १ २
येषामिन्द्रोयुवासखा ॥ ३ ‖ ॥ २१

---

* "शस्तं"—इति ऋ०-पाठः ।

† ऋ० वे० ६, २, ४२, २ ।

‡ 'येषां—यजमानानाम्'—इति वि० ।

¶ 'इध्मः—इन्धनार्थीयः'—इति वि०

§ 'इत्—इति पदपूरणः'—इति वि० ।

‖ ऋ० वे० ६, २, ४२, ३ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"युवा इन्द्रः येषां सखा" तेष्वन्तर्भूतः कश्चित् "अयुद्ध इत्" प्रागयोद्धेव सन् "युधावृतं" योद्‌धृभिर्भटैरावृतं शत्रुं "सत्वभिः" आत्मीयैर्बलैः "शूरः" सन् "आजति"* नमयति ॥ ३ ॥ २१

२र ३ र    १ २    १

॥ ऐध्मवाहाद्यम् ॥ आघायेअग्निमिन्धताइ। स्तृण

र    २    १    १र

न्तिबर्हिरानुषाक् ॥(१) बृहन्तिदिधाआयिषाम्। भूरिश्च

२    र १ २    १र र

स्त्वऋपृथुःस्वरुः ॥(२) अयद्धइद्यु धावार्त्तम्। शूरआज

२र १र    र    र

तिसत्वभायिः। येषामिन्द्रोयुवाइहा। ऊवायि। ऊ

५    ४    ५

वोर२३४। वा। साऽखोईहायि(३) ॥ ६† ॥ [१] २१

अथ यएकइति तृचात्मकं द्वितीयं सूक्तम्,

तत्र प्रथमा।

२उ ३ २ ३ १ २ ३ १ ३ १ २    ३ १ २

यएकइद्विदयतेवसुमर्त्तायदाशुषे।

१ १ १ १ २    ३ १ २ ३ २

ईशानोअप्रतिष्कुतइन्द्रोअङ्ग ॥ १‡ ॥

* 'अवक्षेपयते'—इति वि०।

† ऊ० गा० ६प्र० १ख० ६गा०।

‡ छ० आ० ४, २, ५, ९ (१भा० ७९८ पृ०)=ऋ० वे० १, ६, ६, २।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"यः" इन्द्रः "एकइत्" एकएव "दाशुषे" हविर्दत्तवते "मर्त्ताय" मनुष्याय यजमानाय "वसु" धनं "विदयते" विशेषेण ददाति "अङ्ग" [—इति चिप्र-नाम (निरु० नै० ५, १७)] "अप्रतिष्कुतः" परैरप्रतिशब्दितः प्रतिकूल-शब्द-रहित इत्यर्थः। एवम्भूतः स "इन्द्रः" चिप्रम् "ईशानः" सर्वस्य जगतः स्वामी भवति ॥ १ ॥

अथ द्वितीया।

१ २ १ १ ३ १ २ २ २ ३ १ २ २ १ २
यश्चिद्धित्वाबहुभ्यआसुतावाꣳआविवासति।
३ १र २र ३ १ ३ १ १ २ ३ २
उग्रन्तत्पत्यतेशवइन्द्रोअङ्ग ॥ २* ॥

"बहुभ्यः" मनुष्येभ्यः सकाशात् "यः चित् हि"† यएव खलु यजमानः "सुतावान्" अभिषुत-सोम-युक्तः सन्। हे इन्द्र! "त्वा" त्वाम् "आ विवासति" परिचरति [विवासतिः परिचरणकर्म्मा (निघ० ३. ५, १०)] "तत्" तस्मै यजमानाय "उग्रम्" उद्गूर्णं "शवः" बलम् "इन्द्रः" "अङ्ग" ‡ चिप्रं "आ पत्यते" आपतयति प्रापयति ॥ २ ॥

---

* ऋ० वे० १, ६, ६, ४।

† 'चित्-हि—इति पदपूरणौ'—इति वि०।

‡ 'अङ्गशब्दः पुनरर्थी'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ तृतीया।

३ १र २र ३ १ २ ३ १र ३र
कदामर्त्तमराधसम्पदा क्षुम्पमिवस्फुरत्।

३ १ २ ३ २ ३ १ २ ३ २
कदानःशुश्रवद्गिरइन्द्रोअङ्ग ॥ ३* ॥ २२

"अराधसं" हविर्लक्षणेन राधसा धनेन रहितमयष्टारमित्यर्थः†। एवंविधं "मर्त्तं" मनुष्यम् "इन्द्रः" "पदा" पादेन "क्षुम्पमिव" अहिच्छत्रमिव‡ "कदा" वा "स्फुरत्" स्फुरिष्यति बधिष्यति ? यथा अहिच्छत्रं मण्डलाकारेण शयानं कश्चिदनायासेन हन्ति एवमिन्द्रोऽपि कदास्मच्छत्रून् हनिष्यतीत्यर्थः [ स्फुरति-स्फुलतीति बध-कर्म्मसु ( निघ० २,१८,१५-१६ पठितत्वात् ) ]। "नः" अस्माकं यष्टॄणां "गिरः" स्तुति-लक्षणा वाचः "इन्द्रः" "कदा" कस्मिन् काले "अङ्ग" क्षिप्रं "शुश्रावत्" श्रोष्यतीति वितर्क्यते [ अत्र निरुक्तम्—"क्षुम्पमहिच्छत्रकम्भवति यत् क्षुभ्यते ※ ※ ※ कदा मर्त्तमनाराधयन्तं पादेन क्षुम्पमिवावस्फुरिष्यति कदा नः श्रोष्यति गिर इन्द्रो अङ्ग ( निरु० नै० ५, १७ )" -इति क्षिप्र-नामैतत् ॥ ३ ॥ २२

२र र २ १
॥ त्रैककुभम् ॥ यएकइद्विवायाइतायि। वासुमर्त्ता
१ २ १ ३ ५ १ २र र १ २
याइदा। ऊम्। पू२३४षाम्। आयिशानोअप्रति

* ऋ० वे० १, ९, ९, ३।

† 'यस्य यज्ञार्थं राधसम्भनं न भवति, सोऽराधः'—इति वि०।

‡ 'क्षुम्पम् प्रश्नपत्रीयं दुर्बलं मत्, यथा मर्द्दन्ति बलिनः'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ २र ३र २१ ३ ५
ष्कुतः। आयिशा। नोअप्रतायि। ष्कू२३४ताः॥(१)

२ र २ १र र २ २ १
यश्चिद्धित्वा।बहुभ्या३आ। सुतावाँ३आवी३वा। ऊम्।

३ ५ २१ २र१२ १२ ३ २ १
सा२३४तायि। उग्रन्तत्यत्यतेशवः।ऊग्रम्। तत्यत्यता

३ ५ २र र २ १र
यि। शा२३४वाः॥(२) कदामर्त्तमराधा३साम्। पदा

२ २ १ ३ ५ ११र २
क्षुम्पामो३वा। ऊम्। स्फू२३४रात्। कदानःशुश्रव

१ १ २र ३ २१ ३ ५ १
द्गिरः। कादा। नःशुश्रवात्। गा२३४यिराः। आ

२र १ ३ ५र र ३
यिन्द्रोअ। गा२। या२३४औहोवा। ई२३४

५
न्द्राः(३)॥७*॥[१]२२

अथ गायन्तीति-तृचात्मकं सूक्तं तृतीयम्†,

तत्र प्रथमा।

१ १ २१र २र४ २ १ १ १
गायन्तित्वागायत्रिणोर्चन्त्यर्कमर्किणः।

२ १ २ २१२ १ २
ब्रह्माणस्त्वाशतक्रतउद्वंशमिवयेमिरे॥१‡॥

---

* ऊ० गा० ६प्र० १ख० ७सा०।

† 'तृतीयमुक्थ्यम्'—इति वि०।

‡ छ० आ० ४, २, १, १ (१भा० ६६४ पृ०) = ऋ० वे० १, १, १९, १।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



हे "शतक्रतो" बहुकर्मन् बहुयज्ञ वा इन्द्र ! "त्वा" त्वाम् "गायत्रिणः" उद्गातारः "गायन्ति" स्तुवन्ति ; "अर्किणः" अर्चन-हेतु-मन्त्र-युक्ता होतारः "अर्कम्" अर्चनीयम् इन्द्रम् "अर्चन्ति" स्तोत्र-शस्त्र-गतैर्मन्त्रैः प्रशंसन्ति ; "ब्रह्माणः" ब्रह्म-प्रभृतयः इतरे ब्राह्मणाः "त्वाम्" "उद्येमिरे" उन्नतिं प्रापयन्ति। तत्र दृष्टान्तः—"वंशमिव" यथा वंशाग्रे नृत्यन्तः शिल्पिनः प्रौढं वंशमुन्नतिं कुर्वन्ति, यथा वा सन्मार्गवर्त्तिनः स्वकीयं कुल-मुन्नतं कुर्वन्ति, तद्वत्। एतामृचं यास्क एवं व्याचष्टे—"गायन्ति त्वा गायत्रिणः प्रार्चन्ति तेऽर्कमर्किणो ब्रह्माणस्त्वाशतक्रत उद्ये-मिरे वंशमिव। वंशो वनशयो भवति वनच्छ्रयतइति वेति" (निरु० नै० ५,५)। अर्क-शब्दञ्च बहुधा व्याचष्टे—"अर्को देवो भवति यदेनमर्चन्त्यर्को मन्त्रो भवति यदनेनार्चन्त्यर्कमन्नं भवत्य-र्चति भूतान्यर्को वृक्षो भवति सवृतः कटुकिम्ना (निरु० नै० ५,४"—इति ॥ १ ॥

अथ द्वितीया।

२उ ३ १र २र३ १र २र ३ १ २
यत्सानोः सान्वारुहोभूर्यस्पष्टकर्त्वम्।
२उ ३ १ २ ३ १ २३ १ २
तदिन्द्रो अर्थञ्चेतति यूथेनवृष्णिरेजति ॥ २* ॥

"यद्" यदा "सानोः सानु" यजमानः सानोः सानु, सोम-वल्ली-समिदाद्याहरणाय पर्वतप्रदेशम् "आरुहः" आरूढवान्।

* ऋ० वे० १, १, १०, २।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



तथा "भूरि" बहुकर्म यागरूपम् "असृष्ट" सृष्टवान् उपक्रान्तवानित्यर्थः। "तत्" तदानीम् "इन्द्रः" "अर्थं" यजमानस्य प्रयोजनं "चेतति" जानाति। ज्ञात्वा च "वृषिणः" कामानां वर्षिता सन् "यूथेन" मरुद्गणेन सह* "एजति" कम्पते,† स्वस्य स्थानाद् यज्ञभूमिमागन्तुमित्यर्थः॥

"सानोःसान्वारुहः"-"सानोः सानुमारुहत्"—इति पाठौ॥२॥

अथ तृतीया।

२ ३उ ३ २ ३ १ ३ १ २ ३ २
युङ्क्ष्वाहिकेशिनाहरीवृषणाकक्ष्यप्रा।

१ २ ३ १र २र
अथानइन्द्रसोमपागिरामुपश्रुतिञ्चर॥३‡॥ २३

हे "सोमपाः" सोम-पान-युक्तेन्द्र! "हरी" त्वदीयावश्वौ "युङ्क्ष्व¶ हि" § सर्वथा संयोजय। "अथ" अनन्तरं "नः" अस्मदीयानां "गिरां" स्तुतीनाम् "उपश्रुतिं" समीपे श्रवणमुद्दिश्य "चर" तद्देशे गच्छ। कीदृशौ हरी? "केशिना" स्कन्ध-प्रदेशे लम्बमान-केश-युक्तौ, "वृषणा" सेचन-समर्थौ युवानौ,

---

* 'यूथेन—देवसङ्घातेन'—इति वि०।

† 'एजति—आगच्छति'—इति वि०।

‡ ऋ० वे० १, १, १९, ३=ऋ० वे० ८, ३४।

¶ संहितायां "युङ्क्षा"—इति दीर्घान्तः तत्र "द्व्यचः (६,३,१३५)"—इति दीर्घः।

§ 'हीति पदपूरणः'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"कच्यप्राः" अश्वस्योदर-बन्धन-रज्जुः कच्यः,तस्य पूरकौ पुष्टाङ्गा-वित्यर्थः ॥

"युङ्क्ष्व"–"युच्वा"—इति पाठौ ॥

युङ्च्वा—सति शिष्टत्वेन प्रत्यय-स्वरः (३, १, ३) शिष्यते, "द्व्यचोऽतस्तिङः (३, १, ३)"—इति संहितायां दीर्घत्वम् । केशिना—प्रशस्ताः केशाः अनयोः सन्तीति मत्वर्थीय इनि-प्रत्ययः, "सुपांसुलुगित्यादिना (७, १, ३९) द्विवचनस्या-कारादेशः । वृषणा—वृषु मृषु सेचने (भ्वा० प०) "कनि-न्यु-वृषि-तक्षि-राजि-धन्वि-द्यु-प्रति-दिवः"—इति कनिन्,"ञ्नि-त्यादिर्नित्यम् (६, १, १९७)"—इत्याद्युदात्तः, "वाषपूर्वस्य निगमे (६, ४, ९)"—इति उपधायाः पक्षे दीर्घाभावः, पूर्व-वदाकारः (७, १, ३९)। कच्यप्राः—कच्ययोर्भवं कच्यं सूत्रं तत् प्रातः पूरयतः पुष्टत्वादिति कच्यप्रौ, प्रा पूरणे (अदा० प०), "आतोऽनुपसर्गे (३, २, ३)"—क-प्रत्ययः, कृदुत्तरपद-प्रकृति स्वरेणान्तोदात्तत्वम् (६,२,१३९)"—आकारः पूर्ववत् (७, १, ३९)। अथा—"निपातस्य च (६, ३, १३६)"—इति संहि-तायां दीर्घः। नः—"अनुदात्तं सर्वमपादादौ (८, १, १८)" —इत्यनुवृत्तौ "बहुवचनस्य वस्नसौ (८, १, २१)"—इति नसादेशोऽनुदात्तः। इन्द्र!—सोमपा!—इत्युभौ "आमन्त्रि-तस्य च (८, १, १९)"—इति सर्वानुदात्तौ। गिरां—"सा-



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



वेकाचस्तृतीयादिर्विभक्तिः ( ६, १, १६८ )"—इति विभक्तिरु-दात्ता। उप—शब्दो निपातत्वादाद्युदात्तः ( फि० ४, १२ ), स्तुति-शब्देन प्रादिसमासे कृदुत्तरपदप्रकृतिस्वरत्वे प्राप्ते तादौ-चनितिकृत्यचौ इति तु वर्जिततादि-परत्वात् गतेः प्रकृतिस्वरः पर-निपातः॥ ३॥ २३

॥ उद्वंशीयम्॥ गायन्तित्वागायत्रिणअ्रा। अर्च्चन्त्यर्कमर्का२३यिणाः। ब्रह्माणस्त्वा२हो१यि। शतक्रा२३ताउ। उद्वंशमिवया१यिमीरे। उद्वंशा२३४मी। वाया२उवा३। उप्। मा॑ऽयिरो३५हायि॥(१) यत्सानोस्सान्वारुहञ्ञा। भूर्यस्पष्टकर्त्तूर२३वाम्। तदिन्द्रा२हो१यि। अर्थंचेता२३तायि। यथेनवृष्णिस१यिजा२तायि। यूथेना२३४वृ। ष्णायिरा२उवा३। उप्। जाऽरतो३५हायिः॥(२) युक्ष्वाहिकेशिनाहरीअ्रा। वृषणाकक्षिया२३प्रा। अथानो२हो१यि। इन्द्रोसोमा२३पाः।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



गिरामुपश्रुता१यिच्वा३रा। गिरामू२३उपा। श्रुता३उ
वा३। उप्। चा२री३५हायि(३) ॥ ८* ॥ [१]

॥ हिरण्यस्तस्त्वाष्ट्रीसाम ॥ गाय। तित्वा३। हा३
हा। गायत्रायिणा२३४ः। अर्चं। तिया३। हा३हा।
कमर्कायिणा२ ३ ४ः। ब्रह्मा। णस्त्वा३। हा३हायि।
शतक्राता२३४उ। उद्व। शमा३यि। हा३हायि। व
या३हो२३४। वा। मा५यिरो६हायि ॥(१) यत्सा। नो
स्सा३। हा३हा। नुवारुहा२३४ः। भूरि। अस्पा३।
हा३हा। ष्टकर्त्तूवा२३४म्। तदि। न्द्रोअ३। हा
३हा। यच्चेताता२३४यि। यूथे। नवा३। हा३हा।
ष्णिरा३हो२३४। वा। जा५तो६हायि ॥(२) युञ्जा।

* ऊ० गा० ६प्र० १अ० ८सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



३ १ २ २ ३ २र १ ५ ३र
दिका३। द्दा३द्दायि। भ्रिनाद्दारा२३४यि। वृष। णा

२ २ २ १ ५र ३ २
का३। द्दा३द्दा। चियाप्रा२ ३ ४। अथा। नआ३।

२ २ २ २र १ ५र ३ २ २
हा३द्दायि। द्रसोमापा२३४:। गिराम्। उपा३। द्दा

२ ३ २ १ ५ ४ ५
३द्दायि। श्रुता३यिᳯद्दौर ३ ४। वा। प्वापूरो६द्दा

यि(३) ॥ १* ॥ [२]

५र ३ २ ४र ५ १
॥ गौरीवितम्॥ गाय। तित्वा३। गायत्रिणा:। अ

र २ ४
र्चन्त्यर्कमर्क्किणा२३:। ब्रह्माणस्त्वा३१२३। शतापूक्रता

२ २ ४ ५ ४ ५
उ। ऊद्वᳯशमा३१२३यि। वयोवा। मापुयिरो६द्दा

४ ५ २र २ ४ र ५ १र
यि ॥(१) यत्सा। नो:सा३। नुवारुहा:। भूर्य्यस्पष्ट

१ र २ ४
कर्त्तुवा२३म्। तादिन्द्रोआ३ १ २ ३। यच्चेपूततायि।

१र र २ ४ ५ ४ ५ ५ र
यूथेनवा३१२३। ष्णिरोवा। जापूतो६हायि॥(२) युङ्क्ष्वा

३ १ ४ र ५ १ र १
दिका३यि। भ्रिनाद्दरायि। वृषणाकचियप्रा२३। आ

---

* ऊ० मा० २३प्र० १ख० १सा०।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ २ ३ १ २ २
थानआ३१२३यि। द्रसो५मपाः । गायिरामुपा३१२३।
४ ५ ४ १
श्रुतोवा। चा५रो६हायि(३) ॥ ५* ॥ [३) २३

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य दशमस्याध्यायस्य

द्वादशः खण्डः† ॥ १२ ॥

---

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थ-महेश्वरः ॥ ५ ॥

॥ इति पञ्चमः प्रपाठकः ॥ ५ ॥

इति श्रीमद्राजाधिराज-परमेश्वर-वैदिकमार्गप्रवर्त्तक-
श्रीवीर-बुक्क-भूपाल-साम्राज्य-धुरन्धरेण सायणा-
चार्य्येण विरचिते माधवीये सामवेदार्थ-प्रकाशे
उत्तराग्रन्थे दशमोऽध्यायः‡ ॥ १० ॥

---ooo---

---

* ऊ० गा० १३प्र० १अ० ५सा० ।

† 'द्वादशाहस्य नवसमह षट्चत्वारिंशत् सौमिकम्—इति वि०।

‡ 'पञ्चमः प्रपाठकः समाप्तः' इति वि०. सत्य-पदग्रन्थादिसम्मतश्चैतत् ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्म्ममे तमहं वन्दे विद्यातीर्थ-महेश्वरम् ॥ ११ ॥

## ॥ अथैकादशोऽध्याय आरभ्यते* ॥

तत्र

प्रथम-खण्डे—

सुषमिद्धइति चतुर्ऋचं प्रथमं सूक्तम्,†

तत्र प्रथमा ।

१ २ ३ १ २ ३ १ २ ३ १ २
सुषमिद्धो‡नआवहदेवाऽ अग्नेहविष्मते ।
१ २ ३ १ २
होतःपावकयक्षिच ॥ १¶ ॥

हे "अग्ने !" "सुसमिद्धः"§ एतन्नामकस्त्वं "नः" अस्म-

---

* इदानीं द्वादशाहस्याग्निष्टोमः । * * * । तस्य वक्ष्यमाणानं द्वितीय-प्रभृतीनां पञ्चानामह्नामनुरूपं * * * नवर्चं सर्वं मधस्तादधीतन्तत्,—इति वि० ।

† इदानीं सुषमिद्धो नआवह इति द्वयमाख्यानि भवन्ति—इति वि० ।

‡ "सुसमिद्धो"—इति ऋ०-पाठः ।

¶ ऋ० वे० १, १, २४, १ ।

§ 'सुष्ठु समिद्धः सुसमिद्धः'—इति वि० । ऋग्वेदीय-पाठमवलम्ब्यैवाच प्रतीक-ग्रहणं कृतं सायणेन सुषमिद्ध इति, मूलपाठस्तु मूर्द्धन्य-मध्यः सुषमिद्ध इति "पूर्वपदात् (८, ३, १०६)"—इति च मम मतम् ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



दीयाय"* "हविष्मते" यजमानाय तदनुग्रहार्थं "देवान्" "आवह"। हे "पावक" शोधक! "होतः" होमनिष्पादकाग्ने! "यक्षि च" यज च†॥ [सुसमिद्धः—सम: क्रियाविशेषणत्वेन गति-सञ्ज्ञकत्वात् प्रादिसमासः, शोभन-वाचिनः सु-शब्दस्य तु "वि-शेषणं विशेष्येण बहुलम् (२, १, ५७)"—इति समिद्ध-पदेन कर्मधारयः समासः, सु-शब्दः प्रातिपदिक-स्वरेणान्तोदात्तः, "कर्मधारयेऽनिष्ठा (६,२,४६)"—इति पूर्वपदप्रकृतिस्वरत्वं, क्रि-या-विशेषणत्वे हि सु-शब्दस्य गतित्वात् प्रादिसमासे "गतिरनन्तरः (६, २, ४९)" इति "समो यदुत्तर इति समो यदुत्तरत्वं तदेव कृदुत्तर-प्रकृति-स्वरत्वेन (६, २, १३९) स्यास्यतीति सु-शब्दो-ऽनुदात्तः स्यात्। देवाँ अग्ने—"दीर्घादटि समानपादे (८, ३, ९)"—इति नकारस्य रुत्वम्, "अत्रानुनासिकः पूर्वस्य तु वा (८, ३, २)"—"आतोऽटि नित्यम् (८, ३, ३)"—इत्यनु-नासिकः। हविष्मते—हविरस्यास्तीति मतुप्, "तसौ मत्वर्थे (१,४,१९)"—इति भत्वेन पदत्व-बाधितत्वात् रुत्वम्। होतः—पावक—एतच्छब्दयोरामन्त्रितयोः पृथक् पृथगेव क्रियान्वये परस्पर-सामर्थ्यात् पराङ्गवद्भावाभावान्न तन्निबन्धनमैकस्वर्यम् नच द्वितीयस्यामन्त्रितस्याष्टमिक-(८, १, १९)—निघातेनैकस्वर्यम् "आमन्त्रितं पूर्वमविद्यमानवद् (८, १, ७२)"—इति पूर्वस्या-विद्यमानत्वेन पदादपरत्वात् पादादित्वाच्च परस्य सामानाधि-करण्येऽपि होतरित्यस्य विशेषत्वे समानमेवाविद्यमानवत्वम्,

* 'नः—अस्मभ्यम्'—इति वि०।

† 'यक्षि च—यच भचणे, देवानावह भचय च'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अतएवाविद्यमानवत्त्वात् सामर्थ्येपि न पराङ्गवद्भाव,—इति नैक-स्वर्य-सिद्धिः, अतो होतरिति विशिष्यम्; अतः पुनातीति पावकः —इत्यवयव-प्रसिद्ध-स्वीकारेण विशेषणत्वाद्धोतरिति विशेष्यम्, तच्च सामान्यवचनम् इति "नामन्त्रिते समानाधिकरणे (८, १, ७३)"—इत्यविद्यमानवत्त्व-प्रतिषेधात् पदात्परत्वादपादादित्वाच्च द्वितीयामन्त्रितस्याष्टमिक-निघातेन वा पराङ्गवद्भावे सति शेष-निघातेन वा सर्वानुदात्तत्व-सिद्धिः। यक्षि—"यजेर्लोपः सिपि बहुलञ्छन्दसि (२, ४, ७३)"—इति शपो लुक्, व्रश्चादिना (८, २, ३६) षत्वम्. "षढोः कस्सि (८, २, ४१)"—इति कत्वम्, सेर्ह्रिरादेशश्छान्दसत्वान्न भवति, सिपः पित्त्वेनानुदात्तत्वाद्धातुस्वरएव (६, १, १६२) शिष्यते, न च "तिङतिङः (८, १, २८)"—इति निघातः पूर्वस्य पावकेत्यामन्त्रितस्य विद्यमानवत्त्वेन पदादपरत्वात्, अतएव तस्याव्यवधायकत्वे होतरित्यपेक्ष्य निघातः स्यादितिचेत् न, यक्षि-पदापेक्षया होतरित्यस्यापि पूर्वत्वेनाविद्यमानत्वात्; ननु "नामन्त्रिते समानाधिकरणे (८, १, ७३)"—इति तस्य नित्यमविद्यमानत्वम्, न च पावक-पदस्याविद्यमानवत्त्वेन समानाधिकरण-परत्वाभावः; यक्षि-पदस्यैव हि कार्यं प्रति पावक-पदं पूर्वत्वादविद्यमानवत् स्यात्, होतः-पदमविद्यमानवत्त्व-प्रतिषेधं प्रति तु परत्वाद्विद्यमानवदेवेति भवत्येव होतरित्यस्याविद्यमान वत्त्व-प्रतिषेधः, अतस्तस्याविद्यमानवत्त्वात्तदपेक्षया यक्षीति निघातः प्राप्नोत्येव? सत्यम्;——अत्र यक्षीत्यस्य च-शब्द-परत्वात् "चादिषु च (८, १, ५८)"—इति निघात-प्रतिषेधो भविष्यतीत्यदोषः ] ॥ १ ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीया।

१ २ २ १ ३ १ २
मधुमन्तन्तनूनपाद्यज्ञन्देवेषुनःकवे।

३ १ २ ३ १२
अद्याकृणुह्यूतये ॥ २* ॥

हे "कवे" मेधाविन्नग्ने! "तनूनपात्"†—एतन्नामकस्त्वम् "अद्य" अस्मिन् "नः" अस्मदीयं "मधुमन्तं" रसवन्तं "यज्ञं" यजनीयं हविः "देवेषु" "कृणुहि" कुरु प्रापयेत्यर्थः। किमर्थम्? "ऊतये" अस्मद्रक्षणाय॥

"ऊतये"-"वीतये"—इति पाठौ ॥ २ ॥

अथ तृतीया।

२ ३ १ २ ३ २ ३ २ ३ २ ३ १२ २र
नराशꣳसमिहप्रियमस्मिन्यज्ञउपह्वये।

१ २ ३ १ २
मधुजिह्वꣳहविष्कृतम् ॥ ३‡ ॥

"इह" देवयजन-देशे "अस्मिन्" वर्त्तमाने यज्ञे "नराशं-

---

* ऋ०वे० १, १, २४, १।

† "तनूनपादाज्यं भवति नपादित्यनन्तरायाः प्रजाया नामधेयं निर्णततमा भवति गौरत्र तनूरुच्यते ततो अस्यां भोगास्तस्याः पयो जायते पयस आज्यं जायते। अग्निरिति शाकपूणिरापोऽत्र तन्व उच्यन्ते तत अन्तरिक्षे ताभ्य ओषधिवनस्पतयो जायन्त ओषधिवनस्पतिभ्य एष जायते। * * *।"—इति निरु० दै० २, ५-६।

‡ ऋ० वे० १, १, २४, ३।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



सम्"*—एतन्नामकमग्निम् "उपह्वये" आह्वयामि। कीदृशम्? "प्रियं" देवानां प्रीति-हेतुं, "मधुजिह्वं" मधुर-भाषि-जिह्वोपेतं माधुर्य्य-रसास्वादक-जिह्वोपेतं वा, "हविष्कृतं" हविषो निष्पादकम् ॥ ३ ॥

अथ चतुर्थी।

१ २ ३ १ २ ३ १ २ ३ १   २ ३ १र   २र
अग्नेसुखतमेरथेदेवाꣳईडितआवह।
२ ३ २ ३ १ २
असिहोतामनुर्हितः ॥ ४† ॥ १

इदं-शब्दाभिधेय हे "अग्ने!" "ईड़ितः" अस्माभिः स्तुतः सन्‡ "सुखतमे" अतिशयेन सुख-हेतौ कस्मिंश्चित् "रथे" "देवान्" स्थापयित्वा कर्म-भूमौ "आ वह" [ इट्-शब्दाभिधेयत्वमंत्र सूचयितुमीडित इति विशेषणम् ]। "मनुर्हितः" 'मनुना' मन्त्रेन मनुष्येण वा यजमानादि-रूपेण 'हितः' अत्र स्थापितः त्वं "होता" देवानामाह्वातासि ॥ ४ ॥ १

---

* "नराशंसो यज्ञ इति कात्थक्यो नरा अस्मिन्नासीनाः शंसन्ति। अग्निरिति शाकपूणिर्नरैः प्रशस्यो भवति"—इत्यादि निरु० दै० २. ६-७।

† ऋ० वे० १, १, २४, ४।

‡ 'इडितः—प्रीणितः'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ यदद्येति तृचात्मकं द्वितीयं सूक्तम्,*

तत्र प्रथमा।

२ ३ २उ ३ २ १ १ २ ३ १ २ ३ २
यदद्यसूरउदितेनागामित्रोअर्यमा।

३ १ २ ३ १र २र
सुवातिसविताभगः ॥ १† ॥

"यत्" धनं "नः" अस्माकम् अपेक्षितं "तत्" "अद्य" अस्मिन् काले "सूरे" "उदिते" सति प्रातःसमये "अनागाः" पाप-हन्ता, "मित्रः", "अर्यमा", "सविता", "भगः" च—एतत् प्रत्येकं "सुवाति" प्रेरयत् [ अथवा अनागा मित्री अर्यमा भवतु, तदीप्सितं भगो भजनीयः सविता सुवाति प्रेरयतु ] ॥ १ ॥

अथ द्वितीया।

३ १ २ ३ २उ ३ १र २र
सुप्रावीरस्तुसक्षयःप्रनुयामन्त्सुदानवः।

२ ३ १ २ ३ १ २
येनोअꣳहोतिपिप्रति ॥ २‡ ॥

"सक्षयः" स-निवासः "सुप्रावीरस्तु" सुष्ठु प्रकर्षेण रक्षितास्तु [ प्र-शब्द आदरार्थः ]। "प्र" प्रकर्षेण "नु" क्षिप्रं भवत्विति शेषः। कदा ? इत्युच्यते— हे "सुदानवः" सुदानाः ! युष्माकं

* 'मैत्रावरुणसाम्नम्'—इति वि०।

† ऋ० वे० ५, ५, ८, ४।

‡ ऋ० वे० ५, ५, ८, ५।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"यामन्" यामनि गमने सति, कीदृशानां गमने ? ये यूयमागत्य "नः" अस्माकम् "अंहः" पापम् "अति पिप्रति" अतिपारयथ, तेषां गमनइति ॥ २ ॥

अथ तृतीया ।

१ १ ३ २ ३ १ २ ३ १ २ ३ २ ३ १
उतस्वराजोअदितिरदब्धस्यव्रतस्ययें ।

३ १र २र
महोराजानईशते ॥ ३ * ॥ २

"उत" अपिच "ये" मित्रादयस्त्रयः "स्वराजः" सर्वस्य स्वामिनः "अदितिः"† येषाञ्च माता, सन्ति ; ते "अदब्धस्य" अहिंसितस्य रक्षकस्य "महः" महतः‡ "व्रतस्य" अस्य कर्मणः¶ "राजानः" स्वामिनः, ते "ईशते" समर्था भवन्ति अभिमतं दातुमिति शेषः । [ अथवैवं योज्यम्—'ये' मित्रादयोऽदितिश्च 'अदब्धस्य' व्रतस्य 'स्वराजः' ईश्वरास्ते "महः" महतः अस्मदभिमतधनस्य "राजानः" स्वामिनः सन्तः "ईशते" अस्मभ्यं दातुम् ॥ ३ ॥ २

---

* ऋ० वे० ५. ५, ८, १ ।

† 'अदितिः—अदीनत्व-सम्पन्नाः-इति वि० ।

‡ 'महः—अभिमान-सम्पन्नाः'—इति वि० ।

¶ 'व्रतस्य—कर्मणः अन्नस्य वा'—इति वि० ।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



उत्त्वेति तृचात्मकं प्रथमं सूक्तम्,*

तत्र प्रथमा।

१ २ ५ १ २ ३ १र २र
उत्त्वामन्दन्तुसोमाःकृणुष्वराधोअद्रिवः।
१ २ ३ १ २
अवब्रह्मद्विषोजहि॥ १ †॥

हे इन्द्र! "त्वा" त्वां "सोमाः" "उत्" उत्कृष्टं "मन्दन्तु" मादयन्तु। हे "अद्रिवः!" वज्रवन्निन्द्र! त्वं "राधः" अन्नं "कृणुष्व" अस्मभ्यं कुरु। किञ्च "ब्रह्मद्विषः" ब्राह्मण-द्वेष्टॄन् "अव जहि"॥

"सोमाः"—"सोमा"—इति पाठौ॥ १॥

अथ द्वितीया।

२र ३ २ ३ ३ २ ३ १ २ ३ १ २
पदापणीनराधसोनिबाधस्वमहाँ२ असि।
१उ ३ २ ३ १ २
नहित्वाकश्चनप्रति॥ २ ‡॥

"पणीन्"¶ लुब्धान् "अराधसः" यष्टव्य-धन-रहितान् केवल-धनान् "पदा" पादेनातिक्रम्य "निबाधस्व" नितरां

---

* 'ऐन्द्रमाज्यम्'—इति वि०।

† छ० आ० ३, १, १. १ ( १ भा० ४०२५० ) = ऋ० वे० ६, ४, ४१. १।

‡ ऋ० वे० ६, ४, ४३, २।

¶ 'पणीन्—पणस्वभावान्'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



राधस्व । हे इन्द्र ! त्वं "महान् असि" "त्वा" त्वया "प्रति" प्रतिनिधि-सदृशः "कश्चन" कश्चिदपि देवोऽसुरो मनुष्यो वा "न हि" नास्ति खलु ॥

"पणीनराधसः"-"पणीरराधसः"—इति पाठौ ॥ २ ॥

अथ तृतीया ।

त्वमीशिषे सुतानामिन्द्र त्वमसुतानाम् ।
त्वꣳराजाजनानाम् ॥ ३ * ॥ ३

हे "इन्द्र !" "त्वं" "सुतानाम्" अभिषुतानां सोमानाम् "ईशिषे" ईश्वरो भवसि, तथा "त्वम्" "असुतानाम्" वर्त्तमानानाञ्च ईशिषे, किञ्च "त्वं" सर्वेषां "जनानां" "राजा" भवसि ॥ ३ ॥ ३

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य एकादशस्याध्यायस्य प्रथमः खण्डः† ॥ १ ॥

---

* ऋ० व० ६, ४, ४३, ३ ।

† 'इन्द्राग्न्योश्वागतमित्यस्यावाकसाम'—इति वि० अतः परं व्यवहार्थमिति शेषः । 'उक्थं प्रातःसवनम्'—इति च वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीय-खण्डे*--

आजागृविरिति तृचात्मकं प्रथमं सूक्तम्,

तत्र प्रथमा ।

१र २र उ १ २ ३ १ २ ३ १र
आजागृर्विर्विप्र ऋतम्मतीनाꣳ

२र ३ १ २ ३ १ २
सोमः पुनानो असदच्चमूषु ।

१ २ ३ १ २ ३ २ ३ १ २
सपन्ति यम्मिथुनासो निकाम।

३ १ २ ३ १ २ ३ १ २
अध्वर्यवो रथिरासः सुहस्ताः ॥ १ † ॥

"जागृविः" जागरणशीलः "ऋतम्" ऋतनां सत्य-भूतानां "मतीनां" स्तुतीनां "विप्रः" ज्ञाता स "सोमः" "पुनानः" पूयमानः सन् "चमूषु" चमसेषु "आ सदत्" आसीदति, "मिथु-नासः" परस्परं सङ्गताः, "निकामाः" नितरां कामयमानाः "रथिरासः" यज्ञ-नेतारः "सुहस्ताः" कल्याण-पाणयः "अध्व-र्यवः" पवित्रेण "यं" सोमं "सपन्ति" स्पृशन्ति [सप समवाये (भ्वा० प०)। 'सपतिः स्पृशति-कर्मा'--इति नैरुक्ताः‡ ]॥

"ऋतम्"-"ऋता"—इति पाठौ ॥ १ ॥

---

* 'इदानीं माध्यन्दिनं सवनमभिधीयते'—इति वि० ।

† ऋ० वे० ७, ४, १८, २ ।

‡ 'सपति'—इति परिचरण कर्मसु ३, ५) स्पर्शति-कर्मसु च (३, १४) इत्यपि निघण्टौ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीया।

१ १ २ २उ ३ १ २ १ २ २
सपुनानउपसूरेदधान

१२ २र३ १ २ ३ १२ १२
ओभेअप्रारोदसीवीषआवः।

३ २ ३ १ २ २ १ २ ३ १
प्रियाचिद्यस्यप्रियसासऊती

३ १२ २र३ २ ३१२ २र
सतोधनङ्कारिणेनप्रयᳪसत्॥ २ *॥

"पुनानः" पूयमानः "दधानः" यज्ञादि-कर्म-धारकः "सः" सोमः "सूरे" प्रेरके इन्द्रे "उप" गच्छति। किञ्च "उभे रोदसी" द्यावा-पृथिव्यौ "आ अप्राः" स्व-महिम्ना आ पूरयति। तथा"सोमः" "आवः"स्व-तेजसा मां विवृणोति [वृणोतेः "मन्त्रे घसेति (२, ४, ८१) च्लेर्लुक्,"छन्दस्यपि दृश्यते (६, ४, ७३)" —इत्यड़ागमः। "पूर्वपदात् (८, ३, १०६)"—इति स-इत्यस्य सांहितिकं षत्वम्] "प्रिया" [षष्ठ्या आकारः (७, १, ३९)] प्रियस्य "यस्य" "सतः" विद्यमानस्य सोमस्य [यद्वा, 'प्रिया' प्रियाणि प्रयच्छतः सोमस्य] "प्रियसासः" अत्यन्तं प्रियतमा धाराः "ऊती" ऊत्यै रक्षणाय भवन्ति "सः" सोमः "नः" अस्मभ्यम् "धनं" "प्रयंसत्" प्रयच्छतु [यच्छतेर्लेटि सिप्यड़ागमः]। तत्र दृष्टान्तः—"कारिणे न" यथा कारिणे भृतकाय भृतिं प्रयच्छति तद्वत्।

* ऋ० वे० ७, ४ १८, ३।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"दधानओमे"-"दधानोमे"—इति पाठौ, "सतोधनं"-"सतूधनम्"—इति च ॥ २ ॥

अथ तृतीया।

१ २ ३ १र २र ३ १ २ ३
स्ववर्द्धितावर्द्धनःपूयमानः

१ २ ३ २ ३ २ ३ १ २
सोमोमीढ्वाᳬअभिनोज्योतिषावीत्।

१ २ ३ १ २ ३ १ २ १ २
यत्रनःपूर्वपितरःपदज्ञाः

३ १ २ ३ १र २र ३ २
स्वर्विदोअभिगाअद्रिमिष्णन् ॥ ३ * ॥ ४

"वर्द्धिता" देवानां स्व-कला-प्रदानेन वर्द्धयिता "वर्द्धनः" स्वयं वर्द्धमानः "पूयमानः" पवित्रेण पूयमानः "मीढ्वान्" कामानां सेक्ता "सः" सोमः "नः" अस्मान् "ज्योतिषा" स्व-तेजसा "अभ्यावीत्" अभिरक्षतु "यत्र" यस्मिन् सोमे प्रसन्ने सति "पदज्ञाः" पणिभिरपहृतानां गवां पदानि जानन्तः "स्वर्विदः" सर्वज्ञाः स्वर्यं जानन्तो वा "नः" अस्माकं "पूर्वे" चिरन्तनाः "पितरः" अङ्गिरसः "गाः" पशून्† लब्धुम् "अद्रिम्" शिलोच्चयम् "अभि" लक्ष्य गन्तुम् "इष्णन्" ऐच्छन् ॥

"यत्रनः"-"येनानः"—इति पाठौ, "इष्णन्"-"ग्मन्"—इति च ॥ ३ ॥ ४

---

* ऋ० वे० ७, ४, १८, ४।

† 'गाः-उदकानि रश्मयो वा'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



॥ गौरीवित्तम् ॥ आजा । गृवा३यिः । विप्रश्चताम् । मतीनाꣳसोमःपुनानोअसदच्चमूषू२३ । सापन्तिया ३१ २३म् । मिथुनासोनिकामापुध्वर्य्या । वोरथिरा३१२३ । सःसोवा । हाउस्तोईहायि ॥(१) सपु । नाना३ः । उपसूरायि । दधानःओभेअप्रारोदसीवीषआवार२३ः । प्रायाचिद्या३१२३ स्यप्रियसासजतीसाउतोधा । नाङ्का रिणा३१२३यि । नप्रोवा । साउꣳसोईहायि ॥(२) सब र्हिता३ । वर्द्धनःपू । यमानःसोमोमीढाꣳअभिनोज्यो तिषावार२३षित् । याचनःपू३१२३ । वंपितरःपदत्वाःस्वउ वर्वायि । दोअभिगा३१२३ः । अद्रोवा । आउयिष्मो ईहायि(३) ॥ १४ * ॥ [१]

॥ अशनम् ॥ आजा । गृविर्विप्रश्चताम् । मती३

---

* ऊ० गा० ६प्र० १ख० १४सा० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ २ १ १ १ १ १ २ ३ ४ ५ १
नाम् । सोमःपुना । नो३अस । द्वमूषू । सपन्ति

२ ० २ १ २ १ २ १ २
यम्मिथुनासो । निक्का२३माः । अध्वर्य्यवो । रथिरा ।

२ २ ४ १ २ १२ २
सा३४३ः । सू३द्दा५स्ता६५६ः ॥(१) सापू । नानउपस्

२ २ २ १२२१ २ १२ २ ३ ४
रे । दधा३नाः । अभिअप्राः । रो२द्सी । वीषआ

५ १२ ० २ १२११
वाः । प्रियाचिद्यस्यप्रियसा । सजर२३तौ । सतोधनाम् ।

२२१२ २ २ ४ १ २
कारिणे । ना३४३ । प्रा३या५ꣳसा६५६त् ॥(२) सावा ।

१२ २ २ २ १२ १२ १ २ १
धितावर्द्धनःपू । यमा३नाः । सोमोमीड्ढाꣳ । अभि

२ ३ ४ ५ १ २ २ १ ० २
नः । ज्योतिषावीत् । यत्रनःपूर्वंपितराः । पदा२३ज्ञाः ।

१ २ १ २ १ २ २ २ ४
स्वर्विदो । अभिगाः । आ३४३ । द्रा३यिमा५यिष्णा

६५६न् ३) ॥ ५ * ॥ [२]

४२ ३ ५ २ ४
॥ यज्ञायज्ञीयम् ॥ वाजा५ऽगृ । वा३र्वा३यिप्रब्र

५ १ २ २ २ २२ २ १ २ २
ताम् । मातीनाꣳसोमःपुनानोअसा । दा३क्षामू३षू ।

---

* ऊ० गा० १०प्र० २ख० ५गा० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ १ र र र २ १
सपार२न्तियम्मिथुनासोनि । कामार२३आ । ऊम्मायि ।
२ २ १ र ३ २ १ १ १ २
ध्वा३य्यों । वोरथिद्दासःसू२इस्ताउ ॥(१) तासाः । पुना
र र र र र र र २ १ २ २
नउपस्द्धरे दधानओभेअप्रारोदसी । वी३ षाआ ३ थाः ।
१ १ र र २ १
प्रिया२चिद्यस्यप्रियसासः । ऊती२३मा । ऊम्मायि ।
२ २ १ र र ३ १ २ १
तो३धा । नाह्वारिणेनप्रा२यच्छ्उ ॥(२) सात्वाः । वर्द्धि
र र र र र र र २ १ २ २
तावर्द्ध नःपूयमानःसोमोमीढ्वाअभिनो । ज्यो३तीषा३वी
१ १ र र २ १
त । यत्रा२नःपूर्वेपितरःप । दज्ञा२३ःसू । ऊम्मायि ।
२ २ १ र ३ २ १ १
वा३र्वायि । दोअभिगाआद्रा२यि । मिष्णाउ । वा२३
२ १
४५(३) ॥ १२* ॥ [३]

३र ४र ३ ४ ५ २ र १
॥ गोष्टङ्गम ॥ आजागृविर्विप्रः । ऋता३म । मा
र ५र र ४ ५ १र र
२३४ । तीन्द्रसोमः । पूना । नोअसदच्चमूषुसपन्ति
र र १ १ र
यम्मिथुनासोनिकामा२ध्वर्य्यो२ । दा२ऊऊवाहि । वोरा

* ऊ० गा० १९प्र० २ख० १२सा० ।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ २ १ ५ ४ ५
यि। रास:सोवा३ओ२३४वा। हा५स्तो६ चायि॥(१)

३ ४ २२४ ५ ३२ २ १ २ ५ २ २
सपुनानउप। स्वरा३यि। दा२३४। धानओभेञ्ज।

४ ५ १२२ २ २ २ २२ १२
प्रारो। दसीवीषआव:प्रियाचिद्यस्यप्रियसासजतीसा२ती

१ २ २ १ ५
धा२। चा२ऊऊवायि। नक्कारिणेनप्रोवा३ओ२३४वा।

४ ५ २४ ३२४५ ३२ १
या५ऽसो६हायि॥(२) सवर्द्दितावर्द्धं। न:पू३। या२३

२५ २ २ २ ४ ५ १२ २ २२
४। मान:सोमोमी। द्धाऽआ। भिनोज्योतिषावीद्य

२२ २ १ १
त्तन:पूर्वेपितर:पदज्ञा:स्व२र्वा२यि। चा२ऊऊवायि।

२ २ २ १ ५ ४ ५
दोऽभिगाअद्रोवा३ओ२३४वा। आ५यिष्णो६हा

यि(३)॥१०*॥[४]४

अथ माचिदन्यदिति प्रगाथात्मके द्वितीयसूक्ते—

प्रथमा।

१ २३१ २२ ३१२ ३ १ १
माचिदन्यद्विशऽसतसखायोमारिषण्यत।

१ २ १ २ ३ १ २ ३ १ २ ३ १ २२ ३ १ २
इन्द्रमित्स्तोतावृषणऽसचासुतेमुहुरुक्थाचशऽसत॥१†॥

---

* ऊ० गा० १६प्र० २ख० १०सा०।

† छ० आ० ३, ६, ५, १० (१भा० ५०० पृ०) = ऋ० व० ५, ७, १०, १।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



हे "सखायः" समान-ख्यानाः स्तोतारः! इन्द्र-स्तोत्रात् "अन्यत्" स्तोत्रं "मा चित् विशंसत" मैवोच्चारयत, "मा रिषण्यत" मा हिंसिता भवत अन्यदीय-स्तोत्रोच्चारणेन वृथोपक्षीणा मा भवत, "सुते" अभिषुते सोमे "वृषणं" कामानां वर्षितारम् "इन्द्रम् इत्" इन्द्रमेव हे ममस्तोत्रादयः! "सचा" सह "स्तोत" स्तुत। हे मगास्मादयः! "उक्था च" उक्थानि शस्त्राणि च इन्द्रविषयाणि यूयं "मुहुः" पुनः पुनः "शंसत्" ॥१॥

अथ द्वितीया।

३　१ २　३ १ २ ३ १ २ ३ १　२र　३ १ २
अवक्रक्षिणंवृषभंयथाजुवङ्गान्नचर्षणीसहम्।
३ १ २　३ १ २　३ १　२र　३ १ २
विद्वेषणꣳसंवननमुभयङ्करंमꣳहिष्ठमुभयाविनम् ॥२॥*॥५

"वृषभं यथा" वृषभमिव "अवक्रक्षिणम्" अवकर्षणशीलं शत्रूणां हिंसितारं "जुवं" शीघ्रकारिणं "गां न" गामिव वृषमिव† "चर्षणीसहम्" मनुष्याणां शत्रुसुतानामभिभवितारं, "विद्वेषणं" विद्वेष्टारं शत्रूणां, "संवननं" सम्यक् सम्भजनीयं स्तोतृभिः "उभयङ्करं" निग्रहानुग्रहयोरुभयोः कर्त्तारं "मंहिष्ठं" दातृतमम् "उभयाविनं" दिव्य-पार्थिव-लक्षणेन उभय-विधानेनोपेतम् [ यद्वा, स्थावर-जङ्गम-रूपेण द्विपकारेण रक्षितव्येनोपेतम्। अथवा उभयविधैः स्तोतृभिर्द्वेष्टृभिश्चोपेतम् ]—एवंविध मिन्द्रमितस्तोतेति पूर्वेणान्वयः ॥

---

* ऋ० वे० ५, ७, १०, २।

† 'गां न—न शब्द उपमार्थीयः। गामिव पृथिवीमिव'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"जुवं"-"जुरं"—इति पाठौ, "संवननं"-"संवनना"—इति च॥ २॥ ५

२र १२ १ ३२ ४
॥ मैधातिथम्॥ माचिदन्यद्वोहायि। विशा२ंसा
४ १२ १ २ १ २
ता। सखाया२हो१यि। माऔ३हो। रायिषाउवा।
१ २ १ २र २ २ १२
ण्याताउवा। इन्द्रमित्स्तोतावृषणाऔ३हो। साचाउ
१२ १ २र २ २ १ १२१
वा। सुताउवा। मुहुरुक्थाऔ३हो। चशा। औहो।
१२१ ५ ४ ५ २ १२
वाहो३४वा। सा५तो६हायि॥(१) मुहुरुक्थोहायि।
३१ ४ ५ १ २ १ २
चशा३ंसाता। मुहुरु३हो१। क्थाऔ३हो। चाशा
१२ १ २ २ १२
उवा। साताउवा। अवक्रक्षिणंवृषभाऔ३हो। याथा
१२ १र २ २ १ २र १
उवा। जूवाउवा। गान्नचाऔ३हो। षणा। औहो।
२र ५ ४ ५ २र १२
वाहो३४वा। सा५हो६हायि॥(२) गान्नचोहायि।
३२ ४ ५ १र २ २ १
षणा३यिसाहास्। गान्ना२हो१यि। चाऔ३हो। षा
१ १२ १र २ २
णाउवा। साहाउवा। विद्वेषणंसंवननमाऔ३हो।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ २ २ १ १ २ १
भायाउवा । काराउवा । काराउवा । मर्ऽहिष्ठमाऔ

२ १ २र १ ३र ५ ४
इहो । भया । औहो । वाहो२३४वा । वा५यिनो

५
६हायि(३) ॥ १५* ॥ [१] ५

अथ उदुत्यइति प्रगाथात्मकं तृतीयं सूक्तम्,

तत्र प्रथमा ।

१ २ १र २र ३ २ ३ १ २
उदुत्येमधुमत्तमागिरःस्तोमासईरते ।

२ १ २ ३ १र १र ३ २ ३ १ २
सत्राजितोधनसाअक्षितोतयोवाजयन्तोरथाइव ॥ १† ॥

"त्ये" ते प्रसिद्धाः "मधुमत्तमाः" अतिशयेन मधुराः "गिरः" स्तुति-रूपया वाचा "स्तोमासः" त्रिवृदादि-स्तोमाश्च "उदीरते" हे इन्द्र ! त्वामुद्दिश्य उद्गच्छन्ति ऊर्द्धं प्रसरन्ति [ईर गतौ अादादिकः ( आ० ) ] । तत्र दृष्टान्तः—"सत्राजितः" सहैव शत्रून् जयन्तः "धनसा" धनानि सम्भजन्तः [ वन षण सम्भक्तौ ( भ्वा० प० ), "जन-सन-खन-क्रम-गमो विट् ( ३, २, ६७ ), "विड्वनोरनुनासिकस्यात् ( ६, ४, ४१ )"—इत्यात्वम्, "अक्षितोतयः" अक्षिताः क्षय-रहिताः ऊतयो रक्षा येषां ते तथोक्ताः [ क्षियो भावे निष्ठा, "निष्ठायामण्यदर्थे ( ६, ४, ६० )"—इति

* ऊ० गा० ६प्र० १ख० १५सा० ।

† छ० आ० ३, २, १, ९ ( १भा० ५१९ पृ० ) = ऋ० वे० ५, ७, १७, ५ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



पर्युदासाद्दीर्घाभावः अतएव "श्वियो दीर्घात् (८, २, ४६)"—इति निष्ठा-नत्वाभावश्च "वाजयन्तः" वाजमन्नमिच्छन्तः, ग्रपि च "न छन्दस्यपुत्रस्य (७, ४, ३५)"—इतीत्व-दीर्घयोः प्रतिषेधः ], एवङ्गुणविशिष्टाः "रथाइव" ते यथा विविधमितस्तत उत्तिष्ठन्ति तद्वदुदीरतइत्यर्थः ॥ १ ॥

अथ द्वितीया

१ २ ३१२२ १२ ३ २३२ ३ १२
कण्वाइवभृगवःसूर्य्याइवविश्वमिद्धीतमाशत।
२ ३ १ २ ३२ ३ १२ ३१२
इन्द्रꣳस्तोमेभिर्महयन्तआयवःप्रियमेधासोअस्वरन्॥२*॥६

"कण्वाः" कण्व-गोत्रोत्पन्ना ऋषयः "इव" स्तुवन्तः "भृगवः" भृगु-गोत्रोत्पन्ना ऋषयः† "धीतम्" आध्यातम् "विश्वमित्"‡ व्याप्तं तमेव "इन्द्रम्" "आशत" आनशिरे "सूर्य्याइव" यथा सूर्य्य-रश्मयः सर्वं जगद् व्याप्नुवन्ति, तद्वत्। अपिच "प्रियमेधासः" प्रिययज्ञाः एतत्सञ्ज्ञका वा¶ "आयवः" मनुष्याः तमेवेन्द्रं "महयन्तः" पूजयन्तः "स्तोमेभिः" स्तोत्रैः "अस्वरन्" अस्तुवन् [ स्वृ शब्दोपतापयोः भौवादिकः ( प० ) ॥ "आशत"-"आनशुः"—इति पाठौ ॥ २ ॥ ६

---

* ऋ० वे० ५, ७, २८, १।

† अत्राह यास्कः—"अर्चिषि भृगुः सम्बभूव भृगुर्भृज्यमानो न देहे"—इति निरु० नै० ३, १७। 'भृगवः—भर्जनकराः सूर्य्याइव यथा आदित्य-रश्मयः'—इति वि०।

‡ 'इत्—इति पाद-पूरणः'—इति वि०।

¶ अत्राह यास्कः—"प्रियमेधः प्रिया अस्य मेधाः"—इति निरु० नै० ३, १७।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५ ४ २ ४ ५ ४ ५ १
॥ अभीवर्त्तम् ॥ उदू३त्ये३माधुमत्तमोवा। गायिर
२र र १ २ १ र २
स्स्तोमा। सआयिरा१ना २यि। सान्नाजिती३१२३४।
३ ४र ५ २ १ २ र १ २ ३ १
धनमाअ। चितोता१या २ः। वाजाया१न्तार२ः। रथाइ:।
१ ३ १ १ १ १ ५र ४ २ ४ ५र ४
आर२३४५यि। वा२ ३ ४ ५ ॥(१) वाजा३रा३न्तोरथाइयो
५ १ २ १ २ १ र २
वा। बाजयन्तः। रथाआ१यिवा २। काण्वाइवा३१२३
३ ४ ५र २ १ २ १ २
४। भृगवःसु। रियाआ१यिवा २। विश्वामा१यिद्धी२।
१ २ १ ३ १ १ १ १ ५ ४ १ ४
तमा३। स्मा२३४५। ता२३४५ ॥(२) विश्वा३मा३यिद्धी
५र ४ ५ १ २र १ २ १
तमाअतोवा। वायिश्वमिद्धी। तमाअता २। आयिन्द्र९
र २ ३ ४५ २ १ २ १
स्तोमा३१२३४यि। भिर्मद्दय। तआया१वा २ः। प्रिया
३र २ १ ३ १ १
मा१ यिधा २। सोआ ३। स्वा २ ३ ४ ५। रा २ ३
१ १
४ ५न्(३) ॥ १६* ॥ [१] ६

---

* ऊ० गा० ६प्र० १ख० १६सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ पर्य्यूष्विति तृचात्मकं चतुर्थं सूक्तम्—

तत्र प्रथमा।

२ ३ १ २र ३ १ १ ३ १ २ ३ १ १ ३ १ २
पर्य्यू षुप्रधन्ववाजसातयेपरिवृत्राणिसक्षणिः।
३ २ ३ १ २ ३ १ २
द्विषस्तरध्याऋणयानईरसे ॥ १* ॥

हे सोम! "सु" सुष्ठु "वाजसातये" अस्मभ्यमन्नदानायैव "परि प्रधन्व" परितः प्रगच्छ [ यद्वा, "वाजसातये" अन्नस्य लाभाय सङ्ग्रामं प्रगच्छ ]। किञ्च "सक्षणिः" सहनशीलस्त्वं "वृत्राणि" शत्रून् परिगच्छ। तदेवोच्यते—"नः" अस्माकम् "ऋणया" ऋणानां यापयिता विनाशयिता त्वं "द्विषः" शत्रून् "तरध्यै" तरीतुं हन्तुम् "ईरसे" परिगच्छति॥

"ईरसे"-"ईयसे"—इति पाठौ॥ १॥

अथ द्वितीया।

१ २ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ १ १
अजीजनोह्यिपवमानसूर्य्यंविधारेशक्मनापयः।
१ २ ३ १ १ ३ १ २
गोजीरयारꣳहमाणःपुरन्ध्या ॥ २† ॥

हे "पवमान" सोम! त्वं "पयः" पयस उदकस्य "विधारे" विधारके अन्तरिक्षे "शक्मना" सामर्थ्येन बलेन "सूर्य्यम्"

* छ० आ० ५, १, ५, २ (१ भा० ८७१ पृ०)=ऋ० वे० ७, ५, २२, १।
† ऋ० वे० ७, ५, २१, २।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"अजीजनः हि"* उत्पादितवान् भवसि खलु। कीदृशः? "गोजीरया" स्तोतृभ्यो गवां प्रेरकेण स्तोतृणां प्रेरित-पशुकेनेत्यर्थः, तादृशेन†; "पुरन्ध्या" बहुविध-प्रज्ञानेन युक्तः‡ "रंहमाणः" वेगं कुर्वाणस्त्वं सूर्यमजीजनः ॥ २ ॥

अथ तृतीया ।

अनु हि त्वा सुतꣳ सोम मदामसि ॥ ३ ¶ ॥ ७

—इति तृतीयाया ऋचः प्रतीकमिदम् । सा चान्यत्र ( ५,१, ५. ६ = १भा० ८०७पृ० ) व्याख्याता ॥ ३ ॥ ७

॥ श्यावाश्वम् ॥ परा३१यि । ऊ३षू । प्रध । न्वा ३वा । एहियाजा । सातयेपा । रि । वृत्रा२। एहिया २ । णिसञ्चणायिर्दा३यिषा३ः । ता२३४रा । ऐहा २यि । एहिया २ । धियाऋणयाना३ई३ । रा३४५सो ६हायि ॥(१) अजा३१यि । जा३नो । हिप । वा३मा ।

* 'हि-इति पद पूरणः'—इति वि० ।

† गोजीरया रंहमाणः—गोजीरेण संयुक्तया दध्ना वा मिश्रया, रंहमाणः वेगेन गच्छमानः'—इति वि० ।

‡ 'पुरन्ध्या—उदकेन' —इति वि० ।

¶ छ० आ० ५, १, ५. ६ (१ भा० ८०७पृ०)=ऋ० वे० ७, ५, २२, १।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५ १ २ २र १र १र
एहिया। ना। हरियंवायि। धा। रैश्रा२। एहिया

र १ २ ४ ५ २र
२। क्ष्मनापृषोगो३जी३जी३। रा२३४या। ऐहा२यि।

१र १र २ ४
एहिया२। र९हमाणाःपू३ रा३म्। धा३४५यो६

४ ३ २ २ ४ ५ २ ४
हायि॥(२) अनु३१। हा३यित्वा। सुतम्। सो३म

५ १ र २र १ १र
एहिया। षा। दामसिमा। हे। समा२। एहिया

र १ २ ४ ५ २र
२। यंराजियेवा३जा९३। आर२३४भी। ऐहा२यि।

१र १र ५
एहिया२। पवमानाप्रः३गा३। हा३४५सो६हा

यि(३)॥ १८ *॥ [१]

१ र २ १ र
॥ आन्धीगवम्॥ पर्य्युषुप्रधा१न्वावा। जसात।

र १ १ १र २ १ २ १ २ ३ १ १
येपा२३री। ऊम्मा२१ऽ३। वृत्राणिसत्त्वणिर्द्विषस्तरा२३

१ १ १ १ २ १ २ १ २
४५। धारया३उवार्णा२या। ना२३ई। रसा। औ

४ ५ २ र र २ २
३होवा॥(१) अजीजनोह्विपा१वामानन्हरि। षंवा२३

---

* ऊ० गा० ६प्र० १ख० १८सा०



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



र १ २र १ २र १र र ३ १ १ १ १
यिधाऊम्मा २१ऽ२ । रेभक्मनापयेगोजीरयार ३ ४ ५ ।

१ २ २ २ १ १
रा१हा३उवा । मा२पगम् । पू२३राम् । धिया । औ

४ ५ २ र २ १र
३होवा ॥(२) अनुह्वित्वासुता१सोमा । मदाम । रु

२ १ १र २र ११ र २ ३ १ १
मा२३हे । ऊम्मा २१ऽ३ । समर्याराज्येवाजा१अभीर२३

१ १ २ २ १ १ १ २
४५ । पावा३उवा । मा२ना । प्रा२३गा । हसा । औ

४ ४
३होवा । होऽ५ई । डा(३) ॥ १८* ॥ [२]

२ र ४ २ ४
॥ विराट्सुत्रामदेव्यम् ॥ पाऽ५रि । ऊषू ३ प्रा३ध

र ५ १ र २ र १ २ १र २ १ १ १
न्वावा । जा । सातयेपरिवृत्राणिसत्तणिर्दि षस्त । रा ।

२ र २ १ र र र ४ १
औ३होवायि । जा । सातयेपरिवृत्राणिसक्षणिर्दिषस्त ।

२ र २ १ २ ३ र २
रा । औ३होवायि । धियार३क्षणयाः । नऔहो३ ।

१ १ २ ३ र ४
ऊम्मा २ । राऽ२सो३५वायि ॥(१) आऽ५जी । जनो३

४ ५ १ र १ १र २र १ २र १ २र १र २र १
यिपवमा । ना । हरियं विधारेभक्मनापयेगोजीर ।

---

* ऊ० गा० ६प्र० १ख० १९गा० ;



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



या। औ३होहायि। ना। हरियं विधारे ग्राक्मनापयोगो

जीर। या। औ३होहायि। र(उ)हा२३माणः। पुरी

हा३। ऊम्मा २। धा॒ऽ२यो३५हायि ॥(२) आऽ५नु।

हित्वा३ह्व३त(उ)सोमा। मा। दामसिमहेसमर्ध्य राज्ये

वाजा(उ)अ। भा। औ३होहायि। मा। दामसिमहेसम

र्ध्य राज्येवाजा(उ)अ। भा। औ३होहायि। पवा२३मा

माना। प्रगोहो ३। ऊम्मा २। हाऽ२सो ३ ५ हा

यि(३) ॥ ८* ॥ [३]

॥ गौरीवितम् ॥ परि। ऊषू३। प्रधन्वावा। जसा

तयेपरिवृत्रा२३। णायिसत्तणा३१२३यिः। द्विषा५स्तरा।

ध्याऋणया३१२३ः। नओवा। रा५सोइहायि(१) ॥ ५† ॥ [४]

---

* ऊ० गा० १प्र० २ख० ८गा० ।

† ऊ० गा० १०प्र० १ख० ५गा० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



॥ ओकोनिधनम् ॥ अजा३यिंजनोह्विपवमा। नसू।रियंविधारेभक्त्मना २ पाया २ः। गोजा२यिराया२। र(ं)हमा२३४णाः। पुरम्। धा२या२३४औहोवा। औहोवा। ओ२३४काः(२) ॥ ६ * ॥ [५] ७

अथ परिप्रधन्वेति-त्टचात्मकं पञ्चमं सूक्तम् -

तत्र प्रथमायाऋचः

परिप्रधन्व ॥ १ † ॥

—इति प्रतीकमिदम्। सा चान्यत्र (५, २, ५, १—२भा० ८६८पृ०) व्याख्याता ॥ १ ॥

अथ द्वितीया।

एवामृतायमहे क्षयाय

सशुक्रोअर्षदिव्यःपीयूषः ॥ २ ‡ ॥

---

* ऊ० गा० २०प्र० २ख० ६सा०।

† छ० आ० ५, १ ५, १ ( २भा० ८६८पृ० )=ऋ० वे० ७,५,२०,१।

‡ ऋ० वे० ७, ५, २०, २।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



हे सोम! "शुक्रः" दीप्तः "दिव्यः" दिवि भवः "पीयूषः" देवैः पातव्यः "सः" त्वम् "अमृताय" अमरणाय "महे" महते "क्षयाय" निवासाय च "एव अर्ष" एवं पवस्व क्षर॥२॥

अथ तृतीया।

२ २ २ १ २ ३
इन्द्रस्तेसोमसुतस्यपेयात्

२ ३ १ २ ३ १ २ ३ २
क्रत्वेदक्षायविश्वेचदेवाः॥ ३ *॥८

हे "सोम!" "सुतस्य" अभिषुतस्य "ते" तव स्वभूतं (रसमिति शेषः) "इन्द्रः" "पेयात्" पिबतु [पिबतेराशीर्लिङि रूपम्]। किमर्थम्? "क्रत्वे" क्रतवे प्रज्ञानाय "दक्षाय" बलाय "च" किञ्च, अमी "विश्वे" सर्वे "देवाः" च त्वदीयं रसं पिबन्तु॥

"पेयात्"-"पेयाः"—इति पाठो॥ ३॥ ८

॥ वाङ्निधनंसौहविषम्॥ प। यैंपारी। प्रधन्वा।

२ १ र र २ १ २र १
होवा३होयि। इन्द्रायसोमा। होवा३होयि। स्वादु

र २ १ र र ३ ४ ४
र्मित्राया। होवा३हो२३यि। पूष्णेवा३ओ२३४वा। भ

* ऋ० वे० ७, ५, २०, २।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



गा५याउ ॥(१) एव। एश्रायिवा। एव। एश्रायिवा। अमृतायाया। होवा ३ होयि। मद्वेत्त्वयाया। होवा ३ होयि। सभुक्रौअर्षा। होवा३हो२३यि। दिव्यौवा ओ२३४वा। पीयू५षाउ ॥(१) इन्द्रः। एश्रायिन्द्राः। इन्द्रः। एश्रायिन्द्राः। तेसोमा। होवा३होयि। सुतस्यपेयात। होवा३होयि। क्त्वेदत्त्वाया। होवा ३ हो २ ३ यि। विश्वौवाओ २ ३ ४ वा। वदा५यिवाउ। वा(३) ॥ २०* ॥ [१]

॥ वारवन्तीयम् ॥ परिप्रधाऔहोहायि। न्वाई२३४न्द्रा। यसोमा२३४हायि। स्वादुर्मित्रा३३। औहोवा। इहा२३४हायि। उक्ष्वा२३४या। पू। ष्णायिभगा३४। औहोवा। इहा२३४हायि। औहो३१२३४। या। ए

* क० गा० ६प्र० १ख० २०सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



हियाइहा ॥(१) एवाम्हतामौहोहायि। यामार३४हे। क्षयायार३४हायि। मघुङ्क्तोम्रा३४। औहोवा। इहा र३४हायि। उक्तवार३४र्पा। दित्याःपीयू३४। औहो वा। इहार३४हायि। औहो३१२३४। षाः। एहिया इहा ॥(२) इन्द्रस्तेमाम्रौहोहायि। माव्व३४ता। स्व पेयार३४द्धायि। क्रत्वेदचा३४। औहोवा। इहा२३ हायि। उक्तवार३४या। वि। स्वायिचदा३४। औहो वा। इहार३४हायि। औहो३१२३४। वा। एहियाइ हा। होंपूई। डा३)॥ १०* ॥ [२]

॥ सफम॥ परिप्रा३धान्वाई२३४न्द्रा। यसोमार३। स्वा३२३४दुः। मित्रा। यपूष्ण३भा३। गा३४पुयोइहा यि(३)॥ ८ † ॥ [३]

---

* ऊ० गा० ६प्र० २ख० १०सा०।

† ऊ० गा० १०प्र० १ख० ८सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



॥ वाजदावर्यम्॥ परिप्रधा। न्वार२ई२३४द्रा। या२सो२३४मा। स्वा२दूः। मा२३यित्रा। या२पू। स्व्भो२३४वा। गा५योऽ६हायि॥(१) एवाम्हता। वा२मा२३४च्चे। चा२या२३४या। सा२भू। क्रो२३आ। षा२हायि। व्यःपो२३४वा। यू५षोऽ६हायि॥(२) इन्द्रस्तेसो। मा२सू२३४ता। स्या२पे२३४यात्। क्रा२त्वे। दा२३क्ता। या२वायि। श्व चो२३४वा। दा५यिवोऽ६हायि(३)॥ ७*॥ [४]

॥ स्वर्निधनम्॥ परी३चोयि। प्रधा२३४न्वा। इन्द्रा३यो। यसो२३४मा। स्वादू३र्होयि। मित्रा२३४या। पूष्णे३चोयि। भगा२३४या। पूष्णे भगाय। पूष्णा३४३। हो३४३यि। भा३गापूया६

---

* ऊ० गा० १२प्र० १ख० ७सा०।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५६ ॥(१) एवा३होयि । अमृता२३४या । मद्दे३होयि । क्षया२३४या । समृ३हो । कोआ२३र्षा । दिव्या३हो यि । पीयू२३४षाः । दिव्यःपीयूषः । दिव्या२३४३ः । हो२४३यि । पो३यू५षा६५६ः ॥(२) इन्द्रा३हो । तेसो २३४मा । सुता३हो । स्पर२३४यास् । क्रत्वे३होयि । दक्षा२३४या । विश्वे३होयि । चदा२३४यिवाः । विश्वे चदेवाः । विश्वे३४३ । हो३४३यि । चा३दा५यिवा६५ ६ः । ए३ । सुवर्ज्योतिः२३४५(३) ॥ ४* ॥ [५]

॥ वाजजित् ॥ परिप्रधन्वा । होवा३होयि । इन्द्रा यसोमा । होवा३होयि । स्वादुर्मित्राया । होवा ३ होयि । पूष्णेभगाया । होवा३हो२ । वा २ ३ ४औ होवा ॥(१) एवाम्रुताया । होवा३होयि । महेक्षया

---

* ऊ० गा० १४प्र० १ख० ४गा० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



या। होवा३होयि। सप्नुकोअर्षा। होवा३होयि।
दिव्यःपीयूषाः। होवा३होर२। वा २ ३ ४ औहोवा॥
इन्द्रस्तेसोमा। होवा३होयि। सुतस्यपेयात्। होवा
३होयि। क्रत्वेदक्षाया। होवा३होयि। विश्वेचदेवाः।
होवा३होर२। वा२३४औहोवा। वाजीजिगीवाविश्वाध
ना२नी२३४५(२)॥ ६*॥ [६]

॥पौष्कलम्॥ परिप्रा३ध। न्वाइ२३४न्द्रा। यसो।
सा२खा२३४दुः। मित्रा। या२३४५। पू६५६। णा
गाया२३४५(१)॥ १८†॥ [७] ८

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य एकादशस्याध्यायस्य
द्वितीयः खण्डः॥ २॥

---

* ऊ० गा० १७प्र० २ख० ६सा०।

† ऊ० गा० ११प्र० १ख० १९सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ तृतीय-खण्डे—

सूर्य्यस्येवेति तृचात्मकं प्रथमं सूक्तम्,

तत्र प्रथमा।

१२ २१२ ३१२
सूर्यस्येवरश्मयोद्रावयित्नवो।

३११ ३११ ३१२
मत्सरासः*प्रसुतःसाकमीरते।

११३ २३ ३१२ ३२३
तन्तुन्ततम्परिसर्गासआशवो

१२३२२ ३२३ २३२
नेन्द्रादृतेपवतेधामकिञ्चन॥ १† ॥

"सूर्य्यस्य" सर्वस्य प्रेरकस्य सुवीर्य्यस्यादित्यस्य "रश्मय इव" सर्वतो व्यापकाः किरणा इव "द्रावयित्नवः" सर्वत्र द्रवणशीलाः "मत्सरासः" मदकराः "प्रसुतः" प्रकर्षेण सुताः अभिषुताः [एकवचनं छान्दसम् (३, १, ८५)] "आशवः" ग्रहेषु चमसेषु च व्याप्ताः "सर्गासः" सृज्यमानाः सोमाः "ततं" विस्तृतं "तन्तुं" तन्तुभिः कृतं वस्त्रं दशापवित्रं "साकं" सह युगपत् "परि-ईरते" परितो गच्छन्ति। ते सोमाः "इन्द्रादृते" इन्द्रं वर्जयित्वा अन्यत् "किञ्चन धाम"‡देव-शरीरं लक्षीकृत्य "न पवते"

---

* "प्रसुवः"—इति ऋ०-पाठः।

† ऋ० सं० ७, २, १२, १।

‡ 'इन्द्रं मुक्त्वा नान्यत् सोमस्य स्थापनमस्ति'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



न गच्छन्ति॥ [इन्द्रस्य धाम्नो यष्टव्यत्वञ्च "अयानीन्द्रस्य प्रियधामानि"—इति मन्त्र-वर्णादवगम्यते॥१॥

अथ द्वितीया।

१ २ ३ २ ३ १ २ ३ २ ३ १ १ २
उपोमतिःपृच्यतेसिच्यतेमधु

३ १ २ ३ २ ३ १ २
मन्द्राजनीचोदतेअन्तरासनि।

१ २ ३ १ २ ३ १ १ २
पवमानःसन्तनिःसुन्वतामिव

१ २ ३ २उ ३ १ २
मधुमान्द्रप्सःपरिवारमर्षति॥२*॥

अस्मिन् परिवाद-रूपे स्तोत्रे इन्द्रे "मतिः" स्तुतिरूपा "पृच्यते" स्तोतृभिः संयोज्यते [पृची सम्पर्के (दि० आ०)]। तथा "मधु" मद-करः सोमः इन्द्रार्थं "सिच्यते" अद्भिर्यव-सक्तुभिश्च सिक्तो भवति, ततः "मन्द्राजनी" [अज गति-क्षेपणयोः (अदा० आ०)—इत्यस्य ल्युटि ङीपि रूपम्] मदकरस्य रसस्य प्रेरयित्री सोमधारा तस्येन्द्रस्य "आसनि" आस्ये "अन्तर्" मध्ये "चोदते" प्रेर्य्यते [आस्य-शब्दस्य "पद्दन्नोमासित्यादिना (६, १, ६३) आसन्नित्यादेशः]। किञ्च "सन्तनिः" यज्ञादिषु सम्यक् विस्तृतः "सुन्वताम्" अभिषुतवतां यजमानानां सम्बन्धिनी,

---

* ऋ० वे० ७, २, २१, २।

† 'सन्तनिः—सन्ततिः, सुन्वतामिव—यथा सुन्वतां सन्तनिः कर्म-सन्ततिः एवं सोमस्य धारयेति'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"पवमानः" पूयमानः सोमः "द्रप्सः" द्रुत-गमन-शीलः "वारम्" अवि-वालमयं पवित्रं "परि"परितः "अर्षति" गच्छति। "इव" —इति पाद-पूरणः॥

"सुन्वतामिव"—"प्रघ्नतामिव"—इति पाठौ॥ २॥

अथ तृतीया।

२ १ २ ३ १ २ ३ १ २
उक्षामिमेतिप्रतियन्तिधेनवो

३ १ २ ३ १र २र ३ २
देवस्यदेवीरुपयन्तिनिष्कृतम्।

१ २ ३ १ २ ३ १ १ ३ २ ३
अत्यक्रमीदर्ज्जुनंवारमव्यय

१ २ २ ३ २उ ३ १ २
मत्कन्ननिक्तम्परिसोमोअव्यत॥ ३*॥ ९

"उक्षा" रेतसः सेक्ता वृषभः पुरतो "मिमेति" शब्दायते [माङ् माने शब्दे च (जु० आ०) तं वृषभं "धेनवः" गावः† "प्रति यन्ति" अनुगच्छन्ति। तथा "देवस्य" द्योतमानस्य संस्कृतं स्थानं "देवीः" देव्यः स्तुतयः "उप यन्ति" उपगच्छन्ति [अनेनाहित-सोमः स्तुतिभिश्चाभिधीयते। सोमो हि द्रोणकलशाभिगमन-काले शब्दं करोति, तमनु धेनवः प्रीणयित्र्यः स्तुतयः परियन्ति देवस्य स्थानं स्तुतयोऽभि गच्छन्ति। तथा सोऽयं

* ऋ० वे० ७, २, २१, ४।

† 'धेनवः—धेट् पाने (भ्वा०प०), पिबन्त्युदकानि आदित्य-रश्मयः। अथवा * * *'— इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



सोमः "अर्जुनं" श्वेतवर्णम् "अव्ययम्" अविमयम् अवेः स्वभूतं "वारं" वालं पवित्रम् "अत्यक्रमीत्" "अतिक्रामति [अतिक्रम्य पात्राणि गच्छतीत्यर्थः]। किञ्च सोमः "अत्कं न" आत्मीय-कवचमिव "निक्तम्" उज्ज्वलं स्वर्ण-द्रव्यम् "परि अव्यत" परितः संवृणोति ॥

'मिमेति'—"मिमाति"—इति पाठौ ॥ ३ ॥ ९

॥ वाजजित् ॥ सूर्य्यस्येवा। रश्मयोद्रा। वायित्न वाः। होवा३होयि। मत्सरासाः। प्रसुतःसा। का मीरतायि। होवा३हायि। तन्तुन्ततम्। परिसर्गा। साआश्वाः। होवा३होयि। नन्दोहतायि। परतेधा। माकिश्चना। होवा३होर। वा २ ३ ३ औहोवा ॥(१)

उरोमतायिः। पृच्यतेसायि। च्यातेमधू। होवा३हो यि। मन्द्राजनायि। चोदतेआ। तारासनायि। हो वाहोयि। पवमानाः। सन्तनिःसू। न्वातामिवा। हो वा३होयि। मधुमान्द्रा। सःपरिवा। रामर्षतायि।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



ह्वोवा३ह्वो२। वा२३४औह्वोवा॥२) उच्चामिमायि। तिप्रतिया। तीधेनवाः। ह्वोवा३ह्वोयि। देवस्यदायि। वीरूपया। तीनिष्कृताम्। ह्वोवा३ह्वोयि। अत्यक्रमायिन्। अर्जुनम्वा। रामव्ययाम्। ह्वोवा३ह्वोयि। अत्कन्ननायि। कर्म्यरिसो। मोअव्यता। ह्वोवा३ह्वो२। वा२३४औह्वोवा। वाजीजिगीवाविश्वाधना २नी२ ३४५॥ २१*॥ [१]

॥ कावम् ॥ ह्वय्योवा। स्वेवश्शयोद्रा। वयिन्नवा२ः। मत्सरासः। त्रसुतःसा। कमीराता२यि। तन्तुन्ततस्परिसर्गा। सआशावा२३ः। नेन्द्रा३दार्त्ता यि। पवतायिधा२३। माका३यिच्वापूना ६५६॥(१) उपोषा। मतिःपृच्यतेसायि। च्यतेमाधू२। मद्राज

---

* ऊ० गा० ६प्र० १अ० २१सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



नीचोदतेश्रा। तरासाना२यि। पवमानःसन्तनिःह्व।

न्वतामायिवा२३। माधू३मान्द्रा। प्तःपरायिंवा २ ३।

रामा३र्षा५ुता६५६यि ॥(२) उच्चोवा। मिमेतिप्रतिया।

तिधेनवा२ः। देवस्यदेवीरूपया। तिनिष्कृतो२म्।

अत्यक्रमीदर्ज्जनम्वा। रमव्याया२३म्। आत्का३न्नानी।

कृम्परायिसो२३। सोआ३व्या५ुता६५६(३) ॥११*॥ [२] ९

अग्निन्नरइति तृचात्मकं द्वितीयं सूक्तम्,†

तत्र प्रथमा।

अग्निन्नरो दीधितिभिररण्यो

र्हस्तच्युतञ्जनयत प्रशस्तम्।

दूरेदृशङ्गृहपतिमथव्युम् ॥ १‡ ॥

---

* ऊ० गा० ९प्र० २ख० ११सा०।

† 'अग्निन्नः—एतदग्निष्टोमसाम। वामदेव्यम्'—इति वि०।

‡ छ० आ० १, २, २, १० (१भा० २१५ पृ०) = ऋ० वे० ५, ९, ३३, १।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



हे "नरः" नेतार ऋत्विजः! यूयं "प्रशस्तं" प्रकर्षेण स्तुतं "दूरेदृशं" दूरे दृश्यमानं दूरे पश्यन्तं वा "गृहपतिम्" गृहाणां पालकम् "अथव्युम्" अगम्यम् अतनवन्तं वा "अग्निम्" "अरण्योः" सकाशात् "हस्तच्युत" हस्तगतं "दीधितिभिः" अङ्गुलिभिः "जनयन्त" उत्पादयन्त॥

"हस्तच्युतञ्जनयन्त"-"हस्तच्युतीजनयन्त"—इति पाठौ, "अथव्युग्"-"अथर्य्युम्"—इति च॥१॥

अथ द्वितीया।

२ ३ १२ ३ १ १ २३ २र
तमग्निमस्तेवसवोन्यृण्वन्त्

३ २ ३ १ २ ३ १ २
सुप्रतिचक्षमवसेकुतश्चित्।

३ २ ३ १२ ३ २ ३ १ २
दक्षाय्योयोदमआसनित्यः॥२*†॥

"यः" अग्निः "दमे" गृहे गृहे "दक्षाय्यः" पूजनीयो हविर्भिः समर्धनीयो वा "नित्यः" अजस्रः "आस" बभूव "तं" "सुप्रतिचक्षं" सुप्रतिदर्शनम् "अग्निं" "कुतश्चित्" सर्वस्मादपि भयहेतोः "अवसे" रक्षणाय "वसवः" वासकाः वसिष्ठाः स्तोतारः "अस्ते" गृहे "न्यृण्वन्" न्यदधुः॥२॥

---

* ऋ० वे० ५, १, १३, २।

† विवरण-मते आसमित्य इत्येकं पदम्, तथाहि—'आसंनित्यः—आसमासनं नित्यं यजमान-गृहे यस्य'—इति तद्व्याख्यानम्। विरुद्धञ्चैतत् पदकारादीनाम

१ २र १ २र
'आस। नित्यः"—इति दर्शनात् बहुव्रीहि-स्वराननुगतत्वेति विचार्यम्।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ तृतीया ।

१ २ ३ १र २र २ ३ १र
प्रेद्धो अग्ने दीदिहि पुरो नो ऽजस्रया सूर्म्या यविष्ठ ।

१र २र ३ १ २ ३ १ २
त्वां शश्वन्त उप यन्ति वाजाः ॥ ३* ॥ १०

हे "यविष्ठ" युवतमाग्ने ! "प्रेद्धः" प्रकर्षेण समिद्धः त्वम् "अजस्रया" अमरणशीलया "सूर्म्या" ज्वालया "नः" अस्मदर्थं "पुरः" पुरस्तात् आहवनीयायतने "दीदिहि" दीप्यस्व । "त्वां" "शश्वन्तः" बहवः "वाजाः" अन्नानि हवींषि "उपयन्ति" उपगच्छन्ति† ॥ ३ ॥ १०

---

* ऋ० वे० ५, १, २३, ३ = य० वे १७, ७६ ।

† अत्रेयं महीधर-व्याख्या — "हे 'यविष्ठ !' [ अतिशयेन युवा यविष्ठः । अतिशायने तमबिष्ठनौ, स्थूलदूरयुवेत्यादिना व-लोपे पूर्वगुणः ] हे युवतम ! हे 'अग्ने !' त्वं 'नो'ऽस्माकं 'पुरो' अग्रे 'दीदिहि' दीप्यस्व [ दीव्यतेर्विकरण-व्यत्ययेन जुहोत्यादित्वात् श्नयः श्लौ द्वित्वम्, तुजादीनामिति पूर्व-दीर्घः ] । किम्भूतस्त्वम् ? 'अजस्रया' अनुपक्षीणया 'सूर्म्या' समित्काष्ठेन 'प्रेद्धः' प्रकर्षेण दीप्तः [सूर्मी शब्दः काष्ठ-वाचकः ; यद्वा, लोहमयी ज्वलन्ती स्थूणा सूर्मी । अजस्रया सूर्म्या सूर्मी-समानया ज्वालया दीदिहि । सूर्मी-शब्दो ज्वालोपलक्षकः ] । हे अग्ने ! यतः शश्वन्तो निरन्तर-भाविनो वाजाः अन्नानि हवींषि त्वामुपयन्ति प्राप्नुवन्ति अतो दीप्यस्वेत्यर्थः" — इति ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



आयङ्गौरिति तृचात्मकं तृतीयं सूक्तम्,*

तत्र प्रथमा।

१र २र ३ १ २ ३ १ २ ३ २
आयङ्गौः पृश्निरक्रमीदसदन्मातरम्पुरः।
३ १ २ ३ १ २
पितरञ्चप्रयन्त्स्वः॥ १† ॥

"गौः" गमनशीलः "पृश्निः" प्राष्टवर्णः -व्याप्ततेजाः "अयं" सूर्य्यः "आक्रमीत्" आक्रान्तवान् उदयाचलं प्राप्तवानित्यर्थः। आक्रम्य च "पुरः" पुरस्तात् पूर्वस्यां दिशि "मातरं" सर्वस्य भूतजातस्य निर्मात्रीं भूमिम् "असदन्" आसीदति प्राप्नोति [सदेश्छान्दसो लुङ्, लृदित्त्वात् च्लेरङादेशः। ततः "पितरं" पालकं द्युलोकं "च"-शब्दादन्तरिक्षञ्च "प्रयन्" प्रकर्षेण शीघ्रं गच्छन् "स्वः" सु अरणः शोभन-गमनो भवति [यद्वा, पितरं स्वर्द्युलोकं प्रयन् वर्त्तते] ॥ १ ॥

---

* 'उक्तमग्निष्टोमसाम। इदानीं मानसं स्तोत्रं भवति। * * *। मनसाभिहिङ्करोति। मनसोद्गायति। मनसा प्रतिहरति। मनसा निधनमुपयन्ति। एतन्मानसं येनात्यग्निष्टोमायङ्गौः पृश्निरक्रमीदिति'—इति वि०।

† छ० आ० प० ३, ५, ४ (१भा० ३४३ पृ०) = ऋ० वे० ८, ८, ४७, १ = य० वे० ३, ६।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीया।

२ १ २ ३ २३ ३ १ २ ३ २
अन्तश्चरति रोचनास्य प्राणादपानती।
१र २र ३ १र २र
व्यख्यन्महिषो दिवम् ॥ २* ॥

"अस्य" सूर्य्यस्य "रोचना" रोचमाना दीप्तिः "अन्तः" शरीर-मध्ये मुख्य प्राणात्मना "चरति" वर्त्तते। किङ्कुर्वती? "प्राणादपानती" मुख्य-प्राणस्य प्राणाद्या वृत्तयः, तत्र प्राणनं नाड़ीभिरूर्द्धं वायोर्निर्गमनम्, तथाविधात् प्राणात् प्राणनात् अनन्तरम् अपानती, अपानं तन्नाड़ीभिरवाङ्मुखं वायोर्नमनं तत् कुर्वती, [अप-पूर्वादनितेः लटः शतृ, अदादित्वाच्छपोलुक्, "उगितश्च (४, १, ६)"—इति ङीप्, "शतुरनुमः (६, १, १७३)"—इति नद्यनुदात्तत्वम्। यद्वा, 'अन्तर्' द्यावापृथिव्योर्मध्ये 'अस्य' सूर्य्यस्य 'रोचना' रोचमाना दीप्तिः 'चरति' गच्छति। रुच दीप्तौ (भ्वा० आ०), "अनुदात्तेतश्च हलादेः (३, २, १४९)"—इति युच्। किङ्कुर्वती? 'प्राणात्' प्राणनात् उदयादनन्तरम् 'अपानती' सायं समये अस्तं गच्छतीति। ईदृश्या दीप्त्या युक्तः] अतएव "महिषः" महान् सूर्य्यः "दिवम्" अन्तरिक्षम् उदयास्तमययोर्मध्ये "व्यख्यन्" विचष्टे प्रकाशयति॥ महिषः—महेः "अविमह्योष्टिषच् (उ० १, ४५)"—इति

---

* ऋ०खा० प०१, १, ५ (२भा० ३, ४६) = ऋ० वे० १०, १८९, २ = य० वे० ३, ७।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



औणादिकः ष्टिषच् प्रत्ययः । व्यख्यन्—"चक्षिङः ख्याञ् (२, ४, ५४)", छान्दसे लुङि "अस्यतिवक्ति (३, १, ५२)"—इत्यादिना चूरङादेशः ॥ २ ॥

अथ तृतीया ।

२ १उ ३ १ २ ३ १ २ ११ २
त्रिꣳशद्धामविराजतिवाक्पतङ्गायधीयते ।

२ ३ २ ३ २ ३ १ २
प्रतिवस्तोरहद्युभिः ॥ ३* ॥ ११

"त्रिंशत्" "धाम" धामानि स्थानानि [ वचन-व्यत्ययः (३, १, ८५) ] "वस्तोः" वासरस्याहोरात्रस्यावयवभूतानि "अह" [ शब्दोऽवधारणे ] "द्युभिः" सूर्य्यस्य दीप्तिभिरेव "वि राजति" विशेषेण दीप्यन्ते [ व्यत्ययेनैकवचनम् ( ३, १, ८५ ) । मुहूर्त्तान्यत्र धामान्युच्यन्ते ; पञ्चदश रात्रेः, पञ्चदशाह्नः] । "पतङ्गाय" [ पतन् गच्छतीति पतङ्गः सूर्य्यस्तस्मै ] सूर्य्याय, स्तुतिरूपा "वाक्" "प्रति धीयते" पतिमुखं धीयते प्रतिमुखं स्तोतृभि विधीयते क्रियते [ यद्वा, 'वस्तोः' अहनि 'त्रिंशद्धामानि' घटिकाभिप्रायमेतत्, त्रिंशत् घटिकाः ; "अत्यन्त-संयोगे द्वितीया (२, ३, ५ )"। एतावन्तं कालं 'द्युभिः' दीप्तिभिः असौ सूर्य्यो 'वि राजति' विशेषेण दीप्यते, तस्मिंश्च समये 'वाक्' त्रयीरूपा 'पतङ्गाय' 'प्रतिधीयते' प्रतिमुखं धीयते तं सूर्य्यं सेवत

---

* ऋ० आ० प० ३, ५, ६ ( २भा० ३४८ पृ० ) = ऋ० वे० ८, ८, ४७, ६ = य० वे० ३, ८ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



इत्यर्थः । श्रूयते हि—"ऋग्भिः पूर्वाह्णे दिवि देव ईयते यजुर्वेदे तिष्ठति मध्ये अह्नः"—इत्यादि ॥ ३ ॥ ११

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य एकादशस्याध्यायस्य

तृतीयः खण्डः* ॥ ३ ॥

---

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।

पुमर्थांश्चतुरो देयाद् विद्यातीर्थ-महेश्वरः ॥ ११ ॥

॥ इति षष्ठस्य प्रथमोऽर्द्धप्रपाठकः ॥ ६ * ॥

इति श्रीमद्राजाधिराज-परमेश्वर-वैदिकमार्गप्रवर्त्तक-श्रीवीर-बुक्क-भूपाल-साम्राज्य-धुरन्धरेण सायणाचार्य्येण विरचिते माधवीये सामवेदार्थ-प्रकाशे उत्तराग्रन्थे एकादशोऽध्यायः ॥ ११ ॥

———000———

* 'समाप्तश्चायं द्वादशाहः सत्रात्मकोऽहीनात्मकश्च'—इति वि०

† 'षष्ठस्य प्रपाठकस्य प्रथमोऽध्यायः समाप्तः'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्
निर्ममे तमहं वन्दे विद्यातीर्थ-महेश्वरम् ॥ १२ ॥

## ॥ अथ द्वादशोऽध्याय आरभ्यते* ॥

तत्र

प्रथमखण्डे उपप्रयन्तइति चतुर्ऋचं प्रथमं सूक्तम्†—

तत्र प्रथमा ।

२  १ २  ३ १र २र  ३  १ २
उपप्रयन्तोअध्वरम्मन्त्रंवोचेमाग्नये ।
३ २ ३ १ २  ३ १
आरेअस्मेचशृण्वते ॥ १‡ ॥

---

* 'इदानीं' गवामयनं संवत्सरं सत्रमुच्यते । तत्रादौ ज्योतिष्टोमेऽतिरात्रः पुनः प्रायणीयमहरं तदुक्थ्यम् । पुनश्चत्वारोऽभिप्लवाः । पृष्ठः षडहः समाप्तः । स द्वितीयः तृतीयः स चतुर्थः स पञ्चमः त्रयोऽभिप्लवाः षडहाः पृष्ठः षडहस्तयश्चिं शारम्भणश्चत्वारोऽभिप्लवाः समाप्ताः । स द्वितीयः स तृतीयः स चतुर्थः त्रयोऽभिप्लवाः षडहः आयुश्च गौश्च द्वे अहनी द्वादशाहानि महाव्रतश्चातिरात्रश्च संवत्सरस्यैतद् ब्राह्मणम् । अन्ताक्षां परिणामं सषष्ठ्यानि त्रीणि शतानि । एकादशाग्नुष्ठाः पञ्चचत्वारिंशदभिप्लवाः अभिजित् तत्राहं आयज्ञौ आयुषौ द्वादशाहस्य दशाहानि अतिरात्रः । चतुर्विंशत्या सह षष्ठोमासः पूर्वस्मिन् पचसि व्रता तराभ्यां प्रथम उत्तरास्मिन् गवामयने अतिरात्रमीरितम् अध्याय-परिसमाप्तिः ब्राह्मणेनोक्तानि आर्षच्छन्दोदैवतानि । इदानीं तेषां साम्नां स्तोत्रीयाः ते सङ्ख्या इत्येवमारभ्यते—इति वि० ।

† 'आग्नेयमाज्यम्'—इति वि० ।

‡ ऋ० वे० १, ५, ९, १ = य० वे० ३, ११ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"अध्वरं" हिंसा-प्रत्यवाय-रहितम् अग्निष्टोमादि-यज्ञम् "उप प्रयन्तः" उपेत्य प्रकर्षेण यन्तो गच्छन्तः प्राप्यविच्छेदेन सम्यगनुष्ठितवन्तइत्यर्थः। तादृशा वयम् "अग्नये" अङ्गनादि-गुण-युक्ताय देवाय "मन्त्र" मनन-साधनमेतत् सूक्तरूपं स्तोत्रं "वोचेम" वक्तारो भूयास्म इत्याशास्यते। कीदृशायाग्नये? "अस्य अस्मे च शृणुते" च-शब्दोऽप्यर्थः आरे-शब्दात् परो द्रष्टव्यः आरे च दूरेऽपि स्थित्वास्माकं स्तुतीः शृणुते अस्मासु प्रीत्यतिशयेन सर्वत्र विद्यमानोऽग्निः अस्मदीयमेव स्तोत्रं शृणोतीति भावः। [वोचेम—ब्रुवोवचिः ( २, ४, ५३ ), लिङ्याशिष्यङ्, "वचउम् ( ७, ४, २० )"—इत्युमागमः। शृणुते—"शतुरनुमः ( ६, १, १७३ )"—इति विभक्तेरुदात्तत्वम् ॥ १ ॥

अथ द्वितीया।

१२ २र ३ १ २ ३ १ २ ३ १ २

यःस्नीहितीषुपूर्व्यःसञ्जग्मानासुकृष्टिषु।

१ २ ३ २ ३ १ २

अरक्षद्दाशुषेगयम् ॥ २* ॥

"पूर्व्यः" चिरन्तनः "यः" अग्निः "स्नीहितीषु" बधकारिणीषु "कृष्टिषु" शत्रुरूपासु प्रजासु "जग्मानासु" सुसङ्गतासु सतीषु "दाशुषे" हवींषि दत्तवते यजमानाय "गयं" धनम् "अरक्षत्" रक्षति†। तस्मै मन्त्रं वोचेमेति पूर्वेण सम्बन्धः। [स्नीहितीषु—

* ऋ० वे० १, ५. २१, ९।

† 'गयं प्राणम् यद्यपि सर्वासु मनुष्यजातिषु सर्वस्य हृदयान्तःस्थितं ज्योतिः तथापि ये यजमानाः तेषां गयान् प्राणान् रक्षति'—इति वि०।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



ष्णिह स्नेहने चुरादिः ; "स्नेहयति"—इति बध-कर्मसु (निघ० २, १९, १३) पठितम् ; स्निह्यन्ते हिंस्यन्ते प्रजा आभिरिति स्नोहितवः करणे "तितुत्रेष्वग्रहादीनाम् (७, २, ९ वा०)"—इति वचनात् निग्रहीतिर्निपतितिवदिड़ागमः व्यत्ययेनैकारस्य ईकारः, क्तिनोदीर्घश्च ; नित्त्वादाद्युदात्तत्वम् । सञ्जग्मानासु —"समोगमि (१, ३, २९)"—इत्यात्मनेपदम्, लिटः कानच्, गमहनेत्यादिनोपधालोपः । अरक्षत्—"छन्दसि लङ्लुङ्लिटः (३, ४ ६)"—वर्त्तमाने लङ् ॥ २ ॥

अथ तृतीया ।

१ २ १ २ २ १ २ ३ १ १ २ १ १
सनोवेदो अमात्यमग्नीरक्षतुशन्तमः ।

२ २उ २ १ १
उतास्मान्पात्वंहसः ॥ ३* ॥

"सः" अग्निः "नः" अस्माकं "वेदः" धनम् "अमात्यम्"[†] अन्तिके भवं सहभूतं वा "रक्षतु" शत्रोः सकाशात् पालयतु। कीदृशः ? "शन्तमः" सुखतमः "उत" अपिच "अस्मान्" वसिष्ठान् "अंहसः" पापात् "पातु" रक्षतु ॥

"शन्तमः"—"विश्वतः"—इति पाठौ ॥ ३ ॥

---

* ऋ० वे० ५, २, १८, ३ ।

† 'अमत् प्रायः, प्राप्त्वं हृदयायस्थितं ज्योतिः'—इति वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ चतुर्थी।

२ १ २ १ २ ३ २ ३ १ २ ३ १ २

उतब्रुवन्तुजन्तवउदग्निर्वृत्रहाजनि।

३ १२ ३२

धनञ्जयोरणेरणे॥४*॥१

"अग्निः" "उदजनि" अरण्योः सकाशात् उत्पन्नः "उत" अनन्तरं "जन्तवः" जाताः सर्वे ऋत्विजः ब्रुवन्तु तमग्निं स्तुवन्तु। कीदृशोऽग्निः? "वृत्रहा" वृत्राणामावरकाणां शत्रूणां हन्ता "रणे रणे" सर्वेषु सङ्ग्रामेषु "धनञ्जयः" शत्रु-धनानां जेता† ["संज्ञायां (३, २, ४६)"—इति खच्, "अरुर्द्विषदजन्तस्य (६, ३, ६७)"—इति मुम्, चित्स्वरेणान्तोदात्तः। रणेरणे—रणन्ति दुन्दुभयोऽस्मिन्निति रणः सङ्ग्रामः। "घञर्थे कविधानम् (३, ३, ५८ वा०)"—इत्यप्, "नित्यवीप्सयोः (८, १, ४)"—इति द्विर्वचनम्, आम्रेडितानुदात्तत्वम्॥४॥१

अथाग्नेयुङ्क्ष्वाहीति तृचात्मकं द्वितीयं सूक्तम्‡,

तत्र प्रथमा।

१ २ ३ १२ २२ ३ १ २

अग्नेयुङ्क्ष्वाहियेतवाश्वासोदेवसाधवः।

२ ३ १ २ ३ १ २

अरंवहन्त्याशवः॥१¶॥

---

* ऋ० वे० १, ४, ११. ९।

† 'धनञ्जयः—अग्निधनानां जेता'—इति वि०।

‡ 'अग्निष्टोम साम'—इति वि०।

¶ छ० आ० १, १, ३, ५ (१ भा०१३३४०,=ऋ० वे० ४, ५, २८, २।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



हे "देव" द्योतमानाग्ने ! तान् अश्वान् "युङ्क्ष्व" आत्मीये रथे योजय। "ये" "तव" त्वदीयाः "साधवः" साधकाः सुशीला वा "अश्वासः" अश्वाः "आशवः" शीघ्रगामिनः सन्तः "अरम्" अलम् पर्य्याप्तं त्वदीयं रथं वहन्ति "हि" खलु। तानश्वान् रथे युङ्क्ष्वेत्यर्थः॥

"युङ्क्ष्व"-"युङ्क्ष्वा"—इति पाठौ, "आशवः"-"मन्यवः" —इति च॥ १॥

अथ द्वितीया।

१ २ ३ १ २ ३ १र २र ३ १ २
अच्छानोयाह्यावहाभिप्रयाꣳसिवीतये।

२ ३ १र २र
आदेवाꣳत्सोमपीतये॥ २*॥

हे अग्ने! "नः" अस्मान् "अच्छ" आभिमुख्येन "याहि" आगच्छ, तथा "प्रयांसि" हविर्लक्षणान्यन्नानि "अभि" लक्ष्य "देवान्" "आवह"। किमर्थम्? "वीतये" तेषां हविर्भक्षणार्थं, तथा "सोमपीतये" सोमपानार्थञ्च॥ २॥

अथ तृतीया।

१ २ २ १र २र ३ १ २
उदग्नेभारतद्युमदजस्रेणदविद्युतत्।

२ ३ १ २
शोचाविभाह्यजर॥ ३†॥ २

* ऋ० सं० ४, ५, २९. ४।

† ऋ० सं० ४, ५, २९, ५।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



हे "भारत" हविषां भर्त्तरग्ने ! * "उत् शोच" उद्गततरं दीप्यस्व। तदेव विवृणोति— हे "अजर" जरा-रहिताग्ने ! "दविद्युतत्" भृशं द्योतमानस्त्वं "द्युमत्" द्युमता दीप्तिमता सुपांसुलुगिति ( ७, १, ३९ ) तृतीया-लुक् "अजस्रेण" अविच्छेदेन "तेजसा" "वि भाहि" विशेषेण प्रकाशयस्व [ यद्वा, भाति रन्तर्णीत-ण्यर्थः। त्वं प्रथमसुद्दीप्यस्व पश्चादात्मीयेन तेजसा सर्वं जगत् प्रकाशयेति योजनीयम् ] ॥ ३ ॥ २

अथ प्रसुन्वानायेति तृचात्मकं तृतीयं सूक्तम्,†

तत्र प्रथमा।

१ २ ३ १र २र ३ २ ३ १ २ ३ १र २र

प्रसुन्वानायान्धसोमर्त्तोनवष्टतद्वचः।

२ ३ १ २ ३ १ २ ३ २ ३ १र २र

अपश्वानमराधसꣳहतामखन्नभृगवः ॥ १‡ ॥

"सुन्वानाय" सुन्वानस्याभिषूयमाणस्य "अन्धसः" अदनीयस्य सोमस्य "तत्" प्रसिद्धं "वचः" वचनं घोषं "मर्त्तः" मारकः कर्म-विघ्नकारी श्वा "न वष्ट" [वश कान्तौ (अदा० प०)—इति धातुः] न कामयतां न शृणोत्विति यावत्। तथा, हे स्तोतारः ! "राधसं" साधक-धर्म-रहितं "श्वानम्" "अपहत"।

---

* 'भारत—भरतामनुषाणां निर्मथिताग्ने'—इति वि०।

† स्तामीमाभिक्षयिकमुच्यते'—इति वि०।

‡ ऋ० सा० ६, २, १, ९ (२ भा० १९८ पृ०) = पुनरत्रैव पुरस्तात् १, २, २१, २ (३ भा० २९० पृ०) = ऋ० वे० ७, ५, २, २।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



तत्र दृष्टान्तः—"मखं न" यथा पुरा अपराद्धं मखं एतन्नामानं "भृगवः" अपहनवन्तः तथा अपहतेत्यर्थः ॥

"सुन्वानाय"-"सुन्वानस्य"—इति पाठौ, "वष्ट"-"हत"—इति च ॥ १ ॥

अथ द्वितीया ।

२ ३ १र २र ३ २उ ३ २ ३ २र
आजामिरत्के अव्यत भुजे न पुत्र ओण्योः ।
१ २ ३ १र २र ३ १र २र ३ १ २
सरज्जारो न योषणां वरो न योनिमासदम् ॥ २* ॥

"जामिः" बन्धुभूतो देवानां † सोमः "अत्के" आच्छादके पवित्रे "आ अव्यत" आवृणोति सम्बन्धी भवति । तत्र दृष्टान्तः—"भुजे न" यथा "ओण्योः" रचकयोः मातापित्रोः भुजे "पुत्रः" आवृणोति, तद्वत् । ततः सोऽयं सोमा "योनिं" स्वस्थानभूतं कलशम् "आसदत्" आसत्तुं "सरत्" सरति । तत्र दृष्टान्तद्वयम्—"जारो न" यथा जारो "योषणां" असतीं स्त्रियं प्राप्तुं सरति, यथा वा "वरः" कन्यां प्राप्तुं गच्छति, तद्वत् ॥ २ ॥

अथ तृतीया ।

२ ३ १ २ ३ १ २ ३ २उ ३ १ ३ १ २
स वीरो दक्षसाधनो वि यस्तस्तम्भ रोदसी ।
१ २ ३ १ २ ३ १र २र ३ १ २
हरिः पवित्रे अव्यत वेधा न योनिमासदम् ॥ ३‡ ॥ ३

---

* ऋ० वे० ७, ५, ३, ४ ।

† जामिः—सोमस्य भगिनी'—इति वि० ।

‡ ऋ० वे० ७, ५, ३, ५ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"दक्षसाधनः" बल-साधनः "सः" सोमः* "वीरः" समर्थो भवति, "यः" सोमः "रोदसी" द्यावापृथिव्यौ "वि तस्तम्भ" स्व-तेजसा व्यस्तत्वात् आच्छादयदित्यर्थः। किञ्च "हरिः" हरित-वर्णः सोमः "वेधा न" यथा विधाता यजमानः स्व-गृहमासीदति, तद्वत् "योनिं" स्व-स्थानं कलशम् "आसदम्" आसत्तं पवित्रे "अव्यत" आवृणोत् सम्बद्धो भवति ॥ ३ ॥ ३

। महागौरीवितम् ॥ प्रसु। न्वाना३। यअन्धसाः। मर्त्तानवष्टतद्वचा२३ः। आपश्वाना३१२३म्। अरा५ध साम्। द्धातामखा३ १ २ ३म। नभोवा। गा५ वो ६ वाइ(१) ॥ १७† ॥ [१]

॥ गौतमम् ॥ प्रसुन्वानायअन्धसाः। मर्त्तोनवो। ष्टतद्वचा२ः। अपा। औहो२३४वा। श्वानमराधसा

---

* 'सः—सोमः प्रजापतिः नृपो वा'—इति वि०।

† ऊ० गा० १प्र० २ख० १७सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ ११ २ ३ २ २र ५ ७ २ २र
२३४५म्। इता। औहो२३४वा। मखा। औहो२३

५ ४ ४
४वा। नभूृ्गवाः। होइ। डा(१) ॥ १८* ॥ [२]

५ २र २ ४ ५
॥ महागौरीवितम् ॥ प्रसु। त्वाना३। यअन्धसाः।

१र १ र २ ५
मर्त्तोनिवष्टतद्वचा२३ः। आपश्वाना३१२३म्। अराधूध

१ र २ ४ ५ ४ ५
साम्। हातामखा३१२३म्। नभोवा। गाधुवो६ हा

५२र ३ ० ४र ५ १र
यि ॥(१) आजा। मिरा३। त्कअव्यता। भुजेनपुन

र १ र २ ४ १र
आणियो२३ः। सारञ्जारा३१२३ः। नयोपूषणाम्। वारो

२ ४ ५ ४ ५ र
नयो३१२३। निमोवा। साधूदो६हायि ॥(२) सबी।

२र २ ४ र ५ १ र
रादा३। हसाधनाः। वियस्तस्तम्भरोदसा २ ३ यि।

१ २ ४र १ र २
हारिःपवा३१२३यि। चेआपूव्यता। वायिधानयो३१२३।

४ ५ ४ ५
निमोवा। साधूदो६हायि(३) ॥ १७† ॥ [३]

---

* ऊ० गा० १प्र० २ख० १८सा०।

† ऊ० गा० ६प्र० २ख० १७सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५र ४ १२४र ५ २ १
॥ ओक्कोनिधनम्॥ आजा३मिरत्केअव्यता। भुजा

१ १ र र १
यि। नपुत्त्रओ२णायो ३ः। सरञ्जारोनयो२षाणा२

१र ५ २१र २ ५र र
म्। वरोना२३४यो। निमा। सा२दा२३४औद्वोवा।

२ ५
ओ२३४का:(२)॥ १८* ॥ [४]

१ २र र १ १ २ १
॥ औद्दलम्॥ सवीरोदा। त्वासा२धनाः। वियस्त

२ १ २ ३ ५ १ २
स्ता३। भारोदा२३४मायि। द्दरिःपवायि। त्वेआ२

१ २र १र २ १ ४ २
व्यता। वेधाना२३यो३। ना२३यिमा३। सा३४५द्दी

५
द्दायि(३)॥ १९† ॥ [५]

५ २ ४र५ ४ ५ २ १र २ १
॥ साध्रम्॥ प्रसुन्वा३नायअन्धसाः। मर्त्तोनवा२।

२ १ २ ५ १ १ १र २ र १ २ १ १ १ १
ष्टता३४५त्। वा२३४चाः। अपश्वानमराधसा२३४५म्।

१ २ ३ १ १ २ २ ५ ४
द्दाताओ२३४वा। माखाओ२३४वा। नभृ५गवाः॥(१)

५र र २ ४ ५र ४ ५ २ १ १ १ ३ २
आजामा३यिरत्केअव्यता। मुजायिनपू२त्। त्वओ३

---

* ऊ० गा० ६प्र० १ख० १८वा०।

† ऊ० गा० ६प्र० २ख० १९वा०।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



४५। णी२३४यो:। सरज्जारोनयोषणा२३४५म्। वा

रा। श्रो२३४वा। नाया श्रो२३४वा। निमा५सदाम्॥(२)

सवीरो३दत्त्तसाधनाः। वियास्तस्तार। भरो३४५। दा

२३४सी। हरि:पवित्रेअव्या२३४५। वायिधाश्रो२३४

वा। नायाश्रो २ ३ ४ वा। निमा५सदाम्। होपुई।

डा(३)॥ २०*॥ [६]

॥ गौतमम्॥ आजामिरत्केअव्यता। भुजायिनपूत्।

चश्रोणियोरः। सरा। औहो२३४वा। जारोनयोष

णा२३४५म्। वरा। औहो२३४वा। नाया। औहो

२३४वा। निमा५सदाम्। होपुई। डा(२)॥ १†॥ [७]

॥ श्यावाश्वम्॥ प्रसू३१। न्वा३ना। यश्र। धा३सः।

एह्रिया। मा। तोनवष्टा। तत्। वचारः। एह्रियार।

---

* ऊ० गा० ६प्र० २अ० २०सा०।

† ऊ० गा० ६प्र० १अ० १सा०



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१र २ ४ ५ २र १र
अपस्वानामा३रा३ । धा२३४साम् । ऐंद्वा २यि । एद्धि

र १ २ ४ २ ४
या २ । हतामखान्ना३भ्रू३ । गा३५वो६हायि ॥ २* ॥ [८]

१ २ र १ १ २ १र
॥ औदलम् ॥ प्रसुन्वाना । याश्रा २न्धसाः । मर्त्तो

२ १ २ ३ ५ १ २ र १
नवा३ । ष्टातद्वा२३४चाः । अपस्वानाम् । आरा २ध

१ २ १र २ १ ४ २
साम् । हतामा२३खा३म् । ना२३भ्रू३ । गा३४५वो६

५ १र २र १ १ २ १र २
हायि ॥ १) आजामिरा । त्केश्रा २व्यता । भुजेनपू३

१ २ ३ ५ १ २ र १ १
त् । चाश्रोणा२३४योः । सरज्जाराः । नार्यो २षणाम् ।

२ १र २ १ ४ २ ५
वरोना२३यो३ । ना२३यिमा३ । सा३४५दो६हायि ॥(२)

१ २र र १ १ २ १ २ १ २ ३
सवीरोदा । च्चासा २धनाः । विग्रस्तस्ता३ । भारोदा

५ १ २ १ १ २र१र
२३४साथि । हरिःपवायि । चेश्रा २व्यगा । वेधाना२३

२ १ ४ २ ५
यो३ । ना२३यिमा३ । सा३४५दो६हायि(३) ॥३† ॥ [९]

---

* ऊं० गा० ११प्र० २अ० २मा०

† ऊ० गा० ११प्र० २अ० ३मा०



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५ ३र २र ३ ४ ५ २ १ २ १
॥ गौतमम् ॥ प्रसुन्वानायअन्धसा: । मर्त्तोनिवा ।

२ १ १ २ ३र ५ १र २र १र
ष्टतद्वचार: । अपा । औहो२३४वा । श्वानमराधसा

१ १ १ १ १ २ ३र ५ १ २ ३र
२३४५म् । हता । औहो२३४वा । मखा । औहो२३

५ ४ ५र र ३ २ ३र ४ ५ २ १
४वा । नभृ५गवा: ॥(१) आजामिरत्केअव्यता । भजा

२ १ २ र १ ३ २ ३र ५
यिनपूत् । चआ॒ोणियो२: । सरा । औहो २ ३ ४ वा ।

२र १र र ३ १ १ १ १ ३ २ ३र ५ ३ २
जारोनयोषणा२३४५म् । वरा । औहो२३४वा । नया ।

३र ५ ४ ५ र ३र २ ३ ४र ५
औहो२३४वा । निमा५सदाम् ॥(२) सवोरोदत्तसाध

२ १ २ १ १ र १ १ २ ३र
ना: । वियास्तस्ता । भरोदसाराय । हरा । औहो

५ १ १ र २ ३ १ १ १ १ ३र २ ३र ५
२३४वा । पविचेअव्यता२३४५ । वधा । औहो२३४वा ।

३ २ ३र ५ ४ ४
नया । औहो २ ३ ४ वा । निमा५सदाम् । हो५ई ।

डा(३) ॥ १३* ॥ [१०]

२ १ ४र ५ २ ३ ५
॥ आकूपारम् ॥ प्रसुन्वा२३नाय । अन्धा२३४सा: ।

---

* ऊ० गा० ११प्र० ०ख० १६सा० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ १ २ १ २ १ २ १
मर्त्तो२नवा। ष्टतद्वचाः। अपश्वाना२म्। अराध-

१२ १ १ ४ २ ४
साम्। हतामाखा२३म्। ना२३भू३। गा३४५वो६हा

१२ १२ ४५२ २ ३ ५ १
यि॥(१) आजामा२३यिरत्के। अव्या२३४ता। भुजा

१ १२ १ १ १ २ १
रयिनपूत्। चओणियोः। सरज्जारो२। नयोषणाम्।

२२ १ १ ४ २ ५
वरोनायो२३। ना२३यिमा३। सा३४५दो६हायि॥(२)

११२ ४५ २२ १ ५ १ १ १२
सवीरो२३दक्ष। साधा२३४नाः। विया२स्तस्ता। भरो

१ २ १ २ १ १२२ १
दसायि। हरिःपावा२यि। च अव्यता। वेधानायो

१ ४ १ ५
२३। ना२३यिमा३। सा३४५दो६हायि(३)॥१६*॥[११]

२ ५२२ २ ३४
॥दैवोदासोत्तरम्॥ प्रा४सुन्वाना। द्यो। यअन्ध

५ ५ २२ २ २ १ २ ४ ५२
सा६ए। मर्त्तानवष्टतद्वचोअपश्वानमराधा३साम्। हता

२ १ ५२ २ १ ५ २
मखा३४। औहोवा। ना२३४भू। गवो२३४५ई।

डा(३)॥१४†॥[१२]

* ऊ० गा० १५प्र० १ख० १६सा०।

† ऊ० गा० १६प्र० १ख० १४सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ २र र १ २ १ र
॥ प्लुद्वाप्लुद्वीयम् ॥ प्रसुन्वानायअन्धसाः । मर्त्तो
२ १ २ १ र २ २ १र २ १र
नवष्टतद्वार२३चाः । अपश्वानमराधार२३साम् । हताम
२ १ ३ २ ५र र ३ १ १ १ १
२३खा३म् । नार । भृगा३४औहोवा । वा२३४५ः ॥(१)
१र २र १ २र १ २ १ र २ १र २ १
आजामिरत्केअव्यता । भुजेनपुत्त्रओणार२३योः । सर
र र १ १र २ १र २ १
ञ्जारोनयोषार२३णाम् । वरोनार२३योर३ । नार२३यो
१ २र २ ५र र ३ १ १ १ १
३। नार२यिम् । आसा३४औहोवा । दार२३४५म् ॥(२)
१ २र १र २ १र २ १ २ १र २ १
सवीरोदत्तसाधनाः । वियस्तम्भरोंदा२३सायि । हरिः
२र १ २ र १र २ १ ३र
पवित्रे अव्या२३ता । वेधानार२३योर३ । नार२यिम् । आ
२ ५र र ३ १ १ १ १
सा३४औहोवा । दार२३४५म् (३) ॥ १०* ॥ [१३]

३ ४ र र ३ १ ५ २ ३
॥ वैश्वामित्रम् ॥ प्रसुन्वानायअन्धसः । मर्त्तोनार२३४
५ २ १ १ २ १ १ र १ २ १
वा । ष्टा३तादा३चाः । आपश्वानार२३ऌहा३यि । अरा
३ ५ १ २र ३ ५ ४
२धार२३४साम् । हतामाखौवाओर२३४वा । नभृपुग

* ऊ० गा० १८प्र० १अ० १०सा० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



३र ४र ३१ ४ ५ २ ३ ५
वाः ॥(१) आजामिरत्के अव्यत । भुजायिना२ ३ ४पू ।
२ १ २ २ १ २ र १ २ १ ३
च्चा३ओणा३योः । सार ज्जारा२३द्दा३ । नयोरषा२ ३ ४
५ १ २र ३ ५ ४
णाम् । वरो । नायोंवाओ२३४वा । निमा५सदाम् ॥(२)
३४ र ३र ४ ५ २ १ ५ २ १ २ २
सवोरोदद्दसाधनः । वियास्ता२३४स्ता । भा३रोदा३सा
१ २ १ २ १ ३ ५
यि । द्दारिःपवा २ ३यिद्दा ३ यि । चे आर२व्या२ ३ ४ता ।
१ २र ३ ५ ४ ४
वेधाः । नायोंवाओ२३४वा । निमा५सदाम् । द्दो५
ई । डा(३) ॥ १८* ॥ १४

१ र र २ १ र
॥ स्वारकौत्सम् ॥ प्रसुन्वानाया२ अन्धसाः । मर्त्तोन
२ २ २ र २ १२ २
वष्टता१द्दा३चाः । अपस्वाना३म् । आ३राधा३साम् ।
१ र ३ ५ ३ २ ४
आ॥२यि । द्दतामखो२३४द्दायि । नभू३गा५वा६५६ ॥(१)
२र र २ १ र २ २ २
आजामिरत्के३अव्यता । भुजेनपुच ओ१णा३योः । सर
र २ १ २ २ १ र ३
ज्जारो३ । ना३योवा३णाम् । आ॥२यि । वरोनयो२३

* ऊ० गा० १८प्र० २ख० १८मा० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५ ३ २ ४ १ र र २र
४द्दायि । निमा३सा५दाई५ई ॥(२) सवीरोदद्दा३साध

१ २ १ १
ना:। वियस्तस्तम्भरो१दा३सायि। द्दरि:। पवा३यि।

१ १ २ २ १ र र २ ५ २
त्रे३अव्या३ता। आऽ२यि। वेधानयो२३४द्दायि। नि

२ ४
मा३सा५दा६५ई म्(३) ॥ २०* ॥ १५

१ १र र १ १ १ र २
॥ उरुद्दयम् ॥ प्रसुन्वानायअन्धसाः। मर्त्तोनवष्ट

१ २ १ र १ १र २ १ २
तद्दा२३चा:। अपश्वानमराधा२३साम्। द्दतामखा२

१ १ १ ५र र २ ५र
म्। नाऽ२भृ। गा२। या२३४औद्दोवा। वा२३४औ

र २ १ १ १ १ १र १र १ २र १ २ १ र
द्दोवा। वा२३४५: ॥(१) आजामिरत्केअव्यता। भुजे

२ १र २ १ र र २ १र २ १ २
नपुत्त्रओणा२३योः। सरज्जारोनयोषा२३णाम्। वरोन

१ १ १ ५र र २
यो२। नाऽ२यिमा। सा२। या२३४औद्दोवा। दा

१ १ १ १ १ २र१र १ १र २ १ २ १र
२३४५म् ॥(२) सवीरोदद्दमाधना:। वियस्तस्तम्भरो

२ १ १र १ २ र १ २
दा२३सायि। हरि:पवित्रेअव्या२३ता। वेधानयो२।

---

* ऊ० गा० १९प्र० १ख० २०गा० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



नाऽ २ यिमा । मारायो २ ३ ४ श्रौहोवा । हा २ ३ ४ ५म् (३) ॥ २१* ॥ [१६]

॥ श्रावरथन्तरम् ॥ प्रसुन्वानायान्धसाः । मर्त्तानवा । ष्टाउताद्वाउचाः । अपश्वानमराधसा२३४मैहो । हता मा२३४खाम् । नभृ३आउवा२३ । ए३ । गवआ ॥(१) आजामिरत्के अव्यता । भुजेनपूत् । त्वा३ओणा३योः । सरजारोनयोषणा२३३मैहो । वरोना२३४यो । निमा३ १उवा२३ । ए३ । सदमा ॥(२) सावीरोदत्तसाधनाः । वियस्तस्ता । भा३रोदा३सायि । हरिःपवित्रे अव्यता २३४ऐहो । वेधाना२३४यो । निमा३१उवा२३ । ए३ । सदमा(३) ॥ ७† ॥ [१७] ३

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य द्वादशस्याध्यायस्य प्रथमः खण्डः ॥ १ ॥

* ऊ० गा० १६प्र० २ख० ११सा० ।
† ऊ० गा० २२प्र० २ख० ७सा० ।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीय-खण्डे—

अभ्रातृव्यइति प्रगाथात्मकं प्रथमं सूक्तम्,

तत्र प्रथमा।

२ १ ३१ २र ३२२ ३१२
अभ्रातृव्योअनात्वमनापिरिन्द्रजनुषासनादसि।
१ १ २ ३ १ २
युधेदापित्वमिच्छसे॥ १*॥

हे "इन्द्र!" त्वं "जनुषा" जन्मनैव "अभ्रातृव्यः" ["व्यन् सपत्ने (४, १, १४५)"—इति व्यन् प्रत्ययः] सपत्न-रहित इत्यर्थः, "अना" अनेतृकः ["ऋतश्छन्दसि (५, ४, १५८)"-इति कपः प्रतिषेधः] अनियन्तृक इत्यर्थः, "अनापिः" बन्धु-वर्जितश्च, "सनादसि" चिरादेव भ्रातृव्यादि-वर्जितोऽसि, यत्र त्वया "आपित्व" बान्धवम् "इच्छसे" इच्छसि, तत्र "युधेत्" युद्धेनैव युद्धं कुर्वन्नेव स्तोतृणां सखा भवसि॥ १॥

अथ द्वितीया।

१ २ ३ १ २ ३ १ २ ३ १ २ १ २र
नकीरेवन्तꣳसख्यायविन्दसेपीयन्तितेसुराश्वः।
३ २ ३ १ २ ३ १ २र ३ २ ३ १ २
यदाकृणोषिनदनुꣳसमूहस्यादित्पितेवहूयसे॥ २†॥ ४

* छ० आ० ५, १, २, १ (१भा० ८११९०) = ऋ० वे० ६, २, २, ४।

† ऋ० वे० ६, २, २, ५।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



हे इन्द्र ! "रेवतं" केवल-धनवन्तं यागादि-रहित मयष्टार माढ्य मन्यं मानवं "सख्याय" सखिभावाय "न किः विन्दसे" न लभसे नाश्रयसीत्यर्थः । अयष्टारो जनाः किं सन्तीत्यतआह—"सुराश्वः" [ टु ओ श्वि गति-वृद्धयोः ; सुरया वृद्धाः तद्वत् ] प्रमत्त-नास्तिकाः । "ते" त्वां "पीयन्ति" [ पीयति हिंसा-कर्मा ] हिंसन्ति तस्मान्नाश्रयतीत्यर्थः । "यदा" त्वं "नदनु" [ नद अव्यक्ते शब्दे ( भ्वा० प० )] यं स्तोतारं "कृणोषि" मदीयोऽयमिति यदा भावयसि, तदानीं संवहसि धनादिकं तस्मै वहसि । "आदित्" अनन्तरमेव तेन लब्धधनेन स्तोत्रा "पिता इव" पालयिता जनक इव "हूयसे" स्तुतिभिराहूयसे स्तूयस इत्यर्थः ॥ २ ॥ ४

५ र १ ४र २
॥ उक्थामदीयवम् ॥ अभ्रातृ३व्योअनातुवाम् । अ

१ २ १ र २ १ १र र १
नापा१यिरा२यि । द्रजनुषासना२३दसायि । यूधेदापा

१ ५ र २ ४ ५
यि । त्वमा२३यिच्छसाउ । वा३ ॥(१) युधेदा३पित्वमि

२ १ २ १ र
च्छसायि । नकायिरा१यिवा२ । तꣳसखियायवा२३यि

१ १ १ १ २
न्दसायि । पायियन्तितायि । सुरा २ ३ श्रुवाउ । वा

५र २ ४ र ५ र २ १ २ १
३ ॥(२) पीयन्ता३यितेसुराश्रुवाः । यदाका१र्णो२ । षि



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ १ २ २
तदनु॑ऽसमू२३हमायि। आदित्यितायि। वह्न२३यमा

२र १११
उ। वा३। स्तौषे३४५(३)॥१०*॥४

आत्वासहस्रमिति त्वचात्मकं द्वितीयं सूक्तम्,†

तत्र प्रथमा।

१ २ ३ २ ३ २ ३ १ २ ३ १ २
आत्वासहस्रमाशतंयुक्तारथेहिरण्यये।

२ ३ १ २ ३ १ २ ३ १ २
ब्रह्मयुजोहरयइन्द्रकेशिनोवहन्तुसोमपीतये॥१‡॥

हे "इन्द्र!" "त्वा" त्वां "सहस्र" सहस्र-सङ्ख्याका "हरयः" त्वदीया अश्वाः "आ वहन्तु" आनयन्त्वस्मद्यज्ञं, तथा "शतं" शत-सङ्ख्याकाश्च भवदीयाश्वाः त्वामावहन्तु [ यद्यपि द्वावेवास्य हरी तथापि तद्विभूतयोऽन्येऽपि बहवोऽश्वाः सन्ति। ननु युगपदनेकैरश्वैः कथं वाहयितुं शक्यत इत्यत आह— युक्ता इति ] "हिरण्यये" स्वर्ण-विकारे [ हिरण्य-शब्दाद् विकारार्थे विहितस्य मयटः "ऋत्व्यवास्त्वा (६, ४, १७५)"— इत्यादौ म-लोपो निपात्यते ] तादृशे "रथे" "युक्ताः" सम्बद्धाः [ बहूना मश्वाना शीघ्र-गमनाय रथे नियुक्तत्वाद् युगपदेव सर्वैरश्वैर्गन्तुं शक्यत इति भावः ]। कीदृशा हरयः? "ब्रह्म-

---

* ऊ० गा० ७प्र० १ख० १०वा०

† 'अभीवर्त्त लोचीयम्'—इति वि०

‡ ब० आ० २, २, १, २ ( १आ० ५०५ष० ) = ऋ० वे० ५, ७, १४, ४।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



युजः" ब्रह्मणा परिवृढेनेन्द्रेण युक्ताः [ यद्वा, ब्रह्मणास्मदीयेन स्तोत्रेण अस्माभिर्दत्तेन हविषा वा युक्ताः ] "केशिनः" केशाः सटाः तैर्युक्ताः। किमर्थम् इन्द्रस्य वहनम्? तत्राह—"सोमपीतये" सोमस्य पानाय यथास्मदीयं सोमं पिबेत्, तथा वहन्त्वित्यर्थः ॥ १ ॥

अथ द्वितीया।

२ ३ १ २ ३ २ २ १ २ ३ १ २
आत्वारथेहिरण्ययेहरीमयूरशेप्या।

१ १ २ ३ २ ३ १ २ ३ १ २ ३ १ २
शितिपृष्ठावहतांमध्वोअन्धसोविवक्षणस्यपीतये ॥ २* ॥

[ पूर्वं हर्यौ विभूतिरूपा अश्वाः इन्द्र मावहन्त्विति प्रार्थितम्, अधुना तावेवेन्द्र मावहतामिति प्रार्थ्यते—]"हिरण्यये" हिरण्मये "रथे" युक्तौ "मयूरशेप्या" मयूरवर्णः शेपो ययोस्तौ [ सुपां सुलुगिति ( ७,१,३९ ) विभक्तेडर्यादेशः ] "शितिपृष्ठा" श्वेतपृष्ठौ† एवम्भूतौ "हरी" अश्वौ हे इन्द्र! "त्वा" त्वाम् "आ वहताम्"। किमर्थम्? "मध्वः" मधुर-रसस्य "विवक्षणस्य" वक्तुमिष्टस्य स्तुत्यस्य‡ यद्वा वोढव्यस्य प्राप्तव्यस्य "अन्धसः" अन्नस्य सोमरूपस्य "पीतये" पानार्थम् ॥ २ ॥

---

* ऋ० वे० ५, ७, १४. ५।

† 'शितिपृष्ठा—नीलपृष्ठौ'—इति वि० ;

‡ 'अतिशयेन विवर्धितमधुरस्य'—इति वि० ;



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ तृतीया।

१ २ १ १ २ ३ १ १ ३ १ १
पिबात्वाऽ३ऽस्यगिर्वणःसुतस्यपूर्वपाइव।

१ १ २ १२३१ २ ३२ ३ १ २
परिष्कृतस्यरसिनइयमासुतिश्चारुर्मदायपत्यते॥ ३* ॥ ५

हे "गिर्वणः" गीर्भिर्वननीयः स्तुतिभिः सम्भजनीयेन्द्र! "सुतस्य" अभिषुतस्यास्य सोमस्य [क्रियाग्रहणं कर्त्तव्य मिति कर्मणः सम्प्रदानत्वाच्चतुर्थ्यर्थे षष्ठी (२,३,६२)] इम मभिषुतं सोमं "नु" क्षिप्रं "पिब"। तत्र दृष्टान्तः—"पूर्वपाइव"† [पूर्वः पूर्वेभ्यो देवेभ्यः प्रथमभावी सन् पिबतीति पूर्वपा वायुः, सक्षैन्द्रवायवे मुख्ये ग्रहे सर्वेभ्यः देवेभ्यः पूर्वं पिबति "यस्य देव दधिषे पूर्वपेयम्"—इति निगमान्तरम्; तादृशः] वायुरिव त्वमपि सर्वेभ्यो देवेभ्यः पूर्वं पिबेत्यर्थः। कीदृशस्य सोमस्य? "परिष्कृतस्य" अभिषवादिभिः संस्कृतस्य ["सम्पर्युपेभ्यः (६,१, १३८)"—इति करोतेर्भूषणे सुट्, "परिनिविभ्यः (८,३,७०)"—इति सुटः षत्वम्], "रसिनः" रसवतः। अपिच "इयमासुतिः"‡ अयमासवो मदकरः "चारुः" शोभनः सोमरसः "मदाय" हर्षाय हर्ष-जननाय "पत्यते" सम्पद्यते [पत्लृ गतौ (भ्वा० प०), यद्वा पत्यतिरैश्वर्य्य-कर्मा। मदाय—मदस्य पत्यते ईष्टे मदोत्पादने शक्त इत्यर्थः]॥ ३॥ ५

---

* ऋ० वे० ५, ७, १५, १।

† 'पूर्वपातारो ये ते यथा पिबन्ति तद्वत् पिबन्त'—इति वि०।

‡ 'चाद्युनिसृतपक्तिरित्यर्थः'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५र ४ १ ४ ५र ५ १ र
॥ अभीवर्त्तम् ॥ आत्वा३सा२ह्रमाभतोवा। यूक्ता

२र १ २ १ २ ३ ४
रथे। ह्रिराण्या१या२यि। ब्राह्मयुजौ३१२३४। ह्रय

५ १ १ २ १ २ ३१
इ। न्द्रकायिमा१यिना२ः। वह्रान्हु१सोरे। मपा३यि।

११११ ५र ४ २ ४ ५ ४ ५ १ र
ता२३४५यि ॥(१) आत्वा३रा३थायिह्रिरण्ययोवा। हारी

२र १ १ २ ३ ४र
मयू। रशायिपा१या२। यितिपृष्ठा३१२३४। वह्रता

५ २र १ १ १ १ ३१ १
स्मध्वोआन्धा१सा२ः। विवाक्षा१णा२। स्यपा३यि। ता

३ ११११ ५ ४ ३ ४ ५ ४ ५
२३४५। या२३४५यि ॥(२) पिबा३तू३वस्यगिर्वणोवा।

१ १र १ १ २ ३
ह्रुतस्यपू। बंपाभा१यिवा२। पारिष्क्ता३१२३४। स्य

४ ५ २११ र१ १ ३१
रसिनह्र। यमाद्व१ता२यिः। चारूमा१दा२। यपा३।

१ ३ १११
त्या२३४५। ता२३४५यि(३) ॥ १५* ॥ १

१र र १ २
॥ भारद्वाजम् ॥ आत्वासहा। समाभा १ ता२म्।

१ र१र र १ २ १ २ १
यूक्तारथेह्रिरण्यये। ब्रह्मायू१जा२ः। ह्रारयइ। न्द्रका

* ज० गा० ७प्र० १ख० १५सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



यिआ१यिना२ः । वद्दान्त१मो२३ । मा२पार३४औहो

वा । तार३४य ॥(१) आत्वारथायि । हिराण्या१या२

यि । हारीमयूरशेप्या । शितायिपा१ष्ठी२ । बाहतां

म्न । ध्वोआन्धा१सा२ः । विवाद्दा१णा२३ । स्वा२पा२

३४औहोवा । तार३४ये ॥(२) पिबातुवा । स्यगायिर्वा

१णा२ः । ह्तस्यपूर्वपाइव । परायिष्का१र्ता२ । स्वा२

सिनइ । यमाद्द१ता२यिः । चाह्मऔ१दार३ । या२पा

२३४औहोवा । त्यो२३४ते(३) ॥ १२* ॥ २

॥ अभिनिधनं काण्वम् ॥ औहोंहोहायि । आयाही ।

आत्वा। सा२३४हा॥ स्वामाआ२३४ताम्। यूक्ता२३४थायि।

हौरण्ययायि । ऐहोयि । आ२३४यिही । आऽह्मायू२३

४जो । हारायार३४ई । द्राकेशिनाः । ऐहोयि । आ

---

* ऊ० गा० १८-प्र० २-श्व० १२सा० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५ २ ३ ५ ३ २ ४
२३४यिहौ। वा इन्द्र२३४सो। मपा३यिता५या६५६यि॥(१)

२र १ २ १ २ १ २ ३ ५
औहोहोहायि। आयिहौ। आत्वा। रा२३४थायि।

२ ३ ५ २ ३ ५ २र १र
हायिरण्या२३४यायि। हारीमा२३४यू। राशेपिया।

२र १ ३ ५ २ ३ ५ २
ऐहोयि। आ२३४यिहौ। ग्रायितायिपा२३४र्षो। वा

३ ५ २र १ २र १ ३
हाता२३४म्मा। ध्वोअन्धसाः। ऐहोयि। आ२३४यि

५ २ ३ ५ ३ १ ४
हौ। वायिवत्ता२३४णा। स्यपा३यिता५या६५६यि॥(२)

२र १ २ १ १ २ ३ ५
औहोहोहायि। आयिहौ। पायिबा। तूर ३ ४वा।

२ ३ ५ १ ३ ५ २र १र २र १
स्यागिर्वा२३४णाः। सूतस्या२३४पू। वीपाद्वा। ऐहो

३ ५ २ ३ ५ २ १
यि। आ२३४यिहौ। पारिष्का२३४र्त्ता। स्यारासी२३

५ २ १र २र १ १ ५ २
५नाः। इयमाहुतायि। ऐहोयि। आ२३४यिहौ। चा

३ ५ २ २ ४ ३
रुम्मार ३ ४दा। यपा३त्या५ता ६ ५ ६ यि। आ २ ३ ४

५
भौ(३)॥ ३ *॥ [३] ५

* ऊ० गा० २३प० ३ख० ३सा०।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ आसोतेति प्रगाथात्मकं तृतीयं सूक्तम्,

तत्र प्रथमा।

१ २ ३ १ २ ३ २ ३ १र २र ३ १ २ ३ १ २
आसोतापरिषिञ्चताश्वन्नस्तोममप्तुरꣳरजस्तुरम्।
२ १ २ ३ १ २
वनप्रक्षमुदप्रुतम्॥ १ *॥

. हे ऋत्विज! "आसोत" सोमम् अभिषुणुत [ षुञ् अभिषवे (स्वा० उ०), लोटि छान्दसो (२, ४, ७२) विकरणस्य लुक्, "तप्तनप्तनथनाश्च (७,१,४५)"—इति तस्य तबादेशः]। किञ्च, "परिषिञ्चत" परितस्तं वसतीवर्यादिभिः सिञ्चत। कीदृशम्? "अश्वं न" अश्वमिव वेगिनं "स्तोमं" स्तोतव्यम्, "अप्तुरम्" अन्तरिक्षस्थितानामुदकानां प्रेरकम् "रजस्तुरं" तेजसां प्रेरकम्, "वनप्रक्षम्" उदकवत् क्षरणशीलम्, "उदप्रुतम्" उदके गच्छन्तं प्लवमानं सोममभिषुणुत अभिषिञ्चत च॥

"वनप्रक्षं"-"वनक्रक्षम्"—इति पाठौ॥ १॥

अथ द्वितीया।

३ १ २ ३ १ २ ३ १ २ ३ २ ३ २ ३ १ २
सहस्रधारंवृषभम्पयोदुहम्प्रियन्देवायजन्मने।
१ २ ३ २ ३ १ २ ३ १र २र ३ २ ३ २ ३ २
ऋतेनयऋतजातोविवावृधेराजादेवऋतम्बृहत्॥२†॥ ६

---

* उ० आ० ६, २, ४, २ (२आ० २२८५०) = ऋ० वे० ७, ५, ३८, १।

† ऋ० वे० ७, ५, ३८, ३।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"सहस्रधारं" बहुधारोपेतं, "वृषभं" कामानां वर्षकं, "पयोदुहं" क्षीरवत् सारभूतं रसं सिञ्चन्तं "प्रियं" प्रीणयितारं सोमं "देवाय" देव-सम्बन्धिने "जन्मने"* देवेभ्यस्तदर्थम् अभिषुणुत। "ऋतजातः" उदकाज्जातः "यः" "राजा" सोमः "ऋतेन" वसतीवर्याख्येनोदकेन "वि वावृधे" विशेषेण वर्द्धते। कीदृशः? "देवः" द्योतमानः स्तोतव्यो वा, "ऋतं" सत्यभूतः, "बृहत्" महान्। तमभिषुनुतेति पूर्वेण समन्वयः॥

"पयोदुहम्"-"पयोवृधम्"—इति पाठौ॥ २ ॥ †

२र ४र ५र　　२र ३ ४　५　५

॥ वाचःसाम॥ आसोतापा। द्योरिषिञ्चता ६ ए।

१　२ र　१ ०　१ २　०

आश्वन्नस्तो। मामधुरा २म्। राजस्तुरम्। वानप्रा

१　२　२　५

चा२३म्। ऊ२३हा३। प्रू२३४५तो६५हाइ(१)॥१०॥ [१]

३र ४र ५र　२र　३ २　५ ५

॥ वाचःसाम॥ आसोतापा। द्यो। रिषिञ्चता६ए।

१　१ र　१ ०　१ २　१ ०

आश्वान्नस्तो। मामधुरा२म्। राजस्तुरम्। वानप्रा

१　४　२　५　३ ४ ५

चा२३म्। ऊ२३हा३। प्रू३४५तो६हायि॥(१) वनप्र

२　३ ४　५ ५　१　२　१ ०

क्षाम्। ध्रौयि। उदप्रुता६मे। साहस्रधा। राम्वृ

---

* 'जन्मवतां मूलभूताय'—इति वि०।

† क० ग्रा० ९प० २ख० १सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



षभा२। पायोदुह्म्। प्रायन्दायिवा२३। या२३जा३।
न्मा३४५नोई्हायि॥(२) प्रियन्देवा। हो। यजन्मना६ए।
आर्त्तेनय:। आर्त्तंजाता२। वायिवावृधे। राजादा
१यिवा२३:। आ२३त्तां३म्। वृ३४५ हो६
हायि(३)॥ १७*॥ [२]

॥ सफम्॥ आसोता३परि। विञ्चा२३४ता। अ
श्वन्नस्तोमा२म्। अप्तुरा७रा३जा३। स्तू३२ ३ ४राम्।
वना। प्रचामू३दा३। प्र ३४५नोई्हायि॥(१) त्रनप्रा३
त्नमु। दप्र२३ताम्। सहस्रधारा२म्। वृषभाया३
यो३। दू३२३४हाम्। प्रियाम्। देवाया३जा३। न्मा
३४५नोई्हायि॥(२) प्रियन्दे३वाय। जन्मा२३४नायि।
ऋतेनयाआ२। तजातो३वा३यि। वा३ २ ३ ४द्धायि।

---

१ कौ० गा० ७प्र० १अ० ९७गा०



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ १ २ १ १र २ ४ २ ५
ऋतेनयाऔ२ । तज्जातोवा३यिवा३ । वा३२३४ह्नौयि ।

२ १र २ १ १ २ ४ २ ५
ऋतेनयाऔ२ । तज्जातो३वा३ । यि । वा३२३४ह्नौयि ।

२ र १ र १ ४ २ ५
राजा । देवाऔ ३ र्त्ता ३ म् । बृ३ ४ ५ हो ६हायि(३)

॥ १२* ॥ [३] ६

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य द्वादशस्याध्यायस्य

द्वितीयः खण्डः ॥ २ ॥

———

अथ तृतीय-खण्डे —

अग्निर्वृत्राणीति तृचात्मकं प्रथमं सूक्तम्,

तत्र प्रथमा ।

३ २ ३ १ २ ३ १ २ ३ १ २
अग्निर्वृत्राणिजङ्घनद्द्रविणस्युर्विपन्यया ।

१ २ ३ १र २र
समिद्धःशुक्र आहुतः ॥ १† ॥

"विपन्यया" सुस्तूयमानः "द्रविणस्युः" द्रविणं धनं स्तोतॄणामिच्छन् [ यद्वा, हविर्लक्षणं धनमात्मन इच्छन् "अग्निः"

---

* ऊ० गा० १२प्र० १ख० १३सा० ।

† ऋ० आ० ६, १, १, ४ ( १आ० ६८ष० ) = ऋ० सं० ४, ५, २७, २ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"वृत्राणि" आवरकाणि रक्षः-प्रभृतीनि तमांसि वा, "जङ्घनत्" हिंसन्तु। कीदृशोऽग्निः? "समिद्धः" सम्यक् दीप्तः अतएव "शुक्रः" शुक्लवर्णः "आहुतः" हविर्भिरभिहुतः॥ १॥

अथ द्वितीया।

१ २ ३ २ ३ १ ३ १ २ ३ २ ३ १ २
गर्भेमातुःपितुष्पिताविदिद्युतानोअक्षरे*।

१ २ ३ २ १ २ ३ २
सीदन्नृतस्ययोनिमा॥ २†॥

[ अत्र मातृ-पितृ-शब्दाभ्यां भूद्यावाभिधीयेते "द्यौः पिता, पृथिवी मातेति श्रुतेः ] "मातुः" भूम्याः गर्भे" गर्भस्थाने मध्ये "अक्षरे" क्षरण-रहिते वेद्याख्ये स्थाने‡ "वि दिद्युतानः" विशेषेण दीप्यमानः "पितुः पिता" द्युलोकस्य पालयिता हविषां प्रदानेन, एवम्भूतोऽग्निः "ऋतस्य" यज्ञस्य "योनिम्" उत्तरवेद्याख्यं "धिष्ण्यं" [सप्तम्यर्थे द्वितीया (३, १, ८५)] "आसीदन्" उत्तरवेद्यामुपविशन् अग्निर्वृत्राणि जङ्घनदित्यन्वयः॥ २॥

अथ तृतीया।

१ २ ३ २ ३ १ २ ३ १ २ ३ १ २
ब्रह्मप्रजावदाभरजातवेदोविचर्षणे।

२ ३ २ ३ १ २ ३ २
अग्नेयद्दीदयद्दिवि॥ ३¶॥ ७

---

* "अक्षरन्"—इति क० पु० पाठः।

† ऋ० वे० ४, ५, २७, ४।

‡ 'अक्षरे—अक्षीयमाणे स्थाने'—इति वि०।

¶ ऋ० वे० ४, ५, २७, ५।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



हे "जातवेदः" जातानां वेदितः! "विचर्षणे" विशेषेण द्रष्टः अग्ने! "प्रजावत्" पुत्र-पौत्र-सहितं "ब्रह्म" अन्नम् "आ भर" आहर "यद्" ब्रह्म "दिवि" द्युलोके "दीदयत्" दीप्यते। देवेष यत् प्रशस्तमन्नं राजते तदाहरेत्यर्थः ॥ ३ ॥ ७

अस्यप्रेषेति तृचात्मकं द्वितीयं सूक्तम्,

तत्र प्रथमा।

३२ ३ २ ३१२ ३१ २
अस्यप्रेषाहेमनापूयमानो
३ २३ २३ १ २ ३१२
देवोदेवेभिःसमपृक्तरसम्।
३ १ ३२३१२३ १२
सुतःपवित्रम्पर्येतिरेभन्
३ २३१ २ ३२ ३ १ २
मितेवसद्मपशुमन्तिहोता ॥ १* ॥

"अस्य" सोमस्य "प्रेषा" [प्रेषतिर्गत्यर्थः क्विपि रूपं, "सावेकाच (६,१,१६८)"—इति विभक्तेरुदात्तत्वम्;] प्रेरणेन, "हेमना" हिरण्येन "पूयमानः" ["हिरण्यपाणिरभिषुणोति"—इति हिरण्य-सम्बन्धः, तादृशः] "देवः" दीप्यमानः सोमः "रसम्" आत्मीयं "देवेभिः" देवैः सह "समपृक्त" सम्पर्चयति संयोजयति [पृची सम्पर्के (अदा० आ०)] ततः "सुतः" अभिषुतः सोमः "रेभन्" शब्दायमानः सन् "पवित्रम्" ऊर्णास्तुकेन निर्मितं "पर्येति"

---

* छ० आ० ६, १, ४, ४ (२भा० ११५४०) = ऋ० वे० ७, ४, ११, १।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



परिगच्छति। कमिव? "होता" देवानामाह्वाता ऋत्विक् "मिता इव" निर्मितान् "पशुमन्ति" बहुपशून् "सद्म" सदनानि यज्ञ-गृहान यथा पर्येति तद्वत्॥ १॥

अथ द्वितीया।

३ १ २र ३ २ १ २
भद्रावस्त्रासमन्या३ऽवसानो
३ ३ २ ३१ २ ३ १ २
महान्कविर्न्निवचनानिशꣳसन्।
१ २ ३क २र ३ १ २
आवच्यस्वचम्वोःपूयमानो
३ १ २र ३ १ २
विचक्षणोजागृविर्द्देववीतौ॥ २*॥

"भद्रा" भद्राणि कल्याणानि "समन्या" [ समनमिति सङ्ग्राम-नाम (२, १७, १६), तत्र साधुरिति यत्] सङ्ग्राम-योग्यानि "वस्त्रा" वस्त्राणि आच्छादकानि तेजांसि "वसानः" आच्छादयन् "महान्" "कविः" क्रान्तदर्शी ससपूत्र "निवच-नानि" नितरां वक्तव्यानि स्तोत्राणि† "शंसन्" "विचक्षणः" विशेषेण सर्वस्य द्रष्टा "जागृविः" जागरणशीलः। हे सोम! एवम्भूतस्त्वं "देववीतौ" देवानां वीतिर्भक्षणं यस्मिन् तद्देववीति-र्यज्ञः तस्मिन् "चम्वोः" अधिषवण-फलकयोः‡ "आ वच्यस्व" पात्राण्याविश [ वचिर्गत्यर्थः (भ्वा० प०) व्यत्ययेन श्यन्॥ २॥

* ऋ० वे० ७, ४, ११, २।

† 'वचनानि—ऋग्यजुः-साम-लक्षणानि'—इति वि०।

‡ 'चम्वोः—अधिषवण-चर्मणोरुपरि'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ तृतीया ।

१ २ २ १ २ ३ २ ३ १ १
सम्‌प्रियोमृज्यतेसानोअव्ये

३ १ २ ० २ ३ १ २ ३ २
यशस्तरोयशसाङ्क्षैतोअस्मे ।

१ १ २ ३ १ २ ३ १ २ ३
अभिस्वरधन्वापूयमानो

३ १ २ ३ २ ३ १ २
यूयम्पातस्वस्तिभिःसदानः ॥ ३ * ॥ ८

"यशसां" यशस्विनां मध्ये "यशस्तरः" अतिशयेन यशस्वी "क्षैतः" क्षितो भावः "प्रियः" प्रीणयिता सोमः "सानौ" समुच्छ्रिते "अव्ये" अवि-भवे पवित्रे "अस्मे" अस्मदर्थं "सम्मृज्यते" ऋत्विग्भिः परिपूयते "उ" [—अवधारणे] "पूयमानः" त्वं "धन्वा" अन्तरिक्षे "अभि स्वर" अभितः शब्दय "यूयम्" [प्रजायां बहुवचनम्†] हे सोम ! त्वं "नः" अस्मान् "स्वस्तिभिः" कल्याणतमैः पालनैः "सदा" सर्वदा "पात" रक्षत पालयेत्यर्थः ॥ ३ ॥ ८

२ १ ३ २ ३र
॥ उद्वयिवासिष्ठम् ॥ उद्वयि । अस्या३ ४औ

४र ५ १र २ १र २३४ ५ ३र २ ३र
होवा । प्रेषा । वे३मना । पूयमानाः । देवा३४औ

४र ५ १र २ १ २ २ ४ ५ ३ २
होवा । देवायि । भी३ःसम । पुत्तरसाम् । सुता३

* ऋ० वे० ७, ४, ११, ३ ।

† 'यूयं पात—बहुवचनमिदं सह देवैरित्यर्थः'—इति वि० ।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



४औहोवा । पवायि । आ३परि । एविरेभान् । मिता
३४औहोवा । वस्ता । आ३पय्रू । भा३४३ । तीहो
५ता६५६ ॥(१) अद्रा३४औहोवा । वस्ना । समनि ।
यावस्तानाः । मद्दा३४औहोवा । कवायिः । निवच ।
नानिग्र्ंसान् । आवा३४औहोवा । च्यस्वा । चमुवोः ।
पूयमानाः । विचा३४औहोवा । क्षणो । जागृविः ।
दा३४३यि । वा३चा५यिता६५६उ ॥(२) समू३४औहोवा ।
प्रियो । मृज्यते । सानोअव्यायि । यशा३४औहोवा ।
स्तरो । यशसाम् । चैतोअस्मायि । अभा३४औहोवा ।
स्वरा । धनुवा । पूयमानाः । उक्षवायि । यूया३औ
होवा । पाता । सुवस्ति । भा३४३यिः । सा३दा५
ना६५६(३) ॥ ६ * ॥ [१] ८

---

* क० गा० ७प्र० २ख० ६सा०



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथैतोन्विन्द्रमिति तृचात्मकं तृतीयं सूक्तम्,

तत्र प्रथमा ।

२ ३　२ ३　१ २　३ २　३ २ ३ १　१
एतोन्विन्द्रꣳस्तवामशुद्धꣳशुद्धेनसाम्ना ।
२ ३ ३ १ २ ३ १　२　३ २ ३ १ २
शुद्धैरुक्थैर्वावृध्वाꣳसꣳशुद्धैराशीर्वान्ममत्तु ॥ १ * ॥

[ अत्रेतिहासमाचष्टे—पुरा किलेन्द्रो वृत्रादिकान् असुरान् हित्वा ब्रह्महत्यादि-दोषेणात्मान मपरिशुद्ध मित्यमन्यत अथ तद्दोष-परिहारार्थं यदेन्द्र ऋषीनवोचत्—यूय मपूतं मां युष्मदीयेन साम्ना शुद्धं कुरुतेति। ततस्ते च शुद्धत्वापादकेन साम्ना शस्त्रैश्च परिशुद्ध मकार्षुः। पश्चात् पूतायेन्द्राय यागादिकर्मणि सोमादीनि हवींषि च प्रादुरिति। एषोऽर्थः शाट्यायनकब्राह्मणे प्रतिपादितः—"इन्द्रो वा असुरान् हत्वाऽपूत इवाभेध्यो ऽमन्यत सोऽकामयत शुद्धमिवमासन्नं शुद्धेन साम्ना स्तुयुरिति स ऋषीनब्रवीत् स्तुतमिति ततएव ऋषयः सामापश्यन् तेनास्तुवन्नेतोन्विन्द्रमिति ततो वा इन्द्रः पूतः शुद्धो मेध्यो भवदिति। तथाच अस्या ऋचोऽयमर्थः—] ऋषयः परस्परं ब्रुवन्ति—"नु" क्षिप्रम् "एत उ" आगच्छतैव। आगत्य च "शुद्धेन" शुद्धत्वापादकेन साम्ना, तथा "शुद्धैः" शुद्धि-हेतुभिः "उक्थैः" शस्त्रैश्च इन्द्रम् शुद्धमपापिनं कृत्वा "स्तवाम" स्तुयाम। ततः "साम्ना" शस्त्रैश्च "वावृद्धांसं" पाप-राहित्येन वर्द्धमानं तमिममिन्द्रं "शुद्धैः"

---

* छ० आ० ४, २, १, ९ (२भा० ७१४पृ०) = ऋ० वे० ८, ६, ११, २।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



शुद्धत्वादकैर्गव्यादिभिः "आशीर्वान्" आश्रयणवान् ["छन्दसीरः (८, २, १५)"—इति मतुपो वत्वम्, तादृशः सोमः] "ममत्तु" तमिन्द्रं मादयतु [माद्यतेश्छान्दसः (२,४,७६)श्लुः]॥

"शुद्धैराशीर्वान्"-"शुद्धआशीर्वान्"—इति पाठौ॥ १॥

अथ द्वितीया।

१ २ ३ २ ३ १ २ ३ १ २ १ २ ३ १ २
इन्द्रशुद्धोनआगहिशुद्धःशुद्धाभिरूतिभिः।
३ २ ३ १र २र ३ १ २
शुद्धोरयिन्निधारयशुद्धोममद्धिसोम्य॥ २*॥

हे "इन्द्र!" "शुद्धः" अस्मदीयैः सामभिः शस्त्रैश्च परिशुद्धस्त्वं "नः" अस्मान् "आ गहि" आगच्छ "शुद्धाभिः" "ऊतिभिः" ऊतयो मरुतः [अवन्ति सर्वत्र गच्छन्तीति वा] तेऽपि सामभिः शस्त्रैश्च परिपूताः तैः मरुद्भिः सह "शुद्धः" पाप-रहितः त्वम् आगहि। आगत्य च "शुद्धः" त्वं "रयिं" धनं अस्मासु "निधारय" अतितरां स्थापय। किञ्च, हे "सोम्य" सोमार्ह! "शुद्धः" त्वं "ममद्धि" सोमेन माद्य [मदी हर्षे (दि० प०) लोटि "बहुलञ्छन्दसि (२, ४, ७६)"—इति शपः श्लुः]॥

"ममद्धिसोम्य"-"ममद्धिसोम्यः"—इति पाठौ॥ २॥

---

* ऋ० मं० ८. ६, ३१, ६।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ तृतीया।

१ २ ३ १र २र ३ २ ३ १र २र ३ १ २
इन्द्र शुद्धो हि नो रयिᳩ शुद्धो रत्नानि दाशुषे।

३ १ २ ३ १ २ ३ १र २र
शुद्धो वृत्राणि जिघ्नसे शुद्धो वाजᳩ सिषाससि॥ ३ * ॥ ९

हे "इन्द्र !" "शुद्धः हिः" [—अवधारणे †] शुद्ध एव त्वं "नः" अस्मभ्यम् "रयिं" धनं प्रयच्छ। तथा "शुद्धः" त्वं "दाशुषे" हविर्दत्तवते यजमानाय "रत्नानि" रमणीयानि कनक-गवादीनि देहि। ततः "शुद्धः" पाप-रहितः त्व "वृत्राणि" अपामावरकान् कर्म-विघ्नकारिणं शत्रून् पापानि वा "जिघ्नसे" हंसि। ततः "शुद्धः" शत्रु-हनन-दोष- परिहाराय अस्मदीयैः सामभिः शस्त्रैश्च परिशुद्धस्त्वं वाजमन्नमस्मभ्यं "सिषाससि" प्रदातुमिच्छसि ‡ [यदा शत्रूनहं हन्यां तदा शुद्ध्युत्पादकैः सामभिः शस्त्रैश्च यूयं मां परिशुद्धं कुरुतेत्येवमस्मभ्यं धनमन्नञ्च दातुमिच्छसीत्यर्थः] ॥ ३ ॥ ९

२र र १
॥ शुद्धाशुद्धीयोत्तरम्॥ एतोन्विद्रᳩस्तवाइमा। शु

२ १ १ २ २ १र
द्धᳩशुद्ध। न। साम्ना२। शुद्धायिरु३क्थाइयिः। वा

५ ५ २ १र २ १ १ १
वार्ड्वार२३४ᳩसाम्। शुद्धैरा२३शी। र्वान्ममत्तु। इडा

---

* ऋ० वे० ६, ६, ३१, ४।

† 'हि नकारादर्थे, शुद्धस्त्वं यस्मात् रयिं धनं शुद्धं मिषाणय'—इति वि०।

‡ 'सिषासमि—साधयमि'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२३ ॥(१) इन्द्रशुद्धोनआगा२ही । शुद्धःशुद्धा । भिरू । लायिभा२यिः । शुद्धोरा२यीऽ३म् । निधा२रा२३४या । शुद्धोमा२३मा । धोसोमिय । इडा२३ ॥(२) इन्द्रशुद्धो हिनोरा२यीम् । शुद्धोरत्नानिदा । शुषा२यि । शुद्धो वा२नौ३ । णिजा२सा२३४सायि । शुद्धोवा २ ३ जाम् । सायिषासखि । इडा २ ३ भा ३ ४ ३ । औ २ ३ ४ ५ ई । डा(३) ॥ १२ * ॥ [१] ९

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य द्वादशसाध्यायस्य

तृतीयः खण्डः ॥ ३ ॥

---

अथ चतुर्थ-खण्डे—

अग्नेस्तोममिति तृचात्मकं सूक्तम्,

तत्र प्रथमा ।

अग्नेस्तोममन्मनामहेसिध्रमद्यदिविस्पृशः ।

देवस्यद्रविणस्यवः ॥ १ † ॥

---

* ऋ० गा० ७प्र० २ख० १२गा० ।

† ऋ० सं० ४, १, ५, २ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"द्रविणस्यवः" द्रविणं धनमिच्छन्तो वयं "दिविस्पृशः" सूर्यरूपेण आकाशं व्याप्नुवतो "देवस्य" द्योतमानस्य "अग्नेः" "सिद्धं" पुरुषार्थानां साधकं "स्तोमं" स्तोत्रम् "अद्य" अस्मिन्नहनि "मनामहे" ब्रूमः॥ १॥

अथ द्वितीया।

३ १ २ २ २ ३ २ ३ १र २र३ २
अग्निर्जुषतनोगिरोहोतायोमानुषेष्वा।

१ २ ३ २ ३ १ २
सयक्षद्दैव्यञ्जनम्॥ २ *॥

"होता" देवानामाह्वाता होम-निष्पादको वा "अग्निः" "मानुषेषु" "आ" वसति। "यः" अग्निः "नः" अस्माकं "गिरः" स्तुतीः "जुषतां" सेवताम् "सः" अग्निः "दैव्यं जनं" देव-सम्बन्धिनं जनं† "यक्षत्" यजतु॥ २॥

अथ तृतीया।

१ २ ३ १ १ ३ २ ३ २ ३ १ २
त्वमग्नेसप्रथाअसिजुष्टोहोतावरेण्यः।

१ २ ३ १र २र
त्वयायज्ञंवितन्वते॥ ३ ‡॥ १०

---

* ऋ० वे० ४, १, ५, २।

† 'दैव्यं जनं—देवानां स्वभूतं वसु-रुद्र-मरुत्-प्रभृतिकं जनम्'—इति वि०।

‡ ऋ० वे० ४, १, ५, ४।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



हे "अग्ने!" "जुष्टः" सर्वदा प्रीतः "वरेण्यः" सर्वैर्वरणीयः "होता" त्वं "सप्रथाः असि" सर्वतः पृथुर्भवसि [तथाहि यास्कः—"सप्रथाः सर्वतः पृथुः (निरु० नै० ६.७)"—इति]। किञ्च, सर्वे यजमानाः "त्वया" साधनेन "यज्ञं" "वि तन्वते"* ॥ ३ ॥ १०

अभित्रिपृष्ठमिति त्र्यचात्मकं द्वितीयं सूक्तम्,†

तत्र प्रथमा।

२ १ २ ३ १र ३ १
अभित्रिपृष्ठंवृषणंवयोधा

१ ३ १ २ ३ १ २
मङ्गोषिणमवावशन्तवाणी।

२ ३ १ २ ३ १ २ ३ १उ ३
वनावसानोवरुणोनसिन्धु-

१ २ ३ १ २ ३ १ २
विंरत्नधादयतेवार्याणि ॥ १ ‡ ॥

"त्रिपृष्ठं" त्रीणि पृष्ठानि स्तोत्राणि सवनानि वा यस्य स तथोक्तस्तं "वृषणं" वर्षकं "वयोधाम्" अन्नस्य दातारम् "अङ्गोषिणम्" अर्घोषवन्तं सोममभिलक्ष्य "वाणीः" स्तोतॄणां वाचः "अवावशन्त" शब्दायन्ते। "वना" वनानि उदकानि "वसानः" आच्छादयन् "वरुणो न" वरुणो यथा सिन्धूनाच्छादयति तद्वत्।

---

* 'ऋत्विजः विस्तारयन्ति'—इति वि०।

† 'पञ्चमस्याह्नः सम्पत्या मध्यन्दिनम्'—इति वि०।

‡ ऋ० शा० ९, १, ४, ६ (२भा० १२० पृ०)=ऋ० वे० ७, ३, २९, २।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"सिन्धुः" स्यन्दनशीलः, "रत्नधाः" रत्नानां दाता सोमः "वार्याणि" धनानि "दयते" प्रयच्छति स्तोतृभ्यः ॥

"अङ्गोषिणम्"-"अङ्गूषाणाम्"—इति पाठौ, "सिन्धुः"-"सिन्धून्"—इति च ॥ १ ॥

अथ द्वितीया।

१ २ ३ १ २ ३ १ १ २
शूरग्रामःसर्ववीरःसहावान्

१ २ २ १ २ ३ १ २
जेतापवस्वसनिताधनानि।

२ १ २ २ १ २ ३ १र
तिग्मायुधःक्षिप्रधन्वासमत्

२र ३ १र ३र २ १ २
स्वषाढःसाह्वान्पृतनासुशत्रून् ॥ २* ॥

हे सोम! त्वं "पवस्व"। कीदृगस्त्वम्? "शूरग्रामः" शूराणां ग्रामः सङ्घो यस्य सः, "सर्ववीरः" सर्वे वीरा यस्य स तथोक्तः, "सहावान्" सहनवान् "जेता" जयशीलः "सनिता" सम्भक्ता "धनानि" धनानां, "तिग्मायुधः" तीक्ष्ण-प्रहरण-साधनः,† "क्षिप्रधन्वा" क्षिप्र-सहनशील-धन्वा, "समत्सु" सङ्ग्रामेषु "अषाढः" असोढ़ा, "साह्वान्" अभिभवन्। कुत्र? "पृतनासु" शत्रु सेनासु। कान्? "शत्रून्" ॥ २ ॥

---

* ऋ० वे० ७, ३, २६, ३।

† 'तीक्ष्णायुधः—असि-परशु पाश-प्रभृतिभिरायुधैः सम्पन्नः'—इति वि०।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ तृतीया।

३ १२ ३ १ २ २ १
उरुगव्यूतिरभयानिकृण्वन्

२ ३ १२ २र ३ १२
त्समीचीनेआपवस्वापुरन्धी।

२ १२ १२ ३ २३ १२ १२
अपःसिषासन्नुषसःस्वा*ऽ३ऽर्गाः

२र ३२ ३२ ३ १ १
सञ्चिक्रदोमहोअस्मभ्यंवाजान्॥ ३† ॥ ११

हे सोम! "उरुगव्यूतिः" विस्तीर्ण-मार्गः त्वम् "उभयानि" स्तोतृभ्यः "कृण्वन्" कुर्वन्, "पुरन्धी"‡ इमे द्यावापृथिव्यौ "समीचीने" सङ्गते कुर्वन्, "आ पवस्व" आक्षर। "अपः" "उषसः" "स्वः" आदित्यं "गाः" रश्मींश्च "सिषासन्" सम्भक्तुमिच्छन् "सं चिक्रदः"¶ सङ्क्रन्दसे। "महः" महतः महान्ति "वाजानि" अन्नानि अस्मभ्यं दातुमिति शेषः॥ ३॥ ११

० १ ऽ २ ३र २
॥ सम्यावैयश्वम्॥ ओ३हायि। ओ३हा। ओहा।

१ ऽ २ २ २ २ १ २ ३
इयार। ओ३हा३ए। अभित्रिपा। ष्ठा३वुष। ण्म्व

---

* "स्व"—इति ऋ॰ पाठः।

† ऋ॰ वे॰ ७, ३, २६, ४।

‡ 'पुरं धारयितः'—इति वि॰।

¶ 'चिक्रदः—शब्दं कुर्वन्— इति वि॰।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



योधाम्। अङ्गोषिणाम्। अवाव। ग्रन्तवाणीः। स

नावसा। नो३वरु। णोनसिधूः। विरत्नधाः। हय

ते। वा३४३। रीयाऽ५णाई५६यि॥(१) प्रूरग्रामाः।

सर्ववी। रःसुहावान्। ओतापवा। स्वा३सनि। ता

धनानी। तिग्मायुधाः। क्षिप्रध। न्वासमत्सू। अषा

ढःसा। क्षा३न्यृत। ना३४३। सू३शाऽ५त्रू६५६न्॥(२)

उरुगव्य। ती३भर। यानिक्षणवान्। समीचीने।

आ३पव। स्वापुरन्धी। अपःषिषा। सा३नुष। सः

सुवर्गाः। ओ३हायि। ओ३चा। ओहा। इ्या२।

ओ३हा३ए। सञ्चिकदो। महोअ। म्मा३४३। भ्या

वाऽ५जाइ५६न्(३)॥ १०* ॥ [१] ११

* ऊ० गा० ७प्र० १ख० १७भा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ त्वमिन्द्रेति प्रगाथात्मकं तृतीयं सूक्तम्,

तत्र प्रथमा।

१२ ३१२ ३१ २र३१२
त्वमिन्द्रयशाअस्यृजीषीशवसस्पतिः।

२३१२ १२उ ३१३१२ ३१२
त्वंवृत्राणिहᳩस्यप्रतीन्येकइत्पुर्वनुत्तश्चर्षणीधृतिः॥१*॥

हे "इन्द्र! "त्वं" "शवसस्पतिः" शवसोऽन्नस्य बलस्य वा पालयिता, "ऋजीषी" ऋजीषोऽभिषुतः सोमः तद्वान्, त्वं "यशा असि" यशस्वी भवसि। कथमस्य यशस्वित्वं? तदाह— "अप्रतीनि" बलिभिरपि अप्रतिगतानि "वृत्राणि" रक्षांसि "अनुत्तः" अन्यैर्नेतुमशक्यः त्वम् "एकइत्" एकएव असहाय एव "चर्षणीधृतिः" रक्षात्वेन यजमानादि-मनुष्याणां धारकः "पुरु" बहुलं यथा भवति तथा "हंसि" सम्प्रहरसि। अतएवास्य यशस्वित्वम्॥

"शवसस्पतिः"-"शवसस्पते"—इति पाठौ, "इत्पूर्वनुत्तश्च-र्षणीधृतिः"—"नएकइदनुत्ताचर्षणीधृता"—इति च॥ १॥

अथ द्वितीया।

१२ ३१२ २१२ ३ १२३१२
तमुत्वानूनमसुरप्रचेतसᳩराधोभागमिवेमहे।

३२३१२ ३१२ ३१२३१२
महीवकृत्तिःशरणातइन्द्रप्रतेसुम्नानोअश्नवन्॥२†॥१२

---

* ऋ० आ० ३, २, १, ६ (१ भा० ५.१२४०)=ऋ० वे० ६, ६, १३, ५।

† ऋ० वे० ६, ६, १३, ६।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



हे "असुर" बलवत्! प्राणवत्! वा हे "इन्द्र!" यः उक्त-गुणोऽस्ति "तं" च "प्रचेतसं" प्रकृष्ट-ज्ञानं "त्वा" "उ" [—इत्यवधारणे] पितृवत् पोषकं त्वामेव "राधः" धर्मादि-साधनं धनं "नूनम्"*इदानीम् "ईमहे" याचामहे। तत्र दृष्टान्तः—"भागमिव" यथा कश्चित् पितरौ भागभूतं धनं याचते, तद्वत्; इन्द्रो यजमानेभ्यः स्तोतृभ्यश्च धनं प्रयच्छत्येव तस्मात् भागभूतं धनं यष्टारो वयं याचामहे। किञ्च हे इन्द्र! "महीव कृत्तिः" [कृत्तिर्यशोऽन्नं वा कृतीच्छेदने (रु० प०) करणे क्तिन्। कृतन्त्यनेनेति, इष्टयो] कृत्तिरिव "ते" तव "शरणा" शरणं गृहम् अन्तरिक्षं द्युलोके महद् वर्द्धते [अत्र यास्कः—"कृत्ततेर्यशोवान्नं वा। महीव कृत्तिः शरणा त इन्द्र। सुमहत्त इन्द्र शरणमन्तरिक्षे कृत्तिरिव (निरु० नै० ५, २२)"—इति]। किञ्च, "ते" तव स्व-भूतानि "सुम्ना" सुम्नानि मन्त्रादि-विषय-सुखानि च "नः" अस्मान् "प्राश्नुवत्" प्रकर्षेणाश्नुवतां व्याप्नुवन्तु [अश्नोतेर्लेट्यडागमः (३, ४, ९४)] ॥ २ ॥ १२

५४ २ ४ ५र ४र५ १
॥ अभीवर्त्तम् ॥ तुवा३मा३यिन्द्रयशा३सोवा। आ

र १र १ २ १ २ ३
ज्ञोषोञ। वसास्या१ता२रयिः। त्वम्भृत्वा३१२३४। पि

४५र र २ १ २ १ २
चृ७स्यप्रतीनिए। कआयित्पू१रू२। अनूत्ता१श्चा२।

३ २ १ ३ १ १ १ १ ५ ४ २ ४
षणा३यि। धा२३४५। ना२३४५यिः ॥(१) अनू३त्ता३श्च

---

* 'निश्चितम्'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५र ४ ५ १ २ १ २ १
र्षणीधृतौवा। आनुत्तस्व। षणायिधाश्त्तौरयिः। ता

र २ ३ ४५ २१ २ र १
मुत्वानू३१२३४। नमस्तुर। प्रचायिता१सा२म। राधौ

२ ३ २ १ ३ १ १ १ १
भा१गा२म। इवा३यि। मा२३४५। हा२३४५यि॥(२)

५र४ २ ४ ५र ४ ५ १ र २र १ २
राधो३भा३गमिवेमहोवा। राधोभागम्। इवायिमा१

१ र २ ३४५र २ १ २
हा२यि। माहोवका३१२३४। तिःशरणा। तआआ१

१ २ ३र २ १
यिन्द्रा२। प्रतायिम्ह१म्ना२। नोआ३। आ२३४५।

३ १ १ १ १
वा२३४५न(३)॥ १८*॥ [१]

२१ ४ ५र
॥ द्विर्हिङ्कारम्वामदेव्यम्॥ तुवमा२३यिन्द्रयशाअसा

१र र र र ऽ
यि। आज्जोषीशवसस्पतिस्त्वम्वृत्राणिहꣳस्यप्रतीनआयि

१ ३र २ १ १ २ १ २ ३र २
कओहो३। ऊम्मा२। पू२३रू। अनुत्तआर्षणीहो३।

१ १ ४५ २ १ ४
ऊम्मा२। धृतायिः। औ२३होवा॥(१) अनुत्ता२३स्व

५र १ र २र २
र्षणीधृतायिः। आनुत्तस्वर्षणीधृतस्त्तमुत्वानूनमस्तुराऽप्र

* ऊ० गा० ७प्र० २ख० १८सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



चोहो३। ऊम्मा२। ता२३साम्। राधोभागाऽमिवी चो३। ऊम्मा२। मद्दा। औ३होवा॥(२) राधोभा ३गमिवेमहायि। राऽधोभागमिचेमहेमहोवक्त्तिःशरणा ऽतऔहो३। ऊम्मा२। आ२३यिन्द्रा। प्रतेसुम्नाऽन औहो३। ऊम्मा२। अवान्। औ२३होवा। होऽ५इ। डा(३)॥ ७*॥ [२]

॥यशम्॥ त्वमिन्द्रा। यशाः। असायि। ऋजी षीशवसः। पतायिः। त्वम्वृत्राणी२३हं७सिथा। प्रती नाए२। कद्रत्पूरू२हो१। तस्थ। षा२णा२३४औहो वा। धा२३४र्त्ताः॥(१) अनुत्तश्वा। अनुत्तस्वा। षणी। धृतायिः। अनुत्तस्वर्षणी। धृतायिः। तमुत्वानू३नम सुरा। प्रावा२यि। तासा२म्। राधा२हो१यि।

---

ऋ० गा० १६प्र० २ख० ७गा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



भागम्। आ२यिवा२३४औहोवा। मा२३४वे॥(२)

राधोभागाम। राधोभागाम्। इवे। महायि। राधो

भागमिवे। महायि। महीवक्रा३र्त्तिःशरा। पाता२

यि। आयिन्द्रा२। प्रता२यिद्दो१यि। सुम्ना। नो२

आ२३४औहोवा। आ२३४वान्(३)॥ १४ * ॥ [३] १२

यजिष्ठन्त्वेति प्रगाथात्मकं चतुर्थं सूक्तम्,

तत्र प्रथमा।

यजिष्ठन्त्वाववृमहे देवन्देवत्रा होतारममर्त्त्यम्।

अस्य यज्ञस्य सुक्रतुम्॥ १ †॥

हे अग्ने! "यजिष्ठं" यष्टृतमं "त्वा" त्वां "ववृमहे" वृणीमहे सम्भजामहे। कीदृशं त्वाम्? "देवत्रा" देवेषु मध्ये "देवम्" अतिशयेन दानादि-गुणकम्, "होतारं" देवानामाह्वातारम्, "अमर्त्त्यम्" अविनाशिनम्, "अस्य" "यज्ञस्य" यागस्य "सुक्रतुं" सुष्ठु कर्त्तारम्॥ १॥

* ऊ० गा० १८प्र० ९ख० १४सा०।

† छ० आ० २, १, २, ६ (१भ.। २८३ पृ०) = ऋ० वे० ६, १, १९, ३।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीया।

२ १ २र ३ १ २ ३ १ २ ३ २३ १ २
अपान्नपात१सुभग१*सुदीदितिमग्निमुश्रेष्ठ†शोचिषम्।
१ २ ३ १ ३ १२ ३ २ ३ २उ ३ १ २ ३ २
सनोमित्रस्यवरुणस्यसोअपामासुम्नंयक्षतेदिवि॥ २‡ ॥१३

"ऊर्जः" अन्नस्य "नपातं" न पातयितारं¶ [ यद्वा, नप्तारं चतुर्थं हविर्लक्षणेनान्नेन आपो जायन्ते, अद्भ्यश्चौषधि-वनस्पतयस्तेभ्य एष जायत इति चतुर्थत्वम्§। "नभ्राण्नपात् ( ६, ३, ७५ )"—इति नञ् प्रकृतिभावः ] "सुभगं" शोभन-धनं "सुदीदितिं" सुष्ठु दीप्यन्तं "श्रेष्ठशोचिषं" प्रशस्यतम-तेजस्कम् अग्निं स्तौमीति शेषः। स तादृशोऽग्निः "नः" अस्मदर्थं "दिवि" द्योतमाने देवयजने द्युलोके वा "मित्रस्य" देवस्य "वरुणस्य" च "सुम्नं" सुखम् "आ" अभिलक्ष्य "यक्षते" यजतु। तथा सोऽग्निः "अपाम्" अब्देवतानाञ्च सुम्नमभि यजतु॥ २ ॥ १३

३ ४ २ ४ ५
॥ साध्यम् ॥ याऽ५ूजि। छन्वा३वा३वा३वृमहायि।
२र१र र र २ १ २ १ ७
देवन्देवत्रासोतार३राम्। आमर्त्तियम्। आस्ययाज्ञा

* "ऊर्जोनपातं"—इति ऋ० पाठः।

† "अग्निंश्रेष्ठ"—इति च ऋ०-पाठः।

‡ ऋ० वे० ६, १, २९, ४।

¶ ऋग्वेदीयपाठमवलम्ब्यैवं व्याख्यानम्।

§ 'अपां नपातम्—अपां पौत्रमग्निम्। अपां पुत्रका इन्द्राः; तेषु सञ्जातं पुत्रं पौत्रम्'—इति वि०।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२३। स्वार२३सू३। क्ता३४५तोऽ६हायि ॥(१) आऽ५प्सु।
यज्ञा३स्वा३सुक्रतूम्। अपान्नपातꣳसुभार२३गाम्। स्वदी
दितिम्। आग्निमू्ग्रे२३। ष्ठा२३शो३। चा३४५यिषो
ऽ६हायि ॥(२) आऽ५ग्निम्। उग्रे३ष्ठा३शोचिषाम्। स
नोमित्रस्यवरू२३णा। स्वासोअपाम्। आसुम्नाया२३।
चा२२ता३यि। दा३४५यिवोऽ६हायि(३) ॥ ३* ॥ [१]

॥ ऐध्मवाहसम् ॥ यजिष्ठन्त्वाववृमाहायि। देवन्देव
त्राहोतारममर्त्तियाम्। अस्ययज्ञस्यसुइहा। अस्ययज्ञ
स्यसूऽइहा। ऊयायि। ऊवो२३४वा। क्ता५तोऽ६हा
यि ॥(१) असायज्ञस्यसुक्रातूम्। अपान्नपातꣳसुभगꣳ
सुदीदितायिम्। अग्निमुग्रेष्ठशोइहा। अग्निमुग्रेष्ठाशो
ऽइहा। ऊवायि। ऊवो२३४। वा। चा५यिषोऽ६हा

* ऊ० गा० ८प्र० १ख० ३धा० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ र र २ १ र
यि ॥(२) अग्निमुश्रेष्ठशोचायिषाम्। सुनोमित्रस्यवरुण

र र
सोअपाम्। आसुम्नंयक्षताऽइहा। ऊवायि। ऊवोर

५ ४ ५
३४। वा। दा५यिवोईहायि(३) ॥ ३* ॥ [२] १३

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य द्वादशस्याध्यायस्य

चतुर्थः खण्ड॑ ॥ ४ ॥

---

अथ पञ्चम-खण्डे —

यमग्नइति तृचात्मकं प्रथमं सूक्तम्,

तत्र प्रथमा।

१ २ ३ २उ ३ २ १ १ २ ३ २ ३ २
यमग्नेपृत्सुमर्त्यमवावाजेषुयञ्जुनाः।

२उ ३ १ २ १ १ २
सयन्ताशश्वतीरिषः† ॥ १‡ ॥

हे "अग्ने!" "पृत्सु" सङ्ग्रामेषु "यं" "मर्त्यं" यजमानम् "अवाः" अवसि रक्षसि, "यं" पुरुषं "वाजेषु" सङ्ग्रामेषु "जुनाः" अवसि, "सः" नरः यजमानः "शश्वतीरिषः" तित्यान्य-

---

* ऊ० गा० १८प्र० १ख० ३सा०।

† "स्वाहा"—इति यजुष्यधिकः पाठः।

‡ ऋ० वे० १, ७, २२, २ = य० वे० ६, २९ :



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



आनि "यन्ता" नियन्तुं समर्थो भवति [पृत्सु—"पदादिषु मांस्पृत्स्नूनामुपसङ्ख्यानम् (६,१,६३)"—इति पृतना-शब्दस्य पदादेशः "सावेकाच (६,१,१६८)"—इति विभक्तेरुदात्तत्वम्। अवाः—अवः अकाराकारयोर्विपर्ययः, यद्वा लेटाडागमः, "इतश्च (३,४,९७)"—इति सिप इकार-लोपः। जुनाः—जुइति गत्यर्थः सौत्रो धातुः, लङ्, सिप्, क्र्यादिभ्यः श्ना; "बहुलञ्छन्दस्यमाङ्योगेऽपि (६,४,७५)"—इत्यड़ागमाभावः; यद्वृत्तयोगात् (८,१,३०)" अनिघातः। यन्ता—तृनो नित्त्वादाद्युदात्तत्वम् (६,१,१९७)। शश्वतीः—"उगितश्च (४,१,६)"—इति ङीप्॥ १॥

अथ द्वितीया।

१ २ ३ १र २र
नकिरस्यसहन्त्यपर्येताकयस्यचित्।

१ २ ३ १ २
वाजोअस्तिअवाय्यः॥ २*॥

हे "सहन्त्य!" शत्रूणामभिभवन-शीलाग्ने! "अस्य" त्वद्भक्तस्य यजमानस्य "कयस्यचित्" कस्यापि "पर्येता नकिः" आक्रमिता नास्ति। किञ्चास्य यजमानस्य "अवाय्यः" अवणीयः "वाजः अस्ति" बल-विशेषोऽस्ति† ॥ २॥

* ऋ० वे० १, २, २३, १।

† 'वाजमन्नं'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ तृतीया ।

१र २र३१२ ३ १ २ ३ १२
सवाजंविश्वचर्षणिरर्वद्भिरस्तुतरुता ।
१ २ ३ १ २
विप्रेभिरस्तुसनिता ॥ ३* ॥ १४

"विश्वचर्षणिः" सर्वैर्मनुष्यैरुपेतः† "सः" अग्निः "अर्वद्भिः" अश्वैः‡ "वाजं" सङ्ग्रामं "तरुता" तारयिता "अस्तु" "विप्रेभिः" मेधाविभिः ऋत्विग्भिः सहितः तुष्टोऽग्निः "सनिता" फलस्य दाता¶ [ विश्वचर्षणिः—विश्वे चर्षणयः अस्य "बहुव्रीहौ विश्वं सञ्ज्ञायाम् ( ६, २, १०६ )'—इति पूर्वपदान्तोदात्तत्वम् । अर्वद्भिः—ऋ गतौ ( भ्वा० प० ), "अन्येभ्योऽपि दृश्यते ( ३,२,७५ )"—इति वनिप्, भिसि "अर्वणस्त्रसावनञः (६, ४, १२७ )"—इति नकारस्य तृ-इत्ययमादेशः । तरुता—तॄ प्लवन-तरणयोः (भ्वा०प०), अस्मात् "ग्रसित-स्कभित-(७, २, ३४ )—इत्यादौ तृन्नन्तो निपातितः, निपातनादेवेकारस्योत्वम् ] ॥ ३ ॥ १४

---

* ऋ० वे० १, २, ९३, ४ ।

† 'विश्वस्य द्रष्टा'—इति वि० ।

‡ 'अर्वद्भिः—तृतीयाबहुवचनं चतुर्थीबहुवचनस्य स्थाने द्रष्टव्यम्, अर्वद्भ्यः'—इति वि० ।

¶ 'विप्रेभिः—विप्रेभ्यः सनिता, त्वां मुक्त्वा न कश्चिदन्यो दाता'—इति वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ साकमुक्षइति त्र्यचात्मकं द्वितीयं सूक्तम्;

तत्र प्रथमा ।

३ १२ ३ १ २ ३
साकमुक्षोमर्ज्जयन्तस्वसारो

२ ३ १ २ ३ २ ३ १ २
दशधीरस्यधीतयोधनुत्रीः ।

२ ३ १ २ ३ १र २र ३
हरिःपर्य्यद्रवज्जाःसूर्य्यस्य

१ २ ३ २ ३ २ ३ २
द्रोणन्ननक्षेअत्योनवाजी ॥ १* ॥

"साकमुक्षः" सह युगपत् सिञ्चाः [उक्ष सेचने (भ्वा०प०) क्विपि रूपम्, तादृश्यः] "स्वसारः" कर्म्म-करणार्थम् इतस्ततः सुष्ठु गच्छन्त्यः अङ्गुलयः "मर्जयन्त" सोमं शोधयन्ति [मृजू शोधनालङ्करणयोः ( अदा० प० ) ]। तथा "दश" दश-सङ्ख्याकाः "धीतयः" [ अङ्गुलि-नामैतत् ( निघ० २, ५, ७ ) ] "धीरस्य" समर्थस्य यज्ञस्य वा देवैर्ध्यातव्यस्य काम्यमानस्य वा सोमस्य "धनुत्रीः" प्रेरयित्र्यो भवन्ति। ततः "हरिः" हरितवर्णः सोमः "सूर्यस्य" "जाः" प्रादुर्भूता जाया दिशः ताः "पर्यद्रवत्" परितो गच्छति [ सूर्यस्य तेजसा हि आविर्भवन्तीति दिशान्तस्य जायात्वम् ] "अत्यः" अतनशीलः "वाजी न" अश्वइव स्थितः सोमः "द्रोणं" द्रोणकलशं "ननक्षे" व्याप्नोति [ नक्षतिर्व्याप्तिकर्मा ( निघ० २, १८, २ ) ] ॥ १ ॥

---

* ऋ० सा० ६, २, ५, ६ (२भा० १९६५०) = ऋ० वे० ७, ४, २, १ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीया।

२ ३ २ ३ २र ३ १र
सम्मातृभिर्न्नशिशुर्व्वावशानो
२र ३ १ २ ३ २
वृषादधन्वेपुरुवारोअद्भिः।
२ ३ १र २र ३ १ २ ३ १र
मर्य्योनियोषामभिनिष्कृतंयत्
२र ३ १ २ ३ १ २
सङ्गच्छतेकलशउस्रियाभिः॥ २* ॥

"वावशानः" देवान् कामयमानः "वृषा" कामानां वर्षकः अतएव "पुरुवारः" बहुभिर्वरणीयः सोमः "अद्भिः" मातृभूताभिः वसतीवरीभिः "सं दधन्वे" सन्धार्यते। तत्र दृष्टान्तः— "मातृभिर्न शिशुः" कामयमानः पुत्रो यथा मातृभिः पयःप्रदानेन सन्धार्यते [धवि गत्यर्थः (भ्वा० प०) कर्म्मणि लिटि रूपम्] "मर्य्यो न" मनुष्यो यथा "योषां" युवतिम् अभिगच्छति तद्वत्, "निष्कृतं" संस्कृतं स्वस्थानम् "अभि यन्" अभिगच्छन् "कलशे" द्रोणाभिधाने "उस्रियाभिः" अद्भिः गोविकारैः क्षीरादिभिर्वा "सङ्गच्छते" [गमेरकर्मकात् "समोगम्यृच्छिभ्याम् (१, ३, २९)"—इत्यात्मने पदम्॥ २॥

* ऋ० वे० ७, ४, ३, २।

† 'आदित्यरश्मिभिः'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ तृतीया ।

उतप्रपिप्यऊधरघ्न्याया

इन्दुर्धाराभिःसचतेसुमेधाः ।

मूर्द्धानङ्गावःपयसाचमूष्वभि

श्रीणन्तिवसुभिर्न्ननिक्तैः ॥ ३* ॥ १५

"उत" अपि च "अघ्न्यायाः" ["अघ्न्या"—इति गो नाम (निघ० २, ११, १ )] अहं तन्याविधाया गोः "ऊधः" पयःस्थानं सोमः "प्रपिप्ये" ओषध्यादिषु सोमः प्रविश्य प्रकर्षेण प्याययति [ प्यायतेर्लिङि "लिङ्यङोश्च (६, १, २९ )"—इति पी-भावः ] "सुमेधाः" शोभन-प्रज्ञः सोऽयम् "इन्दुः" सोमः "धाराभिः" "सचते" समवेति सङ्गच्छते । ततो "गावः" "चमूषु" [ चमन्ति भक्षयन्त्यत्र सोममिति चम्वो ग्रहादयः, तेषु ] स्थितं "मूर्द्धानं" समुच्छ्रितमिमं सोमं "पयसा" उदकेन "अभि श्रीणन्ति" अभित आच्छादयन्ति† । तत्र दृष्टान्तः— "निक्तैः" प्रक्षालितैः "वसुभिः" वस्त्रैः यथा आच्छादयन्ति तद्वत् ॥ ३ ॥ १५

---

* ऋ० वे० ७, ४, ९, ३ ।

† 'अभिश्रीणन्ति मिश्रयन्ति'—इति वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



॥ इन्द्रस्य वासिष्ठम् ॥ औहोवाहा ३ होयि। इन्द्रा। साकमुक्थो। मर्ज्जय। तस्वसाराः। दशधीरा। स्या ३धीत। योधनुत्रीः। हरिःपर्य्या। द्रवज्जाः। सुरि यस्या। द्रोणानना। चे३अति। यो३४३। ना३वा५ जा६ ५६यि ॥(१) सम्मातृभायिः। नमिप्रुः। वावश्रा नाः। वृषादधा। न्वे३पुरु। वारोचक्रायिः। मर्यो मयो। षा३मभि। निष्कृतंयान्। सङ्कृताथि। क लशो। ऊ३४३। स्वो३या५भा६५६यिः ॥(२) उतप्रपायि। प्या३ऊधः। अग्नियायाः। इन्दुर्द्धारा। भीः३स्वष। तेस्तुमेधाः। मूर्द्धानङ्गा। वा३ःपय। साचमूषू। औ होवाहा३होयि। इन्द्रा। औभिश्रीणा। गी३वस्त्र। भा ३४३यिः। ना३ना५यिक्ता६५६यिः(३) ॥ ७ ॥ [१]

---

* ज० गा० ८प्र० १ख० ७सा० ।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ २ २ र १ २ १

॥ पार्थम् ॥ ओ३वो३वोयि। साकमुक्षो। मर्ज्ज

१ २ ४ ५ २ १र २ १ १ २ ४

य। तस्वसाराः। दशधीरा। स्या३धीत। योधनु

५ २ १ २ १ २ २ ३ ४ ५ २र १

षोः। हरिःपर्य्या। द्रवज्जाः। हरियस्या। द्रोणन्न

२ १ २ २ ४

ना। क्षे३अति। यो३४३। ना३वा५जा६५६यि ॥(१)

२ र १ २ १ २ ३ ४ ५ २ र १

सम्मातृभायिः। नशिश्रुः। वावशानाः। वृषादधा।

२ १ २ ३ ४ ५ २ र १ २ १ २

को३गुह। वारोअङ्गायिः। मर्य्योनयो। षा३मभि। नि

२ ४ ५ २ १ २ १ र २ २

ष्कृतंयाम्। सङ्गच्छतायि। कलशे। ऊ३४३। सी

४ २ १ २ १र २ १

३या५भा६५६यिः ॥(२) उतप्रपायि। प्या३ऊधः। अघि

४ ५ २ १र २ १ २ ३ ४ ५ २र १

याया:। इन्दुर्धारा। ओ३:सच। तेस्तुमेधाः। मूर्द्धा

१ २ १ २ ३ ४ ५ २ २ २

नङ्गा। वा३:पय। साचमूषू। ओ३वो३वोयि। षभि

२र २ १ २ २ ४

श्रीणा। तो३वस्तु। भा३४३यिः। ना३ना५यिक्ता६५६

यिः(३) ॥ ८ ॥ [२]

* ऊ० गा० १२प्र० १ख० ८सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



॥ चौम्रनम् ॥ साकाम्। उत्तोमर्ज्जयन्ता। समा ३रा:। दृम्रधीरा। स्वा३धीत। योधनुत्रीः। पूरिः पर्यद्रवञ्ज्ञाःसू। रियार२३स्या। द्रोणन्नना। नेइ३अति। यो३४३। ना३षा५जा६५६यि ॥(१) साम्मा। तृभिर्न्न मिघृतुर्वा। वम्रा२३नाः। वृषादधा। न्वे३पुरु। वारो अन्नायिः। मर्य्यीनयोषासभिनायिः। क्रता२३यान्। सङ्गच्छतायि। कलषे। ऊ३४३। स्री३या५भा६ ५ ६ यिः ॥(२) ऊता। प्रपिप्यऊधरा। घिया३याः। इन्द्व द्वीरा। भी३ःसच। तेत्तुमेधाः। मूर्द्धानङ्गावःपयसा। चमू२३षू। अभिश्रीणा। तो३वसु। भा३४३यिः। ना ३ना५यिक्ता६५६यिः(३) ॥ ४ ॥ [३] १५

* क० गा० १८प्र० २ख० ४सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ पिबासुतस्येति प्रगाथात्मकं तृतीयं सूक्तम्,—

तत्र प्रथमा।

१२ ३१२३२३१२ ३१२

पिबासुतस्यरसिनोमत्स्वानइन्द्रगोमतः।

५१२ ३१२३२ १२ ३१२

आपिर्नोबोधिसधमाद्योवृधेऽ३ऽस्माँ३अवन्तुतेधियः॥१*॥

हे "इन्द्र!" "रसिनः" रसवतः "गोमतः" गोर्विकारैः पयःप्रभृतिभिः श्रयण-द्रव्यैर्युक्तस्य "नः" अस्मदीयस्य "सुतस्य" अभिषुतस्य ["क्रियाग्रहणं कर्तव्यम्"—इति कर्मणः सम्प्रदान-त्वाच्चतुर्थ्यर्थे (२, ३, ६२)—षष्ठी] ईदृशं सोमं "पिब", पीत्वा च "मत्स्व" तृप्तो भव। अपि च त्वं "सधमाद्ये" सह मादयितव्ये सहितैरस्माभिस्तर्पयितव्ये सोमे "आपिः" आपयिता बन्धुः सन् "नः" अस्माकं "वृधे" वर्द्धमानाय "बोधि" बुध्यस्व "ते" त्वदीया "धियः" बुद्धयः अनुग्रहात्मिकाः "अस्मान्" स्तोतॄन् "अवन्तु" रक्षन्तु॥

"सधमाद्ये"-"सधमाद्यः"—इति पाठौ॥ १॥

अथ द्वितीया।

३१२ ३२३१२३१र २र ३१२

भूयामतेसुमतौवाजिनोवयम्मानस्तरभिमातये।

३२३१२ ३१२३१२३१२

अस्माञ्चित्राभिरवतादभिष्टिभिरानःसुम्नेषुयामय॥२†॥१६

* उ० षा० ३, ४, ५, ७ (२भा० ४८५१९०) = ऋ० वे० ५, ७, २५, १।

† ऋ० वे० ५, ७, २५, २।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



हे इन्द्र! "सुमतौ" शोभनायां बुद्धौ अनुग्रह-बुद्धौ "वाजिनः" हविष्मन्तो वयं "भूयाम" वर्त्तमाना भवाम "अभिमातये" अभिमन्यत इत्यभिमातिः शत्रुः* तस्मै तदर्थं "नः" अस्मान् "मा स्तः" माहिंसीः [स्तृञ् हिंसायाम् (क्या० प०) माङि लुङि छान्दसत्वेलुक्]। अपितु "अभिष्टिभिः" अभ्येषणीयाभिः प्रार्थनीयाभिः "चित्राभिः" चायनीयाभिः बहुविधाभिर्वा त्वदीयाभिः "ऊतिभिः" "अस्मान्" "अवतात्" [अव रक्षणे (भ्वा० प०)]। तथा "नः" अस्मान् "सुम्नेषु"† सुखेषु "आ यामय"‡ आयतान् कुरु सर्वदा सुखिन एव कुरु॥ २॥ १६

॥ अभीवर्त्तम्॥ पिबा३सूरतस्यरसिनोवा। मात्स्वान इ। इगोमा१ता२ः। आपिशेर्वा३१२३४। धिसधमा। दियेवा१ह्वौ२यि। अस्माउवा१वा२। तुता३यि। धा २३४५। या२३४५ः॥(१) अस्माउ३वा३वन्तुतेधियोवा। वाऽस्माउवा। तुतायिधा१या२ः। भूयामता३१२३४ यि। सुमतौवा। जिनोवा१या२म्। मामास्ता१रा२।

* 'अथवा कश्चिद्रोगः'—इति वि०।

† 'सुम्नेषु—यज्ञेषु'—इति वि०।

‡ 'आयापयेत्यर्थः'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ २ १ २ ११११ ५र ४ २
भिमा३। ता२३४५। था२३४५यि ॥(२) माना२स्ता२

४ ५र ४ ५ १ २ १ २ १ र
रभिमातयोवा। मानस्तर। भिमाता१या२यि। वास्मा

२ ३ ४ ५र २ १ २
भ्यिन्त्रा३१२३४। भिरवतात्। अभायिष्टा१यिभा२यिः।

र १ २ ३ २ १ १ ११
आना:ह१म्ना२यि। षुया ३। मा २ ३ ४ ३। या २ ३

११
४ ५(३) ॥ ८* ॥ [१]

४ ११र ४ ३ ४ ५ ४ ५ ३ २
॥ उत्सेधम् ॥ पिबासुतस्यरसिनः। मत्स्वा। नआ

३र ४र ५ २ १र २
३४औहोवा। इगोमताऽ२ः। हा३१उवा२३। ऊ३४

५ ३र २ ४र ५र ४ ५ १ २ १
पा। आपा३यिर्नोबो। औहोवाहायि। धायिसधमा।

२ र १ २र २ ५ २ २
दियेवाई। हा३१उवा२३। ऊ३४पा। अस्मा

४ ५र ४ ५ ३ २ ४
३ऽअव। औहोवाहायि। तुता३यिधा५या६५६ः ॥(१)

४ ३र ४ र ५र र [३ २ ३र ४ ५
अस्मा९अवन्तुतेधियो। स्मान्। अवा ३ ४ औहोवा।

२ १र २ ५ ३ २र ४
तुतेधियाऽ२ः। हा३१उवा२३। ऊ३४पा। भूया३म

* ऊ० गा० ८प्र० १ख० ८सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



ता। औहोवाहायि। श्रमतीवा। जिनोवायम्।

हाउ१उवार३। ऊ३४पा। मानाउस्तर। औहोवाहा

यि। भिमा२ता५याइ५इ ॥(२) मानस्तरभिमातये। मा

नः। स्तरा३४औहोवा। भिमातयाऽरयि। हा३१उवा

२३। ऊ ३ ४ पा। अस्मा२न्चित्रा। औहोवाहायि।

भायिरवतात्। अभिष्टायिभिः। हा३१उवा। ऊ३४

पा। आना३:सुम्ने। औहोवाहायि। बुया२मा५या

इ५इ। ऊ२३४५(३) ॥ १५* ॥ [२]

॥ निषेधम् ॥ पिबासुतस्या३रसिनाः। मत्स्वानश्चा

यि। इन्द्रगोमता२ः। इहा३। आपा३यिन्नोबो। हा

ओ२३४हा। धायिसधमा। दियेबा२र्द्धायि। इहा३।

आस्मा३(१)आवा। हाहो२३४हा। तुता३यिधा५याइ५

* ऊ० गा० १२प्र० १अ० १५सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ ५ २५ १ २ १ २५ १
ई:। अस्माऽ३अवन्तू३तेधिया:। अस्माऽ३अवा। तुतेधि

१२ १२ ४ ५ २ ३ ५ १
या२:। इहा३। भूयाइमातायि। हाहो२३४हा। सू

२५ १ २५ १ २ १२ १ २ ४ ५
मतीवा। जिनीवा२३याम्। इहा३। मानाइत्तारा।

२ ३ ५ ३ १ ४ २५
हाहो२३४हा। भिमाइतापूयाइ५ए६यि॥(२) मानस्तर

१२ २ १ २ १ २ ५ १ १ २
भी३मातयायि। मानास्तरा। भिमातयाऽ२यि। इहा

१ २ ४ ५ २ ३ ५ १ २ १
३। आस्माइस्वायिवा। हाहो२३४हा। आविरवताम्।

२ १ २ १२ १ २ ४ ५ २
अभिष्टा२३यिभायि:। इहा३। अस्माइ:स्वायि। हा

२ ५ ३ २ ४ ३ १ १ १ १
हो२३४हा। बुयाइमापूयाइ५ए६। हो२३४५(३)॥१६*॥[३]

५ ४ १ ३ ४ ५ १ २ २
॥ पृष्ठम्॥ पिबा३सुतस्यरसिनः। मत्स्वानइन्द्रगो

१ २५ १ २ २ २ २ १
मता२३होइया। आपिर्नोबोधिसधमाद्येवृधा २ ३ होइ

२ १५ २ १ २
या। अस्माऽ३आ२३वा। तुतायिधा२ ३या ३ ४ ३:॥(१)

५ ४ २ ३ ४ २ ५ १ २ २ १
अस्माइ३ऽ२अवन्तुतेधिया:। अस्माऽ३अवन्तुतेधियार ३ हो

---

* ऊ० गा० १३प्र० १ख० १६गा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



इया । भूयामतेस्तुमतीवाजिनोवयार२३ॐचोइया । मा

नस्तार२३रा । भिमातार२३या३४३यि ॥(२) माना३स्तर

भिमातयायि । मानस्तरभिमातयार२३यिहोइया । अस्मा

स्त्रिआभिरवतादभिष्टिभार२३यिचौइया । आनःसूर२३म्ना

यि । पुयामार२३या३४३ । औ२३४५ई । डा(३) ॥१२*॥[४]

॥ जमदग्नेःसाम ॥ पिबासुतस्यरसिनोमत्स्वाचाउ ।

ना२ः । इन्द्रा२गोमतार२३ः । चाउ । आपिन्ना२वो ।

धिसाधमा२ । दियेवृधार२३ । चाउ । अस्माॐअवा

२३ । चा । तुते३होर२ । यार२३४औचोवा । धियऊ

२३४५ ॥(१) अस्माॐअवन्तुतेधियोस्मान्हाउ । आ२ ।

वन्तू२तेधियार२३ः । चाउ । भूयामा२ते । स्तुमतीवा

२ । जिनोवयार२३म् । चाउ । मानास्तरार२३ । चा ।

* ऋ० गा० १६म० ९ख० १२सा० ।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ २ १ ३ ५र र २ ३ १ १ १ १
भिमा३होर। या२३४औहोवा। तयज्ञ २ ३ ४ ५ ॥(२)

२र र र र र १ १ १र
मानस्तरभिमातयेमानोहाउ। स्ता२:। अभा२यिमा

२ १र र १ ७
तया२३यि। हाउ। अस्माञ्चा२यिना। भिरावता२

१ २ र १ ७
त्। अभिष्टिभा२३यि:। हाउ। आना:सुम्ना २ ३ यि।

१ ३ २ १ २ ५र र १ ३
हा। षुया ३ हो २। या २ ३ ४ औहोवा। मयज्ञ

१ १ १ १
२ ३ ४ ५(३) ॥ १६* ॥ [५] १६

अथ त्रिरस्मैसप्तेति त्टचात्मकं चतुर्थं सूक्तम्,

तत्र प्रथमा।

१ २ ३ २ ३ १ २
त्रिरस्मैसप्तधेनवोदुदुह्रिरे

३ २ ३ १ २ ३ १ २
सत्यामाशिरम्परमेव्योमनि।

३ २ ३ १र २र ३ २ ३
चत्वार्यन्याभुवनानिनिर्णिजे

१ २ ३ २ ३१र २र
चारूणिचक्रेयहतैरवर्द्धत ॥ १† ॥

---

* ऊ० गा० १८प्र० २खा० १६सा०।

† छ० आ० ६, २, २, ७ (२भा० १८८पृ०) = ऋ० वे० ७, २, २३, १।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"परमे व्योमनि" विविधसोमभवनं गमनं देवानामत्रेति व्योमा यज्ञः, तस्मिन् स्थिताय यद्वा परमे व्योमनि अन्तरिक्षे वर्त्तमानाय "त्रिः सप्त" एकविंशति-सङ्ख्याकाः "धेनवः" प्रीणयित्र्यो गावः "सत्यां" सत्यं यथार्थभूतम् "आशिरम्" आश्रयमाणं "दुदुह्रिरे" दुहन्ति [यद्वा, त्रिःसप्त द्वादश मासाः पञ्चर्त्तवः त्रय इमे लोका असावादित्य एकविंश इति, एतैः सर्वैः सह गोषु उत्पद्यते तद्भावो दुहन्तीति]। किञ्चायं सोमः "अन्या" अन्यानि "चत्वारि" "भुवनानि" उदकानि वसतीवरीस्तिस्रैकधना इति, तानि चतुःसङ्ख्याकानि "चारूणि" कल्याणानि उदकानि "निर्णिजे" निर्णेजनाय परिशोधनाय "चक्रे" करोति। "यद्" यदा अयम् "ऋतैः" यज्ञैरेव "वर्द्धितः" वर्द्धितवान् तदा करोति॥

"दुदुह्रिरे," "परमेव्योमनि"-"दुदुह्रे," "पूर्व्येव्योमनि"—इति पाठौ॥ १॥

अथ द्वितीया।

१र २र ३ १ २ ३ १ २
स्रभक्षमाणो अमृतस्य चारुण

१ २उ ३ १ २ ३ १ २
उभे द्यावा काव्येना वि शश्रथे।

१ २ ३ २ ३ २ ३ १ २ २
ते जिष्ठा अपो मंहना परि व्यत

१ २ ३ २ ३ १ २ ३ १ २ ३ २
यदी देवस्य श्रवसा सदो विदुः॥ २*॥

* ऋ० ७, २, २३, २।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"सः" "भक्ष्यमाणः" "चारुणः" कल्याणस्य "अमृतस्य" उदकस्य ["क्रियाग्रहणमिति कर्म्मणः सम्प्रदान-सञ्ज्ञा, "चतुर्थ्यर्थे बहुलम् (२, ३, ६२)"—इति षष्ठी] चारूदकं भक्ष्यमाणः [इकारलोपश्छान्दसः (३, ४, ९७)] भिक्ष्यमाणः यष्टृभिः याच्यमानः सन् "उभे" "द्यावा" [द्यावादेशस्य द्वन्द्वे विहितत्वात् उत्तरपदाभावेऽपि द्वन्द्वः प्रतीयते] उभे द्यावापृथिव्यौ "काव्येन" कवि-कर्म्मणा "वि शश्रथे"* विहतकारातिशयेन निभिन्नेन प्रज्ञनोदकेन सम्पूरयतीत्यर्थः। किञ्च "तेजिष्ठाः" अतिशयेन दीप्तानि "अपः" उदकानि "मंहना" महत्त्वेन "परि व्यत" तदा परित आच्छादयति। "यदि" यदा ऋत्विजः "देवस्य" द्योतमानस्य सोमस्य "सदः" स्थानं "श्रवसा"† हविषा युक्ताः सन्तः "विदुः" यागार्थं जानन्ति लभन्ते तदा आप्नोतीति। [विद ज्ञाने (अदा० प०) "सिजभ्यस्त (३, ४, १०९)"—इति झेर्जुसादेशः॥

"भक्ष्यमाणः"-"भिक्ष्यमाणः"—इति पाठौ॥ २॥

अथ तृतीया।

१ २ ३ १र २र ३ १

तेऽअस्यसन्तुकेतवोऽमृत्यवो

२ ३ १ २ ३ १र २र

दाभ्यासोजनुषीउभेअनु।

---

* 'विशश्रथे—विविधं शिथिलीकरोति'—इति वि०।

† 'श्रवसा—यशसा बलेन वा'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ २ ३ १ २ ३ २र ३ १
येभिर्नृम्णाच देव्याच पुनत

२र ३ १ १
आदिद्राजानम्मननाअगृभ्णात ॥ ३* ॥ १७

"अस्य" एतादृगस्य सोमस्य "केतवः" प्रज्ञापकाः सर्वैस्सायनीया रश्मयः । कीदृशाः ? "अमृत्यवः" मरण-धर्म-रहिताः अत एव "अदाभ्यासः" ["दभेश्चेति वक्तव्यम् ( ७, ३, ६८ वा० )"— इति यत् ] परैरहिंस्यास्वेतादृशा अस्य रश्मयः "उभे" "जनुषी" जन्मना स्थावर-जङ्गमात्मके द्वे "अनु" लक्षीकृत्य "सन्तु" रक्षन्तु [ ओषधीनामग्रे सोमो रेतो निषिञ्चति यस्मः मनुष्याणाञ्च धाराः स्रवति खलु ] सोऽयं "येभिः" यैः केतुभिः "नृम्णा" नृम्णानि बलानि "देव्या" देवार्हाणि चान्नानि "पुनते" प्रेरयति । "आदित्" अभिषवानन्तरमेव† "राजानं" सोमं "मननाः" मननीयाः स्तुतयः "अगृभ्णात" परिगृह्णन्ति प्राप्नुवन्तीत्यर्थः "हृग्रहोः"—इति छान्दसो भकारः ॥ ३ ॥१७

१ ५र ४५र४५र र
॥ मारुतम् ॥ चा२ ३ ४यिः । अस्मैसप्तधेनवोदुद्रौ ।

४ ५ २ १र र २ र १
र्होत्रायिरायि । सत्यामाशिरम्परमायि । वियोमानी२ ।

---

* ऋ० तै० ७, १, २३, ३।

† 'आन -'इत्'—इति पदपाठो'—इति वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१र र २ १ २ ३

चत्वार्यन्याभुवना । निर्निर्णायिजा२३यि । चारुणा२३

५ १र१ २र ५ २ ४ १

४यिवा । क्रीयद्दतैः । आवा३र्द्दा५ता६५६ ॥(१) सा२३

५ र र ४ ५ र ४ ५ १ र र र र

४: । भक्षमाणोअमृतस्यचौ । चारुणाः । उभेद्यावाका

र २ २ र र ' र २

व्येना । विश्वआथार्यि । तेजिष्ठाअपोमंहना । परि

२ ३ ५ २ १ २र १ २

व्याता२३ । यादीदा२३४यिवा । स्वश्रवसा । सादी३

४ १ ५ र ४ ५र र

वा५यिद्दू६५६ः ॥(२) ते२३४ । अस्यसन्तुकेतवोअमौ ।

४ ३ १ र र र २र १ १र

होर्ध्यावाः । अदाभ्यासोजनुषी । उभेआनू२ । येभि

५ र २ १ २ २ ५

र्नृम्णाचदेव्या । चपुनादा२३यि । आदिद्रा २ ३ ४जा ।

२१ २र १ २ ४

नम्मननाः । आगा३र्ण्णा५ता६५६(३) ॥ १२* ॥ [१] १७

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य द्वादशस्याध्यायस्य

पञ्चमः खण्डः ॥ ५ ॥

---

* ऊ० गा० प्र० १४० १२ना० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ षष्ठे खण्डे—

अभिवायुमिति तृचात्मकं प्रथमं सूक्तम्,

तत्र प्रथमा।

३ २ ३ १ ३क २र ३ २
अभिवायुंवीत्यर्षागृणानो

२ ३ १र १र ३ १ २
ऽ३ऽभिमित्रावरुणापूयमानः।

३ १र२र ३ १२ ३ २
अभीनरन्धीजवनꣳरथेष्ठा

३ १ ३ १२३१२
मभीन्द्रंवृषणंवज्रबाहुम्॥ १* ॥

हे सोम! "गृणान:" स्तूयमानस्त्वं "मित्रावरुणा" मित्रावरुणौ च पानाय "अभि" गच्छ। किञ्च "नरं" सर्वस्य नेतारं, "धीजवनं" बुद्ध्या समं वेगं कुर्वाणं,† "रथेष्ठां" रथे तिष्ठन्तम् [अनेनाश्विनावभिधीयते; एकवचनन्तु प्रत्येक-विवक्षया समुदाय-विवक्षया वा; एतादृशावश्विनौ चाभिगच्छ]। तथा "वृषणं" कामानां वर्षकं "वज्रबाहुं" वज्र-युक्त-हस्तम् "इन्द्रं" च त्वं पानाय "अभि" गच्छ॥ १॥

---

* ऋ० वे० ७, ४, २०, ४।

† 'धीजवनं—धीर्बुद्धिः तया जवनं वेगवन्तम् अथवा मनोजवैरश्वैः गन्तारम्' —इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



चत्वार्य्यन्याभुवना। निर्निर्णायिजा२३यि। चारुणा२३४यिवा। क्रीयद्दतैः। आवा३द्वा१५ताइ५६॥(१) सा२३४ः। भक्षमाणोअमृतस्यचौ। द्वारुणाः। उभेद्यावाक्काव्येना। विश्वश्राथा२यि। तेजिष्ठाअपोमꣳहना। परिव्याता२३। यादीदा२३४यिवा। स्यश्रवसा। सादी३४वा५यिदू६५६ः॥(२) ते२३४। अस्यसन्तुकेतवोअमौ। द्वौर्ष्यावाः। अदाभ्यासोजनुषी। उभेआनू२। येभिर्नृम्णाचदेव्या। चपुनादा२३यि। आदिद्रा२३४जा। नभ्मननाः। आगा३म्णा१५ताइ५६(३)॥ १२*॥ [१] १७

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य द्वादशस्याध्यायस्य

पञ्चमः खण्डः॥ ५॥

---

* ऊ० गा० द्म० १ष० १२षा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ षष्ठे खण्डे—

अभिवायुमिति तृचात्मकं प्रथमं सूक्तम्,

तत्र प्रथमा ।

३ २ ३ २ ३क २र ३ २
अभिवायुंवीत्यर्षागृणानो
२ ३ १र १र ३ १ २
ऽ३ऽभिमित्रावरुणापूयमानः ।
३ १र२र ३ १ २ ३ २
अभीनरन्धीजवनꣳरथेष्ठा
३ १ ३ १२३१२
मभीन्द्रंवृषणंवज्रबाहुम् ॥ १* ॥

हे सोम ! "गृणानः" स्तूयमानस्त्वं "मित्रावरुणा" मित्रावरुणौ च पानाय "अभि" गच्छ। किञ्च "नरं" सर्वस्य नेतारं, "धीजवनं" बुद्ध्या समं वेगं कुर्वाणं,† "रथेष्ठां" रथे तिष्ठन्तम् [ अनेनाश्विनावभिधीयते ; एकवचनन्तु प्रत्येक-विवक्षया समुदाय-विवक्षया वा ; एतादृशावश्विनौ चाभिगच्छ]। तथा "वृषणं" कामानां वर्षकं "वज्रबाहुं" वज्र-युक्त-हस्तम् "इन्द्रं" च त्वं पानाय "अभि" गच्छ ॥ १ ॥

---

* ऋ० वे० ७, ४, २०, ४।

† 'धीजवनं—धीर्बुद्धिः तया जवनं वेगवन्तम् अथवा मनोजवैरश्वैः गन्तारम्' —इति वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीया।

२ १ १८ ३ १ २ ३ ३ ३ २ ३ १ २ ३ १ २
अभिवस्त्रासुवसनान्यर्षाभिधेनूःसुदुघाःपूयमानः।
३ २ ३ १८ २८ ३ १२३ १ २ ३ १ २
अभिचन्द्राभर्त्तवेनोहिरण्याभ्यश्वान्रथिनोदेवसोम॥ २* ॥

हे "सोम!" अस्माकं "सुवसनानि" सुपरिधानानि "अभि" गमय [यद्वा, सुवसनानि शोभन-वस्त्र-सहितानि "वस्त्रा" वस्त्राण्याच्छादकानि धनानि "अभि" गमय। किञ्च "पूयमानः" पवित्रेण त्वं "सुदुघाः" सुष्ठु पयसो दोग्ध्रीः "धेनूः" नवप्रसूतिका गाः "अभि" प्रापय। अपिच "चन्द्राणि" आह्लादकानि† "हिरण्यानि" "भर्त्तवे" भरणाय पोषणाय "नः" अस्माकम्‡ "अभि" गमय। तथा हे "देव" स्तोतव्य! हे "सोम!" "रथिनः" रथवतः अश्वान् अस्माकम् "अभि" प्रापय॥ २॥

अथ तृतीया।

३ १ २ ३ १८ २८ ३ २उ ३ १ २ ३ १ २
अभीनोअर्षदिव्यावसून्यभिविश्वापार्थिवापूयमानः।
२ २उ ३ १ २ ३ १ २ ३क २८ ३ १ २ ३ १ २
अभियेनद्रविणमश्नवामाभ्यार्षेयञ्जमदग्निवन्नः॥ ३¶ ॥१८

हे सोम! पवित्रेण "पूयमानः" त्वं "दिव्या" दिव्यानि

* ऋ० वे० ७, ४, १०, ५।

† 'चन्द्राणि—काम्यानि'—इति वि०।

‡ 'नः—अस्मभ्यम्'—इति वि०।

¶ ऋ० वे० ७, ४, ११, १।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



दिवि भवानि "वसूनि" धनानि "नः" अस्माकम् "अभ्यर्ष" अभिगमय तथा "पार्थिवा" पार्थिवानि पृथिव्यां भवानि "विश्वा" विश्वानि सर्वाणि धनान्यभिगमय। तथा "येन" त्वदीयेन सामर्थ्येन "द्रविणं" धनं "वयम्" "अश्नवाम" अभि व्याप्नुयाम तत् सामर्थ्यम् "अभि" गमय। किञ्च "आर्षेयम्" ऋषीणामृषिपुत्राणां योग्यं धनं "जमदग्निवत्" जमदग्नेर्यथा त्वं प्रापय एवं "नः" अस्माकमपि अभ्यर्ष [ यद्वा, आर्षेयम्, ऋषीणां योग्यं मन्त्रं जमदग्नेः स्वभूतं मन्त्रं यथा स्वादुतमम् अकार्षीः एनमस्माकं तादृशं मन्त्रं स्वादुतमं कुर्विति मन्त्र द्रष्टा स्तोता कुत्सो नाम ऋषिः प्रार्थयते ] ॥ ३ ॥ १८

॥ पार्थम् ॥ ओ३ह्वो३ह्वोयि। अभिवायूम्। वी३
निप। षागृणानाः। अभिमित्रा। वरूणा। पूयमानाः।
अभीनराम्। धी३जव। न७रथेष्ठाम्। अभिइन्द्राम्।
वृषणम्। वा ३ ४ ३। आ३वापुह्न ६ ५ ६ म् ॥ (१)
अभिवस्त्रा। सुवस। नानियर्षा। अभिधेनूः। स्वदु
घाः। पूयमानाः। अभिचन्द्रा। भर्त्तवम्। नोहिर
ण्या। अभियश्वान्। रथिनः। दा३४३यि। वा३सो





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ र १र २ १ १ ३ ४ ५
पुमाइ५६ ॥(२) अभीनोआ । पा३दिवि । यावसूनी ।

२ १ २ १ २ १ ३ ४ ५ २ १र
अभिविश्वा । पा३र्थिवा । पूयमाना: । अभियेना ।

२ १ १ ३ ४ ५ २ २ २ १र
द्रविणम् । अश्नवामा । औ३हो३होयि । अभियर्षं ।

१ १ २ २ ४
या ३ जमत् । आ ३ ४ ३ । ग्ना ३ यिवा ५ न्ना ६ ५ ६:

(३) ॥ १४* ॥ [१] १८

अथ† यज्जायथाइति तृचात्मकं द्वितीयं सूक्तम्,

तत्र प्रथमा ।

१र १र ३ १ २ ३ १ २
यज्जायथा अपूर्व्य मघवन्वृत्रहत्याय ।

१ २ ३ १ २ ३ १ २ ३ १र २र
तत्पृथिवीमप्रथयस्तदस्तभ्नाउतोदिवम् ॥ १‡ ॥

हे "अपूर्व्य"¶ त्वत्तो व्यतिरिक्तेन पूर्वेण वर्जित ! हे "मघवन्" मंहनीय-धनवन् ! "इन्द्र !" "वृत्रहत्याय" वृत्रहननाय§ "यद्" यदा त्वं "जायथा:" उत्पन्न: प्रादुर्भूतोऽसि "तत्" तदानीमेव

---

* ऊ० गा० ८प्र० २अ० १४सा० ।

† 'उक्तोऽभिप्लवः । उक्तः पृष्ठ्यः । उक्तोऽभिजित् । इदानीं स्वरसामानः'—इति वि० ।

‡ ऋ० वे० ६, ६, १२, ५ ।

¶ 'अपूर्वगुण !'—इति वि० ।

§ 'वृत्रहन्त्र इन्द्रोऽभिधीयते, तस्मै वृत्रहत्याय हविर्दद्म इति वाक्यशेषः'—इति वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"पृथिवीं" प्रथमानां भूमिम् "अप्रथयः" प्रथितां दृढामकरोः। "उत" अपि च "तत्" तदानीमेव "दिवं" द्युलोकम् अन्तरिक्षेण "अस्तभ्नाः" निरुद्धामकार्षीः [एतादृशं वीर्यं त्वदन्यस्य न सम्भवतीत्यर्थं द्योतयति अपूर्व्येति पदम्]॥

"उतोद्दिवम्"-"उतद्याम्"—इति पाठौ॥ १॥

अथ द्वितीया।

१ २ ३ १ २ ३ २ ३ २ ३ १र २र
तत्तेयज्ञोअजायततदर्कउतहस्कृतिः।
१र २र ३ १ २ ३ २ ३ १उ ३ १ २
तद्विश्वमभिभूरसियज्जातंयच्चजन्त्वम्॥ २*॥

हे इन्द्र! "यद्" यदा त्वम् अजायथाः तदानीं "ते" त्वदर्थं "यज्ञः" अग्निष्टोमादिः "अजायत" सोम-पानार्थमभूत्। "उत" अपिच "तद्" तदानीं "हस्कृतिः" [हस हसने (भ्वा०प०) हासकारी प्रीत्यर्थं क्रियमाणो हर्ष-सूचको द्वितीय-मन्त्रोऽपि अजायत। किञ्च तदा "यद्" "जातं" भूतजातं "यच्च" "जन्त्वम्" [कृत्यार्थे त्व-प्रत्ययः] जनितव्यं विश्वमस्ति, "तत्" "विश्वं" सर्व्वम् "अभिभूः असि" स्व-महिम्ना अभिभूतवानसि॥ २॥

अथ तृतीया।

३ १ २ ३ १र २र ३ १र २र ३ २
आमासुपक्वमैरयआसूर्य्यꣳरोहयोदिवि।
३ १र २र ३ २ ३ २ ३ १ २ ३ २
घर्मन्नसामन्तपतासुवृक्तिभिर्जुष्टङ्गिर्वणसेबृहत्॥३†॥१९

* ऋ० वे० ५, ६, १२, ६। † ऋ० वे० ५, ६, १९, ७।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



हे इन्द्र! "आमासु" अपक्वासु गोषु "पक्वं" पयः "ऐरयः" प्रेरय [ तथा च मन्त्रः—"आमासुचिद्दधिषे पक्वमन्तः" इति। किञ्च, "दिवि" द्युलोके "सूर्य्यम्" "आरोहयश्च" [ पूर्वं पणयो-नामासुरा अङ्गिरसां गा अपहृत्यान्धकारावृते कस्मिंश्चित् पर्वते स्थापितवन्तः, ततोऽङ्गिरसः इन्द्र स्तुत्वा गाः पुनरस्मभ्य-माहरेति तैरुक्तम् इन्द्रो गवां स्थानं तमसावृतं दृष्ट्वा तत्र गो-प्रदर्शनाय द्युलोके सर्वप्रकाशकं सूर्य्यमारोहितवान् ] स्थापित वानसि [ "चादि-लोपे विभाषा (८, १, ६२)"—इति पूर्वस्य ऐरयइत्यस्य न निघातः। अथ परोक्षतोऽर्द्धर्चः—] हे स्तोतारः! "सुवृक्तिभिः" शोभनाभिः स्तुतिभिः "न तपत" इन्द्रं तोस्णीकुरुत [ इन्द्रं स्तुतिभिः यथा तपन्ति तद्वत् ]। ततः "गिर्वणसे" गीर्भिर्वननीयायेन्द्राय "जुष्टं" प्रीतिकरं पर्य्याप्तं वा "बृहत्" महत् बृहदाख्यं वा "साम" गायत ॥३॥१९

अथ मत्स्यपायीति तृचात्मकं तृतीयं सूक्तम्,

तत्र प्रथमा।

१र २र ३ २ ३ १ २ ३ १र २र
मत्स्यपायितेमहः पात्रस्येवहरिवोमत्सरोमदः।

१ २ ३ २ ३ १ २ ३ १ २ ३ १ २
वृषातेवृष्णइन्दुर्वाजीसहस्रसातमः॥ १* ॥

हे "हरिवः" हरिभ्यां तद्वन्निन्द्र! "महः" महान् पूज्यो-ऽयं सोमः "पात्रस्येव" पात्रेणेव सोमपात्रेण यथा धार्यते सोमः,

* ऋ० वे० २, ४, १८, १।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



तत्सदृशेन त्वया [ तृतीयार्थे षष्ठी ( २, १, ८५ )। यद्वा, 'पात्रस्य' 'ते' तव स्वभूतः 'महः' महान् सोमइति वा योजना ] "अपायि" पीतः [ आशंसाया विवक्षितार्थत्वात् भूतेऽर्थे प्रयोगः ] यतः पिब अतो "त्सि" माद्यसि मादयस्व वा। "मत्सरः" मद-साधनः, "मदः" तर्पयिता ; "वृषा" वर्षिता, "इन्दुः" क्लेदयिता आह्लाद-कारीत्यर्थः, "वाजी" अन्नवान् अन्नकार्य्य-तृप्ति-सद्भावात् अन्नवानित्युच्यते, "सहस्रसातमः" अपरिमित-दातृतमः सहस्र-पुरुष-सम्भजन-पर्यन्त-शक्त्यतिशयी वा एवं महानुभावः सोमः सम्पादितस्तं पिबेत्यर्थः ॥ १ ॥

अथ द्वितीया।

१ २ ३ २उ ३ २ ३ १ २
आनस्तेगन्तुमत्सरोवृषामदोवरेण्यः।
३ १ २ ३ १ २ ३ १र २र
सहावाꣳइन्द्रसानसिःपृतनाषाडमर्त्त्यः॥ २* ॥

हे इन्द्र! "ते" त्वां "मत्सरः" मर्षण-साधनः सोमः "आगन्तु" आगच्छन्तु। कीदृशोऽयम् ? "वृषा" वर्षकः "मदः" तर्पयिता, "वरेण्यः" वरणीयः, "सहावान्" सहायवान् अस्मद्दत्तेन सोमेन सहायवान् सन् "सानसिः" अस्माभिः सम्भजनीयः, "पृतनाषाट्" शत्रुसेनाया अभिभविता अमर्त्त्यश्च भवेति ॥ २ ॥

* ऋ० वे० २, ४, १८, २।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ तृतीया।

२उ ३ १ २ ३ २ ३ १ २ ३ १ २
त्वꣳ ह्यिङ्गशूरः सनिता चोदयो मनुषो रथम्।
३ २ ३ १ २ ३ २उ ३ २ ३ २ ३ १ २
सहावान्दस्युमव्रतमोषः पात्रन्नशोचिषा ॥ ३* ॥ २०

हे इन्द्र! "त्वं" "हि" खलु "शूरः" शौर्योपेतः "सनिता" दातासि। अतः "मनुषः" मनुष्यस्य मे "रथं" रंहणं स्यन्दनं मनोरथं वा स्वर्ग-गमन-साधनं यज्ञार्थं रथं वा "चोदयः" प्रेरय। किञ्च त्वं "सहावान्" भूत्वा "दस्युम्" उपक्षयितारम् "अव्रतम्" अकर्म्माणम् अननुष्ठायिनम् "ओषः"† दह। किमिव? "शोचिषा" दीप्त्या ज्वालया अग्निः "पात्रन्" स्वाधारं पात्र-विशेषमिव यागाधिकारी सन् यो न यजते, तं देहीत्यर्थः ॥ ३ ॥ २०

५ २ ४ ५ ४र ५ २र १ २र १
॥ कालेयम् ॥ मत्स्यिया३पायितेमदाः। पात्राख्येवा।
२ ३ २र १ २ ३र २ १ र र र
हरिवोमा२३। त्सरोमदा३ः। वा२३४। षातेवृष्णे।
२ २ १र ३ २ २ ५ ४
आ३यिन्दूः। वाजायिसहौ। वा३४३ओ२३४वा। सहस्रा
५र २ ४ ५ ४ ५ २ १ २ १ २ ३
५तमाः ॥(१) आनस्ते३गन्तुमत्सराः। वृषामदो। वरे

* ऋ० वे० ९, ४, १८, ३।

† 'ओषः पात्रं न—दीप्तः पात्रं न'—इति नि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ १ २ १ ५र २ २
णिधा२३: । सद्दा३ । वा२३४ । इन्द्रसा । ना३सा

१ ३र २ २ ५ ४
यि: । पृतनाषौ । वा३४३ओ३४वा । अमा५र्त्तियाः ॥(२)

५ २ ४र५ ४ ५ २र १ २र १ २ ३र १ १
तुव२हो३शूर:सनिता । चोदायोमा । तुषोरथा२३म् ।

२ १ ५ २ २ १र
सद्दा३ । वार३४न् । दस्यु,म । व्रा३ताम् । ओषा: ।

३र २र २ ५ ४ ४
पाञ्चौ । वा३४३ओ३४वा । नशो५च्चिषा । द्यो५ई

डा(३) ॥ १६* ॥ [१] २०

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य द्वादशस्याध्यायस्य

षष्ठ खण्ड: ॥ ६ ॥

---

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।

पुमर्थांश्चतुरो देयाद् विद्यातीर्थ-महेश्वर: ॥ १ २ ॥

॥ इति षष्ठस्य द्वितीयोऽर्द्धप्रपाठक: ॥ †

इति श्रीमद्राजाधिराज-परमेश्वर-वैदिकमार्गप्रवर्त्तक-

श्रीवीर-बुक्क-भूपाल-साम्राज्य-धुरन्धरेण सायणा-

चार्य्येण विरचिते माधवीये सामवेदार्थ-प्रकाशे

उत्तराग्रन्थे द्वादशोऽध्याय: ॥ १२ ॥

---

* ऊ० गा० २१प्र० २ख० १६सा० ।

† 'षष्ठस्य प्रपाठकस्य द्वितीयोऽध्याय: समाप्त:'—इति वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्म्ममे तमहं वन्दे विद्यातीर्थ-महेश्वरम् ॥ १२ ।

## ॥ अथ त्रयोदशोऽध्याय आरभ्यते ॥

तत्र,

प्रथमे खण्डे—

पवस्ववृष्टिमिति पञ्चर्चं प्रथमं सूक्तम्,

तत्र प्रथमा ।

१ २ ३ २उ ३ २ ३ २ ३ १र २र
पवस्ववृष्टिमासुनोपामूर्म्मिंन्दिवस्परि ।
३ १ २ ३ १र २र
अयक्ष्माबृहतीरिषः ॥ १* ॥

हे सोम ! त्वं "दिवः" द्युलोकात् "वृष्टिं" वर्षं "नः" अस्माकं "सु" सुष्ठु "आ पवस्व" समन्तात् चरण† । एतदेव दर्शयति—"अपाम्" उदकानाम् "ऊर्मिं" तरङ्गं दिवः "परि" आपवस्व । अपिच "अयक्ष्माः" यक्ष्म-रहितानि अनामयानि "बृहतीः" महान्ति "इषः" अन्नानि आपवस्व ॥ १ ॥

---

* ऋ० वे० ७, १, ६, १ ।

† विवरणमते तु 'चासु' इत्येकं पदम् अतएव 'चासु सोमधारासु'—इति व्याख्यातम् ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीया।

१ २ ५ १ २ ३ २ ३ १ २ ९ १ २ २ २

तयापवस्वधारयाययागावइहागमन्।

१ ९ ३ १ २ ९ २

जन्यासउपनोगृहम् ॥ २* ॥

हे सोम! त्वं "तया" तादृश्या "धारया" "पवस्व" चर। कीदृश्येत्यत्राह—"यया" यादृश्या त्वदीयया धारया "जन्यासः" जन्याः अनु-जनपद-भवाः† "गावः" "इह" अस्मिंल्लोके "नः" अस्माकं सम्बन्धि "गृहम्" "उप आ गमन्" उपागच्छन्ति ॥ २ ॥

अथ तृतीया।

३ १ २ ९ १ २ ३ १ २ ३ १ २

घृतम्पवस्वधारयायज्ञेषुदेववीतमः।

३ १ २ ३ १२ २२

अस्मभ्यंवृष्टिमापव ॥ ३‡ ॥

हे सोम! "यज्ञेषु" "देववीतमः" अतिशयेन देवकामः त्वम् "अस्मभ्यं" स्तोतृभ्यः "घृतम्" उदकं "धारया" "पवस्व" चर; "वृष्टिं" वर्षञ्च "आ पव" ॥ ३ ॥

---

* ऋ० वे० ७, १, ६, २।

† 'जन्यासः—जनसम्भिताः'—इति वि०।

‡ ऋ० वे० ७, १, ६, ३।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ चतुर्थी।

१ २ ३ २ १ २ ३ १ २ ३ १ २
सुनऊर्ज्जेव्याऽ२ऽव्यय*म्पविन्नन्धावधारया।

३ १ २ ३ २ ३ १ २
देवासःशृणवन्हिकम् ॥ ४† ॥

हे सोम! "सुत:" अभिषुतस्त्वं "न:" अस्माकम् "ऊर्जे" अन्नाय "अव्ययम्" अविमयं‡ "पवित्र" धारया सम्पाते "वि धाव" प्राप्नुहि "देवास:" देवा अपि¶ "हि कं शृणवन्" गमन-वेलाया-मुत्पन्नं त्वदीयं शब्दं शृणवन्तु ॥ ४ ॥

अथ पञ्चमी।

१ २ ३ १ २ ३ १ २
पवमानोअसिष्यदद्रक्षाऽ९स्यपजङ्घनत्।

३ २ ३ २ ३ १ २
प्रत्नवद्रोचयन्रुचः ॥ ५ § ॥ १

"रक्षांसि" राक्षसा: "अप जङ्घनत्" "रुच:" आत्मीया दीप्तीः "प्रत्नवत्" पुराणवत् "रोचयन्" दीपयन् "पवमान:" सोम: "असिष्यदत्" स्यन्दते ॥ ५ ॥ १

---

* "व्ययं"—इति ऋ०-पाठ:।

† ऋ० वे० ७, १, ६, ४।

‡ 'अथवा वि अन्तरिक्षात् अव्ययं पवित्रं धाव'—इति वि०।

¶ 'देवासः शृणवन् हि कम्—एतच्छृण्वन् हे देवाः! कं प्रजापतिरूपं सोमम् अथवा कं पानीयं सोमं'—इति वि०।

§ ऋ० वे० ७, २, ६, ५।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ प्रत्यस्माइति चतुर्ऋचं द्वितीयं सूक्तम्,

तत्र प्रथमा ।

१ २ ३ १ २ ३ १ २ ३ १ २

प्रत्यस्मैपिपीषतेविश्वानिविदुषेभर ।

३ २ ३ २ ३ १ २ ३ १ २

अरङ्गमायजग्मयेपश्चादघ्वनेनरः ॥ १* ॥

हे अध्वर्यो ! "नरः" नेता यज्ञानां त्वम् "अस्मै" इन्द्राय "प्रति भर" अभिभर सोमं प्रयच्छेत्यर्थः । कीदृशायेन्द्राय? "पिपीषते" पातुमिच्छते "विश्वानि" सर्वाणि वेद्यानि "विदुषे" जानते "अरङ्गमाय" पर्य्याप्त-गमनाय "जग्मये" यज्ञेषु गमन-शीलाय "अपश्चादघ्वने" [ दघ्निर्गतिकर्म्मा निघ०२,१४,६२ ) ] अपश्चाद्गमनाय सर्वेषामग्रगामिने ॥

"नरः"-"नरे"—इति पाठौ ॥ १ ॥

अथ द्वितीया ।

१ २ ३ १ २ ३ १ २ ३ १ २

एमेनम्प्रत्येतनसोमेभिःसोमपातमम् ।

१ २ ३ २ ३ १ २ ३ २ ३ १ २

अमत्रेभिर्ऋजीषिणमिन्द्रꣳसुतेभिरिन्दुभिः ॥ २† ॥

हे अध्वर्यवः ! "सोमेभिः" सोमैः करणभूतैः "सोमपातमम्" अतिशयेन सोमस्य पातारम् "एनम्" इन्द्रम् "आ" अभिमुखं

* ऋ० आ० ४, २, २, १ (१भा० ७१९ पृ०) = ऋ० मे० ८, ७, १४, १ ।

† ऋ० मे० ८, ७, १४, २ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"प्रत्येत" प्रतिगच्छत ["ईम्"—इति निपातोऽनर्थकः]। कीदृश मिन्द्रम्? "अमत्रेभिः" अमत्रैः सोमपात्रैः ग्रह-चमसादिभिः "ऋजीषिणम्" ऋजीषं शत्रूणामुपार्जकं बलं, तद्वन्तं, [यद्वा, ऋजीषिणमित्युत्तरत्र सम्बन्धनीयं, 'सुतेभिः' अभिषुतैः 'इन्दुभिः' सोमैः, 'ऋजीषिणं' गतसारः सोमः ऋजीषः तद्वन्तम्। अथवा अमत्रै अपरिमितैरभिषुतैः सोमैः ऋजीषिणम्। ऋजेर्गत्यर्था-द्दीणादि-साधन ऋजीष-शब्दः, ततो मत्वर्थीयइति सङ्गतमित्यर्थः। एवंविधमिन्द्रं प्रति गच्छतेत्यन्वयः। अन्य आह—अमत्रेभिः ग्रहचमसादिभिः गतैः सोमैः ऋजीषिणं बलवन्तमिन्द्रं प्रति गच्छतेति] ॥ २ ॥

अथ तृतीया ।

१२ ३२ ३४ २ ३ १ २ ३ १२
यदीसुतेभिरिन्दुभिःसोमेभिःप्रतिभूषथ ।
२ ३ १ २ ३ १ २ ३२उ ३ १र २र
वेदाविश्वस्यमेधिरोधृषत्तन्तमिदेषते ॥ ३* ॥

हे अध्वर्यवः! "सुतेभिः" अभिषुतैः "इन्दुभिः" उन्दनशील दीप्तैर्वा "सोमेभिः" सोमैः "यदि प्रतिभूषथ" इन्द्रं प्रति यदि यूयं गच्छथ [भू प्राप्तौ (म्वा० उ०)—इत्यस्यैतद्रूपं] तदानीं "मेधिरः" मेधावी† [मेधो यज्ञः (निघ०३,१७,४) तद्वान् वा] स इन्द्रः "विश्वस्य" विश्वं सर्वं भवदीयं कामं "वेद" वेत्ति जानाति ज्ञात्वा च "धृषत्" शत्रूणां धर्षकः सन् "तमित्" तं तं काममेव "एषते" प्रापयति ॥ ३ ॥

* ऋ० वे० ४, ७, १४, ३ ।
† 'मेधिरः—मेधमः पश्वादेः, धृषत् धारणार्थम्'— इति वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ चतुर्थी ।

३ १ २ ३ २उ ३ १ २ ३ १ २ ३ २
अस्मा अस्मा इदन्धसोध्वर्यो प्रभरा सुतम् ।
३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
कुवित्समस्य जेन्यस्य शर्धतोभिशस्तेरवस्वरत्* ॥४†॥२

"अस्मा अस्मा इत्" अस्मा एवेन्द्राय नान्यस्मै, हे अध्वर्यो! त्वम् "अन्धसः" सोम लक्षणस्यान्नस्य "सुतम्" अभिषुतं रसं "प्र भर" प्रहर प्रयच्छेति यावत् । सचेन्द्रः "समस्य" सर्वस्य जेतव्यस्य "शर्धतः" उत्सहमानस्य शत्रोः "अभिशस्तेः अभिशंसनात् तत्कृतात् हिंसनात् "कुवित्"‡बहुशः "अवस्वरत्" अस्मान् पालयत्वित्यर्थः ॥

"अवस्वरत्"-"अवस्वरद्"—इति पाठौ ॥ ४ ॥ २

३ ४ ५र ४ ५र ३ २ १
॥ नानदम् ॥ प्रत्यस्मैपिपी । षता३यि । वा२३४यि ।
र ५ र ४ ५ ४ २र ४ ५ २ ५
श्वानिविदुषे । भारा । अरङ्गमायज । ग्मयो२३४हायि ।
१ २ १ २ १ ५ ४ ५ ३र र२५
आपश्चादा । घ्नुवो२३४वा । नापुरो६हायि ॥(१) एमन
४ ५र ३ २ १ र ५ र र ४ ५
म्प्रत्ये । तना३ । सो२३४ । मेभिःसोमपा । तामाम् ।

* "अवस्वरत्"—इति ऋ०-पाठः ।

† ऋ० वे० ४, ७, १४, ४ ।

‡ 'कुवित्—कु-शब्देन पृथिव्यभिधीयते, तस्या वित्'—इति वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ ४ ३र ४ ५ र २ ५ ४ र ३ ४ ५र
अमत्रेभिः गो। षिणो२३४वायि। अमत्रेभिर्ऋजी।

२ ५ १ २ १ २ १ ४
षिणो२३४वायि। आयिन्द्र॒ह्वतायि। भिरो२३४वा।

४ ५ १ ४र ३र ४ ५ ३ २ १
हू५भो६हायि॥(२) यदीसुतेभिरि। दुभा३यिः। सो

र ५ र ४ ५ ३र ४र१ ४ ५ र ३
२३४। मेभिःप्रतिभू। षाथा। वेदाविश्वस्यमेधिरो२

५ ४ र र १ ४ ५र २ ५ १ १ १
३४वायि। वेदाविश्वस्यमेधिरो२३४हायि। धार्षन्ता॒

२ १ ५ ४ ५
ताम्। इदो२३४वा। षा५तो६वायि(३)॥१*॥[१]

५ ३ २ ४ र ५
॥गौरीवितम्॥ प्रति। अस्मा३यि। पिपीषतायि।

१ र १ २ ४
विश्वानिविदुषेभरा२३। अरङ्गमा३१२३। यना५ग्मया

१ र १ ४ ५ ४ ५
यि। आपश्चादा३१२३। ध्वनेवा। ना५रो६वायि॥(१)

५रर २ २ ४ र ५ १र र र र
एमे। नम्प्रा३। तियेतना। सोमेभिःसोमपातमा २

१ र १ ४ १
३म्। आमत्रेभा३१२३यिः। ऋजा५यिषिणाम्। वायि

२ ४ २ ४ ५
द्र॒सुना३१२३यि। भिरोवा। हू५भो६वायि॥(२)

---

* ऊ० गा० १०प्र० १अ० १सा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५ र ३ २ ४ ५ १र र र
यद्दी। सुताश्यि। भिरिन्दुभायिः। सोमेभिःप्रतिभू

१ र २ ४
पथा२३। वायिद्दाविश्वा ३१२३। स्वमा५यिधिराः।

१ २ ४ ५ ४ ५
धार्षत्तन्ता ३१२३म्। इद्दोवा। षा५तो६हायि

(३) ॥ १२* ॥ [२] २

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य त्रयोदशस्याध्यायस्य प्रथमः खण्डः† ॥ १ ॥

---

अथ द्वितीय-खण्डेः‡—

बभ्रवेन्विति षड्चं प्रथमं सूक्तम्,

तत्र प्रथमा।

३ २ ३ १र २र ३ १ २ ३ १ २
बभ्रयेनुस्वतवसेरुणायदिविस्पृशे।

१ २ ३ १ २
सोमायगाथमर्चत ॥ १¶ ॥

---

* ऊ० गा० १प्र० १ख० ११सा०।

† 'उक्ताः स्वरसामानः'—इति वि०।

‡ 'इदानीं विषुवानभिधीयते'—इति वि०।

¶ ऋ० वे० ९, ७, ११, ४।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



हे स्तोतारः! "बभ्रवे" बभ्रु-वर्णाय "स्वतवसे" स्व-बलाय* "अरुणाय" कदाचिदरुणवर्णाय "दिविस्पृशे" दिवं स्पृशते सोमाय "गाथं" स्तुतिरूपां वाचम्† "अर्चत" उच्चारयतेत्यर्थः॥ १॥

अथ द्वितीया।

१ २ ३ १ २ ३ १र २र
हस्तच्युतेभिरद्रिभिः सुतꣳ सोमम्पुनीतन।
२ ३ १ २ ३ १ २
मधावाधावतामधु॥ २ ‡॥

हे ऋत्विजः! "हस्तच्युतेभिः" हस्त-प्रच्युतैः "अद्रिभिः" अभिषव-ग्रावभिः "सुतम्" अभिषुतं "सोमं" "पुनीतन" पवित्रे पावयत। अपिच "मधौ" मदकरे सोमे¶ "मधु" गव्यं पयः "आधावत" प्रक्षिपत॥ २॥

अथ तृतीया।

२ ३ १र २र ३ २ ३ १ २
नमसेदुपसीदतदध्नेदभिश्रीणीतन।
२ ३ १ २
इन्दुमिन्द्रेदधातन॥ ३ §॥

---

* 'स्व इति पादपूरणे'—इति वि०।

† 'गाथं—मन्त्रक्रमात् यज्ञसामलक्षणम्'—इति वि०।

‡ ऋ० वे० ९, ७, ३९, ५।

¶ 'मधौ—मधुमति द्रोणकलशे'—इति वि०।

§ ऋ० वे० ९, ७, ३९, १।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



हे ऋत्विजः! "नमसेत्" नमस्कारेणेव* "उप सीदत" सोम-मुपगच्छत "दध्नेत्" दध्नैव† "अभि श्रीणीतन" सोममभि श्रीणीत च। "इन्द्रे" "इन्दुं" सोमं "दधानत"‡ धत्त च ॥ ३ ॥

अथ चतुर्थी।

२ १२ २२ ३ १ २ ३ १ १२
अमित्रहाविचर्षणिःपवस्वसोमशंगवे।

३ १ २ ३ २
देवेभ्योअनुकामकृत् ॥ ४¶ ॥

"अमित्रहा" "विचर्षणिः" विद्रष्टा "देवेभ्यः" "अनुकाम-कृत्" अभीष्ट-कर्त्ता§ त्वं "गवे" अस्माकं पशवे "शं" सुखं "पवस्व" क्षर ॥ ४ ॥

अथ पञ्चमी।

१ २ ३ १ २ ३ १ २ ३ १ २
इन्द्रायसोमपातवेमदायपरिषिच्यसे।

३ १२ २२ ३ १
मनश्चिन्मनसस्पतिः ॥ ५॥ ॥

"इन्द्राय" "सोमपातवे" "मदाय" "परिषिच्यसे" परितः पात्रेषु सिच्यसे ॥ ५ ॥

---

* 'इच्छब्दः पादपूरणः'—इति वि०।

† 'इत् शब्दः एवेत्यर्थे'—इति वि०।

‡ "श्रीणीतन", "दधातन"—इत्यत्र "तप्तनप्तनथनाश्च (७, १, ४५)"—इति तनप्।

¶ ऋ० वे० ६, ७, ३७, २।

§ 'अनुकामकृत्—ये देवानां कामाः, तेषां कर्त्ता सोमः'—इति वि०।

‖ ऋ० वे० ६, ७, ३७, ३।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ षष्ठी।

१२ २१२ २१ २
पवमानसुवीर्यꣳरयिꣳसोमरिरीहिणः* ।

२३१२ ३२
इन्दविन्द्रेणनोयुजा ॥ ६† ॥ ३

हे "इन्दो" क्षियमान "पवमान" सोम! त्वं "सुवीर्यं" शोभन-वीर्योपेतं "रयिं" धनं "नः" अस्माकं सम्बन्धिनम् "इन्द्रेण" "युजा" सहायेन "नः" अस्मभ्यं "रीरिहि" देहि ॥ ६ ॥ ३

अथोद्वेदभीति तृचात्मकं द्वितीयं सूक्तम्,

तत्र प्रथमा।

२उ ३ २ ३ १ २ ३१र २र
उद्वेदभिश्रुतामघंवृषभन्नर्य्यापसम् ।

१ २
अस्तारमेषिसूर्य्य‡ ॥ १¶ ॥

हे "सूर्य्य" [द्वादशसु भानुषु इन्द्रोऽपि सूर्य्यात्मना पठितः। तस्मात्] सूर्य्यात्मक! सुवीर्य्य! हे इन्द्र! "श्रुतमघं" सर्वदा देवत्वेन विख्यात-धनम्, अतएव "वृषभं" याचमानानां धनस्य वर्षितारं "नर्य्यापसं" नर-हितं नर्यं नर-हित-कर्म्माणम् "अस्तारम्" दान-

* "रीरिहिणः"—इति ऋ०-पाठः।

† ऋ० वे० ६, ७, ३३, ४।

‡ ऋग्वेदीय-पाठ-प्रमाणमिदम्।

¶ छ० आ० २, १, ४, १.(१भा० ३०७ पृ०) = ऋ० वे० ६, ६, २१, १।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



धीरूढम् औदार्य्यवन्तमेतादृशं स्तोतारम् "अभि" लक्ष्य "उदेषि" [ इँदक्षधारणे ] त्वमेव तस्य यज्ञे सूर्य्यात्मना उद्गातासि। "घ"-—इति प्रसिद्धौ ॥ १ ॥

अथ द्वितीया।

२ ३ १ २ ३ १र २र ३ १ २ ३क २र
नवयोनवतिम्पुरोबिभेदबाह्वोजसा।
१ २ ३ १ २
अहिञ्चवृत्रहावधीत्॥ २* ॥

"यः" इन्द्रः† "नवतिं" नवति-सङ्ख्याकाः ततः नव-सङ्ख्याकाः एकोनशत-सङ्ख्याकाः शम्बरस्य "पुरः" पुरीः "बाह्वोजसा" बाहु-बलेनैव "बिभेद" दिवोदासाय भिनत्ति स्म [ तथाच मन्त्रान्तरे—"दिवोदासाय नवतिञ्च नवेन्द्रः पुरोव्यैरच्छम्बरस्य" —इति ]। स च "वृत्रहा" वृत्रासुरस्य हन्ता। स इन्द्रः "अहिं च" केनाप्यहन्तव्यं मेघमपामावरकं वृत्रासुरं वा अवधीत्। स इन्द्रोऽस्माकं धनं ददात्वित्युत्तरेण सम्बन्धः॥ २ ॥

अथ तृतीया।

२ ३ १ २ ३ १र २र ३ २ ३ १ २
सनइन्द्रःशिवःसखाश्वावद्गोमद्यवमत्।
३ १ २
उरुधारेवदोहते॥ ३‡ ॥ ४

---

* ऋ० वे० ६, ६, २१२।

† अत्र इन्द्र इति सुर्य्योऽभिधीयते तथाच ताण्ड्यम्—"दिवाकीर्त्त्यसामा भवति स्वर्भानुर्वा"—इत्यादि।

‡ ऋ० वे० ६, ६, २१, २।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"सः" पूर्वोक्त-गुण-विशिष्टः "शिवः" कल्याणतमः "सखा" यष्टृयष्टव्य-स्तोतृस्तोतव्य-लक्षणेन सम्बन्धेन "नः" अस्माकं मित्रभूतः एतादृश इन्द्रः "अश्ववत्" अश्वयुक्तं "गोमत्" पश्वादि-सहितं "यवमत्" ["अयवादिभ्यः"—इति प्रतिषेधात् मतुपो वत्वाभावः। यव इति धान्य-विशेषः] धान्ययुक्तं* धनं "नः" अस्मभ्यं "दोहते" दोग्धु दधातु। तत्र दृष्टान्तः—"उरुधारेव" दोहन-काले प्रभूत-पयोधारा यद्वा बहूनां पोषयित्री गौः यथा वत्सस्य पयो दोग्धि तथा प्रभूत-धनम् अस्माकं दोग्धु दधातु [ दुहेर्लेटयड़ागमः (३, ४, ९४) ॥ ३ ॥ ४

॥ स्वारसौपर्णम् ॥ उद्धेदभिश्रुतामा३घाम्। वृषभ र्नर्या। ऊम्। पा२३४साम्। आस्ता३उवा। रामा यि। षिष्ठ२३४वा। रा५योई३ हायि ॥(१) नवयोनवति म्पू३राः। बिभेदबाऊवो। ऊम्। जा२३४सा। आहा ३उवा। चवृ। त्रचो२३४वा। वा५धो६ हायि ॥(२) सनइन्द्रःशिवःसा३खा। अश्वावद्गोमद्या। ऊम्। वा२३

---

* 'यवमत्—यवपदमनुपलक्षणार्थम्, धान्य संयुक्तम्'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५ १ २ २ ३ १र २ १ ५ ४
४मात्। अरा३उवा। धारे। वदो२३४वा। हा५तो

५
६हायि(३)॥ १६*॥ [१] ४

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य त्रयोदशस्याध्यायस्य

द्वितीयः खण्डः॥ २॥

---

अथ तृतीय-खण्डे—

विभ्राडिति तृचात्मकं प्रथमं सूक्तम्,†

तत्र प्रथमा।

३ २ ३१ २ ३ २उ
विभ्राड्बृहत्पिबतुसोम्यम्

३१ २ ३ १ २ ३ १ २
मध्वायुर्द्दधद्यज्ञपतावविह्रुतम्।

१ २ ३ १ २ ३ १ २ ३ १ २
वातजूतोयोअभिरक्षतित्मना

३ १ २ ३ १र २र
प्रजाःपिपर्त्तिबहुधाविराजति॥ १‡॥

"विभ्राट्" विभ्राजमानः विशेषेण दीप्यमानः सूर्य्यः "बृहत्" परिवृढं "सोम्यं" सोममयं "मधु" "पिबतु"। किं कुर्वन्? "यज्ञ-

---

* ऊ० गा० १४प्र० १ख० १६सा०।

† 'महादिवाकीर्त्त्यम् पृष्ठम्'—इति वि०।

‡ ऋ० आ० प० ३३७ ऋ० वे० ८, ८, २८, १।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



पती" यजमाने "अविक्रुतम्" अकुटिलम् "आयुः" "दधत्" कुर्वन् "यः" सूर्य्यः "वातजूतः" वातेन महावायुना प्रेर्यमाणः सन् "त्मना" आत्मना स्वयमेव "अभि रक्षति" सर्वं जगदभिपश्यन् पालयन्ति [ राशि-चक्रस्य वायु-प्रेर्यत्वात् सूर्य्यस्यापि तत्प्रेर्यत्वम् ]। स सूर्य्यः "प्रजाः" "पिपर्त्ति" वृष्ट्यादि-प्रदानेन पालयति "बहुधा वि राजति" विशेषेण दीप्यते च ॥

"पिपर्त्तिबहुधा"-"पुपोषपुरुधा"—इति पाठौ ॥ १ ॥

अथ द्वितीया।

३ २ १ १र २र ३ १ २ ३<br>
विभ्राड्बृहत्सुभृतंवाजसातमं<br>
१ २ ३ २ १ १ २ ३ १र २र<br>
धर्मन्दिवोधरुणेसत्यमर्पितम्।<br>
१ १ २ ३ १ १ ३ १ २ २<br>
अमित्रहावृत्रहादस्युहन्तम<br>
१ २ ३ १ २ ३ १ २ ३ १<br>
ज्योतिर्ज्जज्ञे असुरहासपत्नहा ॥ २* ॥

"विभ्राट्" विभ्राजमानं, "बृहत्" प्रौढं, "सुभृतं" सुपुष्टं, "वाजसातमं" वाजस्यान्नस्य बलस्य वा दातृतमं, "धर्म्मन्" धर्म्मणि वायुना धारयितव्ये "दिवः" द्युलोकस्य "धरुणे" धारके सूर्य्य-मण्डले "अर्पितं" निक्षिप्तं, "सत्यम्" अनश्वरम् "अमित्रहा" अमित्राणामप्रियाणां हन्तृ, "वृत्रहा" आवृण्वतां हन्तृ,† "दस्यु-

---

* ऋ० वे० ८, ८, १८, २।

† 'वृत्रहा –शत्रुहा, मेघस्य हन्तृ' –इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



हन्तमं" दस्यूनामुपक्षपयितॄणां हन्तृतमम्, "असुरहा" असुराणां क्षेप्तॄणां घातकं "सपत्नहा" सपत्नानां शत्रूणामपि घातकम्, ईदृग्भूतं "ज्योतिः" सौरं तेजः "जज्ञे" प्रादुर्भवति॥ २॥

अथ तृतीया।

२ १उ ३ १ २ ३ १ २ ३ १
इदᳬंश्रेष्ठञ्ज्योतिषाञ्ज्योतिरुत्तमं

२ ३ १ २ ३ १ २ २ २
विश्वजिद्धनजिदुच्यतेबृहत्।

३ २ ३ २उ ३ १ २ ३ २
विश्वभ्राड्भ्राजोमहिसूर्योदृश

३ १ २ ३ २ ३ २ ३ १ २
उरुपप्रथेसहओजोअच्युतम्॥ ३ *॥ ५

"इदं" सौरं तेजः "श्रेष्ठं" प्रशस्यतमं "ज्योतिषाम्" अन्येषां ग्रहनक्षत्रादीनामपि "ज्योतिः" प्रकाशकम् अतएव "उत्तमम्" उत्कृष्टं "विश्वजित्" विश्वस्य सर्वस्य जेतृ "धनजित्" धनस्य जेतृ "बृहत्" प्रभूतमुच्यते एवंगुणविशिष्टमिति सर्वैरभिधीयते अपिच "विश्वभ्राट्" विश्वस्य प्रकाशयिता "भ्राजः" भ्राजमानः "महि" महान् "सूर्यः" "दृशे" दर्शनाय "उरु" विस्तीर्णं "सहः" तमसोऽभिभवितृ "अच्युतं" च्युति-रहितम् अविनाशम् "ओजः" तेजोरूपं बलं "पप्रथे" विस्तारयति॥ ३॥ ५

---

* ऋ० व० ८, ८, २८, ३।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ इन्द्रक्रतुमिति प्रगाथात्मकं द्वितीयं सूक्तम्,

तत्र प्रथमा।

२ ३१२३१ २ ३२ ३२ ३ १२
इन्द्रक्रतुन्नआभरपितापुत्रेभ्योयथा।
१२ ३१२ ३१२
शिक्षाणोअस्मिन्पुरुहूतयामनि
३ १२ २२
जीवाज्योतिरशीमहि॥ १ *॥

हे "इन्द्र!" "नः" अस्मभ्यं "क्रतुं" कर्म्म प्रज्ञानं वा "आ भर" आहर। अपिच "यथा" "पिता" "पुत्रेभ्यः" प्रयच्छति तथा "नः" अस्मभ्यं "शिक्ष" धनं देहि। हे "पुरुहूत" बहुभिराहुत! "यामनि" यज्ञे "जीवाः" वयं "ज्योतिः" सूर्य्यम् "अशीमहि" प्रतिदिनं प्राप्नुयामः॥ १॥

अथ द्वितीया।

१ २ १ २ २ ३ १ १ २ १ १ २ १ २
मानोअज्ञातावृजनादुराध्योऽ३ऽमाशिवासोवक्रमुः।
१ २ ७ २ ३ २ ३ १ २ ३ १ २
त्वयावयम्प्रवतःशश्वतीरपोतिशूरतरामसि॥ २†॥ ६

हे इन्द्र! "अज्ञाताः" अज्ञात-गमनाः "वृजनाः" हिंसकाः "दुराध्यः" दुष्टाभिसन्धयः "नः" अस्मान् "मा अव क्रमुः" माव

* ऋ० आ० ३, २, २, ७ (१भा० ५३५ पृ०) = ऋ० वे० ५, ३, २१, ६।

† ऋ० वे० ५, ३, २१ ७।

‡ 'वृजनाः—वक्र-कर्मणः'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



चक्रमुः। हे "शूर!" "त्वया" "वयं" स्तोतारः "प्रवतः" प्रव-णकाः सन्तः "शश्वतीः" बह्वीः "अपः" "अति तरामसि" अति-तरामः ॥ २ ॥ ६

१ २ १ १ र १ २
॥ महावैष्टभम् ॥ इन्द्रक्रतोहायि। नआभरौवा।
र २ र १ २ १ २ २ १
पायितापुत्रे। भियोया१था२३। हौवा३हायि। शि
र २र १ २र १ २ २ २ २
क्षाणोअस्मिन्पुरुहू। तयामा१नी२३। होवा३हायि।
१र २ १ २ २ १र
जीवाज्यो१ता२३यिः। होवा ३ हायि। अशी। मा २
३ ५र र १र र २र १ २ र १
हा२३४औहोवा ॥(१) जीवाज्योतोहायि। अशीमहो
२ १ र २र २ २ १ २
वा। जायिवाज्योतिः। अशायिमा१हा२३यि। होवा
२ १र२र १ १ २र १ २र १ २
३हायि। मानोअज्ञातावृजनाः। दुराधा १ या २ ३ः।
१ २ १ १र २ १ २ २
होवा३हायि। माशायिवा१सा२३ः। होवा ३ हायि।
१ ३ ५र र १२ २र १
अव। क्रा२मू२३४औहोवा ॥(२) माशिवासोहायि।
२ १ २ १ १र १ २ १ २
अवक्रमोवा। माशिवासः। अवाक्रा१मू२३ः। होवा





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ १ र २ १ ११९ १ २१ २ १
३हायि। त्वयावयम्प्रवत:श्च। श्वतायिरा१पा२३:। द्यो
२ २ १ २ १ २ २ १र
वा३हायि। श्वतायिष्ठ१रा२३। होवा३हायि। तरा।
२ ५र र २ ५
मा२सा२३४औहोवा। दी२३४णा:(३) ॥ १७ * ॥ [१]

४ २ ४ ५ र २ २ ३र ४र ५
॥ ध्यतम् ॥ इन्द्रक्रतुन्नआ। भरा ३ ४ औहोवा।
१ र २ र १ ० ५ ५ १ र २र
पायितापुत्रे। भियोयथा२३४। औ३हा। शिक्षाणो
१ २ १ २ ५ १र र
अस्मिन्। पूरू२३हू। तया२। मा२३४नी। जीवा
र २ २ १ ३ ५र र
ज्योतायिरा३शा। ऊम्मायि। मा२हा२३४औहोवा ॥(१)
४र ३र २ ४ ५ र १ २ ३र ४र ५ १ र २र
जीवाज्योतिरश्मी। महा३४औहोवा। जायिवाज्योति:।
१ ० ५ ५ १र र १ र २र १
अशाविमहा२३४यि। औ३हा। मानोअज्ञाता:। वा
२ १ २ ५ १र र २
ज्ज्ञा१३ना:। दुरा२। धा२३४या:। माशिवासोआ३
२ १ २ ५र र ३र ४ र
वा। ऊम्मायि। क्रा२मू२३४औहोवा ॥(२) माशिवा
३र ४ ५ २ २ ३र ४र ५ १ २र १ ०
सोअवक्रिमू३४औहोवा। माशिवास:। अवाक्रमू२३

* ऊ० गा० ६प्र० १ख० १७गा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



४: । ओ६हा । त्वयावयम्प्र । वातार३ःग्रा । श्वतार

यिः । आर ३ ४पाः । अतिष्ठूराताऽ३रा । ऊम्मायि ।

मार्स्मार३४औहोवा । वार३४ह्न(३) ॥ १९ * ॥ [२]

॥ नौधसम् ॥ आर३४यि । द्रक्रतुन्ना । भारा ।

पितापुत्रे । भौ३योयाऽ३था । ग्रार३यित्ता । योअस्मिन् ।

पुरु । हू । तायामार३४नी । जार३यिवाः । ज्योतिर

ग्रोर३४वामार३४ची ॥(१) जार३४यि । वाज्योतिरग्री ।

माहायि । जौवाज्योतायिः । आ३ग्रायिमा३चायि ।

मार३नो । आज्ञाताः । वृज । नाः । दूराधार३४

याः । मार३ग्रायि । वासोअवोर३४वा । क्रार३४म् ॥(२)

मार३४ । शिवासोअव । कामूः । माशिवासो । आ३

वाक्राऽ३मूः । त्वार३या । वायम्प्र । वतः । ग्रा । श्वाता

* ऊ० गा० ९१० २श्व० १९मा०



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



थिरा२३४प्राः । आ२३ताथि । प्रतरनरो२३४वा । मा२३४सो(३) ॥ १ * ॥ [३]

॥ पौरुमीढम् ॥ इन्द्रक्र । तुन्ना३४औहोवा । आभरे । पितापुत्रे । भियोया२३था । शिक्षाणोआ । स्मिन्युरू२३हू । तयामनायि । जीवाज्यो२३तीः । अशी मा२३४५हा६५६यि ॥(१) जीवाज्यो । तिरा३४औहोवा । शायिमहि । जीवाज्योतिः । अशीमा२३हायि । मानोअज्ञा । तावृजा२३नाः । दराधिया । माशिवा२३साः । अवक्रा२३४५मू६५६ः ॥(२) माशिवा । सोआ३४औहोवा । वाक्रमुः । माशिवासः । अवक्रा२३मूः । त्वयावयाम् । प्रवता२३ःशाः । श्वतीरपाः । अतिशू२३रा । तरामा२ ३ ४ ५सा ६ ५ ६ यि । दत्ता३या२ ३ ४ ५ (३) ॥ १९ † ॥ [४]

* ऊ० गा० ९प्र० २ख० १सा० । † ऊ० गा० ९प्र० २ख० १९सा० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ २ ३ ५ २
॥ मानवाद्यम् ॥ इन्द्रक्रतुम्। नआभार२३४रा। न
३ ५ १ र २र १ २
आभा२३४रा। पायितापुत्रे। भियोया१था२। शि।
१र र २ १ ७ २ १ ३ ५ १र
क्षा। णोअ। स्मायिन्पुरुहू३। तयार२मार२३४नी। जी
२र र १ १ ३ ५र र ३ ५
वाज्योता२३यि। आर२मा२३४औहोवा। मा२३४हो ॥(१)
२र र र र ३ ५ २ ३
जावाज्योतायिः। अशीमा२३४द्दायि। अशायिमा२३४
५ १ र १र १ २ र
द्दायि। जायिवाज्यातिः। अशायिमा१द्दा२यि। मा।
१ २र १ ७ २ १ ३ ५ १र
नः। अज्ञा। तावृजना३ः। दुरा२धा२३४याः। मा
२ र १ १ ३ ५ र ३ ५
शिवासा२३ः। आर२वा२३४औहोवा। क्रा२३४मूः ॥(२)
२र र ३ ५ १ ३ ५ १
माशिवासाः। अवक्रा२३४मूः। अवाक्रा२३४मूः। मा
२र १ २ १र २ १ ७
शिवासः। अवाक्रा१मू२ः। त्व। या। वयम्। प्रावतः
२ १ ३ ५ १ २२ १ १ ३
शा३। श्वता२यिरा२३४पाः। अतिशूरा२३। ता२रा
५र र ३ ५
२३४औहोवा। मा२३४सो(३) ॥ १ * ॥ ५

* ऊ० गा० १९५० २अ० १भा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



॥ भारद्वाजम् ॥ इन्द्रक्रतूम्। नआभा१रा२। पायितापुत्रेभ्योयथा। शिक्षाणो१आ२। स्मायिन्पुरुहू। तयामा१नौ२। जीवाज्यो१ता२३यिः। आ२शा२३४औहोवा। मा२३४ही ॥(१) जीवाज्योतायिः। अश्मायिमा१हा२यि। जायिवाज्योतिरशीमहि। मानोआ१ज्ञा२। तावृजनाः। दुराधा१या२ः। माशायिवा१सा२३ः। आ२वा२३४औहोवा। क्रा२३४मूः ॥(२) माशिवासा। अवाक्रा१मू२। माशिवासोअवक्रमुः। त्वयावा१या२म्। प्रावतःश्र। श्वतायिरा१वा२ः। श्वतायिशू१रा२३। ता२रा२३४औहोवा। मा२३४सी(३) ॥ ५ * ॥ [६] ६

* ऊ० गा० १९प० १अ० ५गा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथाद्याद्येति प्रगाथात्मकं तृतीयं सूक्तम्,

तत्र प्रथमा ।

२ १ २ २ २२ ३१ २३१२
अद्याद्याश्वःश्वइन्द्रत्रास्वपरेचनः ।

१२ ३१२ ३२३ २३१२
विश्वाचनोजरितॄन्सत्पतेअहादिवानक्तञ्चरक्षिषः ॥१*॥

"अद्याद्य" यद्यद् शब्द-वाच्यमहरस्ति, तत्र सर्वत्र, हे "इन्द्र !" "श्वः श्वः" श्वः-शब्द-वाच्यं च यत्, तत्र सर्वत्र,† त्वं "त्रास्व" अस्मान् रक्ष । तथा "परे च" "परस्मिन्" तृतीयेऽहनि च त्रास्व । हे "सत्पते" सतां पालकेन्द्र ! "विश्वा च" सर्वाण्यपि "अहा" अहानि सर्वेष्वप्यहःसु "नः" अस्मान् "जरितॄन्" स्तोतॄन्" "रक्षिषः" रक्षसि । तथा "दिवा नक्तं च" रक्षिषः रक्षसि ॥ १ ॥

अथ द्वितीया ।

३ १र १र२ १२३१२२ १ ९ ९क २र ३ २
प्रभङ्गीशूरोमघवातुवीमघःसम्मिश्लोवीर्यायकम् ।

३ १ २ ३ १र २र ३ १र २र ३ १ २
उभातेबाहूवृषणाशतक्रतोनियावज्रम्मिमिक्षतुः ॥ २‡ ॥ ७

अयं "मघवा" धनवान्, इन्द्रः, "प्रभङ्गी" प्रभञ्जन-शीलः, "शूरः" विक्रान्तः, "तुवीमघः" प्रभूत-धनः "सम्मिश्लः" सम्यङ्

---

* ऋ० वे० ६, ४, ३८, २ ।

† 'परन्यहनि'—इति वि० ।

‡ ऋ० वे० ६, ४, ३८, ३ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



मिश्रयिता। किमर्थम्? "वीर्याय"* वीर्य-करणाय "उभा" उभौ "बाहू" "वृषणौ" कामानां वर्षकौ "या" यौ बाहू "वज्रम्" आयुधं "नि मिमिक्षतुः" परिगृह्णीतः॥ २॥ ७

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य त्रयोदशस्याध्यायस्य तृतीयः खण्डः॥ ३॥

---

अथ चतुर्थ-खण्डे—

जनीयन्त इत्येकर्चं† प्रथमं सूक्तम्,‡

सैषोच्यते।

२ २३ १२ ३१२ २१२
जनीयन्तोन्वग्रवःपुत्रीयन्तःसुदानवः।

१२
सरस्वन्तꣳहवामहे॥ १ ¶॥ ८

"जनीयन्तः" [जायन्तआस्वपत्यानीति] जनयः जायाः ता इच्छन्तः,§ "पुत्रीयन्तः" पुत्रान् कामयमानाः, "सुदानवः" शोभन-दानाः, "अग्रवः" उपगन्तारो वयं "नु" अद्य‖ "सरस्वन्तं" तं देवं मध्यम-स्थानं "हवामहे" आह्वयामहे॥ १॥ ८

---

* 'वीर्याय—चतुर्थ्येषा तृतीया-स्थाने द्रष्टव्या, वीर्येण युक्तः'—इति वि०।

† विवरणमते त्वेतत्सूक्तं प्रगाथात्मकं न त्वेकर्चं तथाच उतनइत्यग्रिमा ऋक् खल्वस्यैव सूक्तस्य द्वितीया नतु सूक्तान्तरस्; मूलपाठदर्शनस्वात्तानुकूलमिति ध्येयम्।

‡ 'इदानीं विश्वजित'—इति वि०।

¶ ऋ० वे० ५, ६, २०, ४।

§ 'जनीयन्तः—जननं कुर्वन्तः'—इति वि०।

‖ 'नु—इति पादपूरणः'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



उत नइत्येवार्चं द्वितीयं सूक्तम्,

सैषोच्यते ।

३ १२ ३ २ ३१ २ ३ १ २ ३ १ २
उत नः प्रिया प्रियासु सप्तस्वसा सुजुष्टा ।

१ २ ३ १ २
सरस्वती स्तोम्या भूत् ॥ १* ॥ ९

"उत" अपि च "नः" अस्माकं "प्रियासु" प्रियाणां मध्ये "प्रिया" प्रियतमा "सप्तस्वसा" गायत्र्यादीनि सप्त छन्दांसि स्वसारो यस्यास्तादृशी नदीरूपया स्तुत्या गङ्गाद्याः सप्त नद्यः स्वसारः "सुजुष्टा" सुष्ठु पुरातनैर्ऋषिभिः सेविता, एवम्भूता "सरस्वती" देवी "स्तोम्या"† भूतस्तोतव्या "भूत्" भवतु ॥ १ ॥ ९

अथ तत्सवितुर्वरेण्यमिति तृतीयसूक्तरूपा,‡

सैषा ।

१ २ ३ १ २ २ ३ १ २ ३ १ २
तत्सवितुर्वरेण्यम्भर्गो देवस्य धीमहि ।¶

२ ३ १ २ ३ १ २
धियो यो नः प्रचोदयात् ॥ १¶ ॥ १०

---

* ऋ० वे० ४, ८, ३१, ४ ।

† 'स्तोम्या—स्तोमानां क्रतूनाम् अथवा तृष्टत्पञ्चदशप्रभृतीनाम्'—इति वि० ।

‡ अत्राप्यस्ति मतान्तरम्, तथाहि—विवरणमते संहितादि-समस्त-मूल ग्रन्थ-लिपि-दर्शनार्थेतत् तृचं सूक्तम् एतस्यामिमं स्तोमानं सरणमिति अगन्नायुं बौति च द्वे ऋचा-वस्यैव द्वितीय-तृतीये न तु सूक्तान्तरे इति विवेकः ।

¶ ऋ० वे० ३, ४, १०, ५ ।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"यः" सविता देवः "नः" अस्माकं "धियः" कर्माणि, धर्मादि-विषया वा बुद्धीः "प्रचोदयात्" प्रेरयेत्, "तत्" तस्य "देवस्य" द्योतमानस्य "सवितुः" सर्वान्तर्यामितया प्रेरकस्य जगत्स्रष्टुः परमेश्वरस्य "वरेण्यं" सत्स्वरूपतया ज्ञेयतया च भजनीयं "भर्गः" अविद्या-तत्कार्ययोर्भर्जनात् भर्गः स्वयंज्योतिस्तेजः परब्रह्मात्मकं "धीमहि" वयं ध्यायामः। यद्भर्गो धियः प्रचोदयति तद् ध्यायाम इति सम्बन्धः। [यद्वा, यः सविता सूर्यः 'धियः' कर्माणि 'प्रचोदयात्' प्रेरयति, तस्य 'सवितुः' सर्वस्य प्रसवितुः 'देवस्य' द्योतमानस्य सूर्यस्य 'तत्' सर्वैर्दृश्यमानतया प्रसिद्धं 'वरेण्यं' सर्वैः सम्भजनीयं 'भर्गः' पापानां तापकं तेजो-मण्डलं 'धीमहि' ध्येयतया मनसा धारयेम। यद्वा, भर्ग-शब्दे-नान्नमभिधीयते 'यः' सविता देवः 'धियः' प्रचोदयति, तस्य 'देवस्य' प्रसादात् 'तद् भर्गः' अन्नादि-लक्षणं फलं 'धीमहि'] धारयामः तस्याधारभूता भवेमेत्यर्थः। भर्ग-शब्दस्यान्न-पर्यायमाथर्वणिक-वेद-छन्दसि—"सवितुर्वरेण्यं भर्गो देवस्य कवयोऽन्नमाहुः, कर्माणि धियस्तदुत प्रब्रवीमीति प्रचोदयात् सविता याभि-रेतीति*। भर्गः—भ्रस्ज पाके (तु०उ०) असुन् "भ्रस्जोरोप-धयोरमन्यतरस्याम् (६,४,४७)"—इति रोपधयोर्लोपो रमागमश्च, न्यङ्क्वादि-पाठात् कुत्वम् (७,३,५३)। धीमहि—ध्यायते र्लटि "बहुलं छन्दसि (२,४,७६)"—इति सम्प्रसारणं, व्यत्ययेनात्मने-पदम्; यद्वा धीङ् आधारे (दि०आ०) लिटि "बहुलं छन्दसि

---

* यः अस्मदीया बुद्धयः प्रकर्षेण चोदयति ध्यान-धारणा-समाधिभिः तस्य सवितु देवस्य दानादिभिर्गुणैर्वरेण्यस्य तत्परं प्रविशाम इति सर्वेषः' — इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



(२,४,७३)"—इति शिकरणस्य लुक्। प्रचोदयात्—चोदयते-र्लेटि आडागमः, यद्वृत्तयोगाद्निघातः, आगमस्यानुदात्त्वे णिस्वरः ॥ १ ॥ १०

अथ

२ ३ २ १ २
सोमानाꣳस्वरणम्० ॥ १* ॥ ११

—इति,

१ ३ १ २
अग्न आयूꣳषिपवसे० ॥ १† ॥ १२

—इति, चतुर्थ-पञ्चम-सूक्तात्मिकयोर्द्वयो ऋचोः प्रतीके; ते चान्यत्राम्नाते (छ० आ०—२, १, ५, ५; १भा०३२९पृ०), (उ० आ० ७, ११, १२, १)॥ १ ॥ ११——॥ १ ॥ १२

अथ तानःशक्तमिति त्वचात्मकं षष्ठं सूक्तं,

तत्र,

१ २ ३ १ २
तानःशक्तम्पार्थिवस्य० ॥ १‡ ॥

—इति प्रथमाया ऋचः प्रतीकमिदं सा चान्यत्र (उ० ४,७,४,३) आम्नाता ॥ १ ॥

---

* छ० आ० २, १, ५, ५ (१भा० ३२९पृ०) = ऋ० मं० १, १, ३८, १।

† उ० आ० ७, १, १२, १ = ऋ० मं० ७, ·, २०, ३।

‡ उ० आ० ४, ७, ४, ३ = ऋ० मं० ४, ४, ६, २।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीया।

३ २ ३ २ ३ १ २ ३ १र २र
ऋतमृतेनसपन्तेषिरन्दक्षमाशाते।
३ १ २ ३ १ २
अद्रुहादेवौवर्द्धेते॥ २*॥

"ऋतेन" उदकेन निमित्त-भूतेन "ऋतं" यज्ञं "सपन्ता" स्पृशन्तौ "इषिरम्" एषणवन्तं "दक्षं" प्रवृद्धं यजमानं हविर्वा "आशाते" व्याप्नुतः "अद्रुहा" अद्रोग्धारौ "देवौ" द्योतमानौ मित्रावरुणौ "वर्द्धेते" प्रवृद्धौ भवत॥ २॥

अथ तृतीया।

२ १ २ ३क २र ३ २उ ३ १ २
वृष्टिद्यावारीत्यापेषस्पतीदानुमत्याः।
३ ९ ३ १ २
बृहन्तङ्गर्त्तमाशाते॥ ३†॥ १३

"वृष्टिद्यावा" वृष्ट्यर्था द्यौः स्तुतिर्ययोस्तौ वृष्टिद्यावा अथवा वृष्टि-वर्षिका द्यौरन्तरिक्षं याभ्यां तौ तादृशौ, "रीत्याप" [री-गति-रेषणयोः (क्रा०प०)] रीतिः प्राप्तिः सैव आप्तिरभिमत-प्राप्तिर्ययोस्तौ तादृशौ, "इषः" अन्नस्य "पती" स्वामिनौ [वृष्टि-प्रदत्वात् स्वामित्वम्], "दानुमत्याः" दानमत्याः दातुमुचिताया इत्यर्थः एतद्विशेषणम् एवम्महानुभावौ मित्रावरुणौ "बृहन्तं

* ऋ० वे० ४, ४, ६, ४।

† ऋ० वे० ४, ४, ६, ५।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



महान्तं "गर्तं"* रथम् "आगाते" व्याप्नुतः अधितिष्ठतो यागार्थम् ॥ ३ ॥ १३

अथ युञ्जन्तीति त्वचात्मकं सप्तमं सूक्तम्,

तत्र प्रथमा।

२ १ २ ३ १ २ ३ १ र २ र ३ १ २ ३ १ २

युञ्जन्तिब्रध्नमरुषञ्चरन्तम्परितस्थुषः।

१ २ ३ २ ३ २

रोचन्तेरोचनादिवि ॥ १ † ॥

इन्द्रो हि परमैश्वर्य-युक्तः परमैश्वर्यं चाग्निवाय्वादित्य-नक्षत्र-रूपेणावस्थानात् उपपद्यते "ब्रध्नम्" आदित्यरूपेणावस्थितम्, "अरुषम्" हिंसारहिताग्निरूपेणावस्थितं, "चरन्तं" वायुरूपेण सर्वतः प्रसरन्तमिन्द्रं "परि तस्थुषः" परितोऽवस्थिता लोकत्रय-वर्त्तिनः प्राणिनो "युञ्जन्ति" स्वकीये कर्मणि देवतात्वेन सम्बन्धं कुर्वन्ति। तस्यैवेन्द्रस्य मूर्त्तिविशेषाणि "रोचना" नक्षत्राणि "दिवि" द्युलोके "रोचन्ते" प्रकाशन्ते [ अस्य मन्त्रस्योक्तार्थपरं ब्राह्मणान्तरे व्याख्यातम्—"युञ्जन्ति ब्रध्नमित्याह—असौ वा आदित्यो ब्रध्नः आदित्यमेवास्मै युनक्ति। अरुषमित्याह—अग्निर्वा अरुषः अग्निमेवास्मै युनक्ति। चरन्तमित्याह—वायुर्वै चरन् वायुमेवास्मै युनक्ति। परितस्थुष इत्याह—इमे वै लोकाः परितस्थुषः इमानेवास्मै लोकान् युनक्ति। रोचन्ते रोचना दिवीत्याह—नक्षत्राण्येवास्मै रोचयतीति ॥ १ ॥

---

* 'गर्त्तं गरणीयम्'—इति वि०।

† ऋ० वे० १, १. ११, १ = य० वे० २३, ५।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीया ।

३ १ २ ३ १ ३ २ ३ १ २ ३ १ २
युञ्जन्त्यस्य काम्या हरी विपक्षसा रथे ।

१ २ ३ २ ३ १ २
शोणा धृष्णू नृवाहसा ॥ २* ॥

"अस्य" ब्रह्मादि-शब्द-प्रतिपाद्यस्यादित्यादि-मूर्त्तिभिस्तत्र तत्रावस्थितस्येन्द्रस्य "रथे" "हरी" एतन्नामानौ द्वावश्वौ सारथयो "युञ्जन्ति" [ इन्द्र-सम्बन्धिनोरश्वयोर्हरिनामत्वं "हरी इन्द्रस्य"-"रोहितोऽग्नेः" ( निघ० १, १५, १-२ )—इति पठितत्वात् । कीदृशौ हरी ? "काम्या" कामयितव्यौ "विपक्षसा" विविधे पक्षसी रथस्य पार्श्वौ ययोस्तौ विपक्षसौ रथस्य हयोः पार्श्वयोर्योजितावित्यर्थः,† "शोणा" रक्तवर्णौ, "धृष्णू" प्रगल्भौ, "नृवाहसा" नृणां पुरुषाणामिन्द्र-तत्सारथि-प्रमुखाणां वोढारौ ॥ २ ॥

अथ तृतीया ।

३ २ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ १ २
केतुं कृण्वन्नकेतवे पेशो मर्या अपेशसे ।

२ ३ १ २
समुषद्भिरजायथाः ॥ ३‡ ॥ १४

---

* ऋ० वे० १, १, ११, २ = य० वे० २३, ६ ।

† 'पक्ष पक्षसी न दिवेले स विपक्षी रथः'—इति वि० ।

‡ ऋ० वे० १, १, ११, ३ = य० वे० २९, ३७ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



हे "मर्त्ताः" मनुष्याः ! इदमाश्चर्यं पश्यतेत्यध्याहारः । किमाश्चर्यम्? इति तत्रोच्यते—आदित्यरूपोऽयमिन्द्रः "उषद्भिः" दाहकैः रश्मिभिः प्रतिदिनमुषःकाले वा सम्भूय "अजायथाः" उदपद्यत [ अथवा सूर्यस्यैवास्तमये मरणमुपचर्यं व्यत्ययेन बहुवचनं कृत्वा सम्बोधनं क्रियते—हे मर्य ! प्रतिदिनं त्व मजायथा इति योज्यम् ]। किङ्कुर्वन्? "अकेतवे" रात्रावभिभूतत्वेन प्रज्ञान-रहिताय प्राणिने "केतुं कृण्वन्" प्रातः प्रज्ञानं कुर्वन्* "अपेशसे" रात्रावन्धकाराहतत्वेनाभिव्यक्तत्वात् रूप-रहिताय पदार्थाय प्रातरन्धकार-निवारणेन "पेशः" [रूपनामैतत् (निघ० ३, ७, १०)] रूपमभि व्यञ्जमानं कुर्वन् [ अकेतवे, अपेशसे—इति चतुर्थ्यौ षष्ठ्यर्थे द्रष्टव्यौ] ॥ ३ ॥ १२

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य त्रयोदशस्याध्यायस्य चतुर्थः खण्डः ॥ ४ ॥

---

अथ पञ्चमे खण्डे—

अयं सोमइति हचात्मकं प्रथमं सूक्तम्,

तत्र प्रथमा।

२ १र २र ३ १ २ २
अयᳪ सोमइन्द्रतुभ्यᳪसुन्वे

१ २ ३ १ २
तुभ्यम्पवतेत्वमस्यपाहि ।

---

* 'केतुश्चिन्हः तं कृण्वन्, अकेतवे; यः कश्चित् मर्त्तः अकेतुरज्ञानः तमपि केतुमन्तं कुर्वन्ति अतिवत्सम्पन्नत्वात्'—इति वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ ३१ २ ३१र २र ३२उ
त्वꣳह्यङ्ग दैव्या पवमान जनिमानि द्युमत्तमः ।

त्वꣳह्यङ्गक्षेत्वंववृष

३ १ २ ३१ २ ३१ २
इन्दुम्मदाययुज्यायसोमम्॥ १ *॥

हे "इन्द्र!" यः सोमः इन्द्राय "तुभ्य" "सुन्वे" सूयते [ सुनोतेः कर्मार्थे लटि "लोपस्त आत्मने पदेषु (७,१,४१)"—इति लोपः ] "तुभ्य" त्वदर्थमेव "पवते" पूयते। त्वञ्च "अस्य" अमुं "पाहि" पिब "त्वं ह" "यम्" "इन्दुं" "सोमं" "चकृषे" करोषि "त्वं" च यं "ववृषे" वृतवानसि। किमर्थम्? "मदाय" मदार्थं "युज्याय" सहायाय [ सोम इन्द्राय बलकरत्वात् सहाय इति प्रसिद्धम्। यमेवं करोषि त्वं तं पाहीति समन्वयः॥ १॥

अथ द्वितीया।

२र २ ३ १ २ ३ १ २
सईꣳरथोनभुरिषाडयोजि

३ २ ३१ २ ३ २ ३ १ २
महःपुरूणिसातयेवसूनि।

२ ३ १ २ ३क २र ३ १
आदींविश्वानहुष्याणिजाता

२ ३ १ १ ३ १ २
स्वर्षातावनऊर्द्ध्वानवन्त॥ २ †॥

"स ईम्"‡सोऽयं "भूरिषाट्" भूतस्य भारस्य सोढा "रथो न" रथइव "अयोजि" युज्यते, कीदृशः सः? "महः" महान्।

* ऋ० वे० ७, ३, २४, १। † ऋ० वे० ७, ३, २४ २।

‡ 'ईम् पादपूरणे'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



किमर्थमयोजि ? "पुरूणि" बहूनि "वसूनि" धनानि "सातये" अस्मभ्यं दातुम् "आदीं" योगानन्तरं "विश्वा" विश्वानि कर्माणि "नहुष्याणि" नहुषो मनुष्याः तेषां सम्बन्धीनि "जाता" जातानि अस्मद्विरोधीनि "ऊर्द्धा उन्मुखानि "वने" वननीये "स्वर्षाता" स्वर्षाते [—सङ्ग्रामनामैतत् स्वर्गलाभ-युक्ते सङ्ग्रामे* "नवन्त" गच्छन्तु [ नवतिर्गति-कर्मा ( २, १४, २९ )। यद्वा, सोऽयं सङ्ग्रामे युद्धार्थिनः सङ्गच्छन्ति ॥ २ ॥

अथ तृतीया।

३ २उ ३ १र २र ३ १
शुष्मीशर्द्धोनमारुतम्पवस्वा

२ ३ २उ ३ २
नभिशस्तादिव्यायथाविट्।

२ ३ २ ३ १ २ ३ १ २
आपोनमक्षुसुमतिर्भवानः

३ १ २ ३ २उ ३ २
सहस्राप्साःपृतनाषाड्नयज्ञः॥ ३ † ॥ १५

हे सोम! "शुष्मी" बलवांस्त्वं "शर्द्धो न मारुतं" मरुतां बलमिव "पवस्व"। तत्र दृष्टान्तमेव स्पष्टयति—"यथा" "दिव्याः" "विट्"‡ प्रजाः "अनभिशस्ताः" अभिशस्ता निन्दिताः अनि-

* 'स्वर्षाता—सर्लोकस्य दाता'—इति वि०।

† ऋ० वे० ७, ३, २४, ३।

‡ 'विट्—पृथिवी'—इति वि०।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



न्हिताः* पवन्ते [“मरुतो वै देवानां विशः”—इति हि ब्राह्मणम् ] किञ्च “आपो न” उदकानीव “मक्षू” क्षिप्रं पवमानस्त्वं “सुमतिः भव” “नः” अस्माकं। किञ्च, “सहस्राप्साः” [ अप्स इति रूपनाम ( निघ० ३, ७, ६ ) ] बहुरूपस्त्वं† “पृतनाषाट् न” पृतनानामभिभवितेन्द्र इव “यज्ञः” यष्टव्यो भवसीति
॥ ३ ॥ १५

१र २र ३र २ १ ३ २
॥ इन्द्रवद्वासिष्ठम् ॥ औहोवाहाउहोयि। इहा। अ
१ र २ १ २ ३ ५ २ १ २
यꣳसोमाः। इन्द्रतु। भ्यꣳसुन्वायि। तुभ्यम्पवा। ता
१ २ ३ ४ ५ २ १ २ १ र २
इयितुवम्। अस्यपाही। तुवꣳहयाम्। चकृषे। त्वं
२ ३ ५ २ १ २ १ २ २
ववृषायि। इन्दुम्मदा। याइयुजि। या३४३। या३
४ २ १र २ १ २ ३ ४ ५
सोपमा६५ईम् ॥(१) सईꣳरथो। नभुरि। षाडयोजी।
२ १ २ १र २र ३ ४ ५ २र १र
महःपुरू। णीऽसात। यायिवसूनी। आदीविश्वा।
२ १ २र ३ ४ ५ २ १ २ १ र २
नहुषि। याणिजाता। सुवर्षाता। वनऊ। र्ध्वा३४३।
२ ४ २ १र २ १र २ ३ ४
नाउवापुन्ताई५६ ॥(२) शुष्मीशर्द्धो। नमारु। तम्पवं

---

* ‘अनभिशस्ता—अभिशाप-रहिता’—इति वि०।

† ‘सहस्राप्सा बहूदकाः इत्यर्थः’—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५ २ १ २ १ २र ३ ४ ५ .२र १र
स्वा । अनभिग्ना । स्वाइदिवि । यायथावोट् । आपो

२ १ २ ३ ४ ५ १र २र ३र २ १
नभा । चूइसुम । निर्भवानाः । औहोवाहाइहोयि ।

३ २ १ र २ १ र २ २ ४
इहा । सहस्रापसाः । पुतना । षाइ४३ट् । नाइयाप्

स्वाइ६५६:(३) ॥ ५ * ॥ [१] १३

अथ त्वमग्नइति तृचात्मकं द्वितीयं सूक्तम्,

तत्र प्रथमा ।

१ २ ३ २ ३ २ ३ १ २ ३ २
त्वमग्नयज्ञानाꣳहोताविश्वेषाꣳहितः ।

३ २ ३ १ २ ३ १ २
देवेभिर्मानुषेजने ॥ १† ॥

हे "अग्ने !" "त्वं" "विश्वेषां" सर्वेषां सप्तसंस्थारूपेण भिन्नानां "यज्ञानां" "होता" होम-निष्पादकोऽसि । यद्वा, यज्ञानां सम्बन्धी देवानामाह्वाता भवसि । कुतः ? इत्यत आह—यस्मात् "मानुषे" मनोः सम्बन्धिनि मनुष्ये "जने" यजमाने "देवेभिः" देवैः "हितः" होतृत्वेन निहितोऽसि तस्मादित्यर्थः ॥ १ ॥

---

* ऊ० गा० १५प्र० २ख० ५सा० ।

† छ० आ० १, १, १, २ (१भा० ६६ पृ०) = ऋ० वे० ४, ५, ११, १ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीया ।

१ २ ३ १ २ ३२ ३ १ २ ३ २

सनोमन्द्राभिरध्वरे जिह्वाभिर्यजामहः ।

१ २ १ २ ३ १ २

आदेवान्वक्षियक्षिच ॥ २ * ॥

हे अग्ने! "सः" त्वं "नः" अस्माकं "अध्वरे" यज्ञे "मन्द्राभिः" मदकरीभिः" स्तुतिभिर्वा "जिह्वाभिः" काल्यादिभिः† "महः" महतः देवान् यज हविर्भिस्तर्पय च। कथं तत्? इति चेत्, उच्यते—"देवान्" यष्टव्यानिन्द्रादीन् "आ वक्षि" आवह ततो "यक्षि च" यज च हवींषि तेभ्यो देहीत्यर्थः ॥२॥

अथ तृतीया ।

२ ३ १ २ ३ १ २ ३ १ २ ३ १ २

वेत्थाहिवेधोअध्वनःपथश्चदेवाञ्जसा ।

१ २ ३ १ २

अग्नेयज्ञेषुसुक्रतो ॥ ३ ॥ १६

हे "वेधः" विधातः! "सुक्रतो" शोभन-कर्मन्! "देव" दानादि-गुण-युक्त अग्ने! त्वं "यज्ञेषु" दर्शपौर्णमासादि-यागेषु "अध्वनः" महामार्गान् "पथश्च" क्षुद्रमार्गांश्च "अञ्जसा"

---

* ऋ० वे० ४, ५, २१, २।

† काली, कराली, मनोजवा, सुलोहिता, सुधूम्रवर्णा, स्फुलिङ्गिनी, विश्वरूपा, लीला इति काल्यादयः।

‡ ऋ० वे० ४, ५, ११, ३।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



आर्जवेण "वेत्थ" जानासि "हि" यस्मादेवं तस्मात् यज्ञ-मार्गात् भ्रष्टं यजमानं पुनस्तं मार्गं प्रापयेत्यर्थः ॥ ३ ॥ १४

अथ* होतादेवइति तृचात्मकं तृतीयं सूक्तम्,

तत्र प्रथमा।

१ २ ३१र २र ३ १ २ ३ १ २
होतादेवोअमर्त्त्यःपुरस्तादेतिमायया।
२ १ २ ३ १ २
विदथानिप्रचोदयन्॥ १ † ॥

"होता" होम-निष्पादकः "अमर्त्त्यः" मरण-रहितः "देवः" द्योतमानः "विदथानि" वेदितव्यानि कर्माणि "प्रचोदयन्" सोऽग्निः "मायया" कर्म-विषयाभिज्ञानेन युक्तः सन् "पुरस्तात्" कर्म-प्रारम्भ-काले एव "एति" अस्मानागच्छति ॥ १ ॥

अथ द्वितीया।

३ १र २र ३ २ ३ १ २
वाजीवाजेषुधीयतेध्वरेषुप्रणीयते।
१ २ ३ २ ३ १ २
विप्रोयज्ञस्यसाधनः॥ २ ‡ ॥

"वाजी" बलवान् अग्निः "वाजेषु" युद्धेषु "धीयते" देवैः शत्रु-हननार्थं निधीयते। किञ्च "अध्वरेषु" अग्नि-होत्रादिषु

---

* 'उशी विश्वसृज्। इदानीं मन्त्रवत्ते भवान्याख्यानि'—इति वि०।

† ऋ० वे० ३, १, २९, १।

‡ ऋ० वे० ३, १, २९, २।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"प्रणीयते" अध्वर्य्वादिभिः प्रकर्षेणाहवनीयादि-स्थानेषु प्रक्षिप्यते अतएव "विप्रः" मेधावी सन्नग्निः "यज्ञस्य" अग्निहोत्रादेः "साधनः" साधको भवति ॥ २ ॥

अथ तृतीया।

२ १ २ ३ १ २   ३ २ ३ २ ३ १ २
धियाचक्रेवरेण्योभूतानाङ्गर्भमादधे।

१ २   ३ २ ३ १ २
दक्षस्यपितरन्तना ॥ ३ * ॥ १७

योऽग्निः "धिया" आधान-पवमानेष्टि-रूपेण कर्मणा "चक्रे" आहवनीयरूपतया कृतोऽभूत् अतएव "वरेण्यः" सर्वैर्यजमानैः कर्माङ्गत्वेन वरणीयः यश्चाग्निः "भूतानां" स्थावर-जङ्गमात्मकानां भूतजातानामन्तः "गर्भं" स्वात्मानमेव गर्भरूपतया "आ दधे" सर्वत दधार "पितरं" सर्वस्य जगतः पालकं तमिममग्निं "दक्षस्य" दक्ष-प्रजापतेः† "तना" तनया वेदिरूपा भूमिर्दर्शपौर्णमासाग्निहोत्रादिकर्म-सिद्ध्यर्थं धारयति [भूमेर्दक्षदुहितृत्वे मन्त्रवर्णः—"अदितिर्ह्यजनिष्ठदक्षस्य दुहिता तव"—इति ॥ ३ ॥ १५

इति सामवेदार्थप्रकाशे-उत्तराग्रन्थस्य त्रयोदशस्याध्यायस्य पञ्चमः खण्डः ॥ ५ ॥

---

* ऋ० वे० ३, १, २९, ५।

† उपस्थ—यजमानस्य"=इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ षष्ठे खण्डे—

आसुतेसिञ्चतमिति त्र्यृचात्मकं प्रथमं सूक्तम्,

तत्र प्रथमा ।

२ ३ १ २ ३ २ ३ १ २ ३ १ २
आसुतेसिञ्चतश्रियꣳरोदस्योरभिश्रियम् ।
३ १ २ ३ २
रसादधीतवृषभम् ॥ १ * ॥

"सुते" दुग्धे गो-पयसि "श्रियं" श्रयणमाज्यं पयः "आसिञ्चत" आसिञ्चत् । कीदृशमाज्यं? "रोदस्योः" [कर्मणि षष्ठी] द्यावापृथिव्यौ "अभिश्रियम्" अभिश्रयन्तम् अग्नि-संयोगात् तावत् पर्यन्तं प्रवृद्धमित्यर्थः[अथवा "तत्कावग्नी द्यावापृथिव्याविति एके (निरु० दै० ६, १)"—इति यास्केनोक्तत्वात् अग्न्योरभिश्रियमित्यर्थः] । सेचनानन्तरं "रसा"† रसे आज्ये पयसि "वृषभं" वर्षकमग्निं "दधीत" धारयेत् [अजाया आग्नेयीत्वात् क्षीरस्याप्यग्नि-संयोजनमुचितम् "आग्नेयी वा एषा यदजा"—इति हि ब्राह्मणम् ॥ १ ॥

अथ द्वितीया ।

१ २ ४ २ ३ २ २ ३ १ २ २ ३ १ ३
तेजानतस्वमोक्या३ꣳसंवत्सासोनमातृभिः ।
३ १ २ ३ १ २
मिथोनमन्तजामिभिः ॥ २ ‡ ॥

---

* ऋ० वे० ६ ५, १६, ३ । † 'रसा—रसेन'—इति वि० ।
‡ ऋ० वे० ९, ४, १, ४ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"ते"* ता गावः "जानत" ज्ञानवत्यः [ अथवा सामान्याकारेण ते इति पुन्निर्देशः। किम्? "स्वम्" स्वकीयम् "ओक्यम्" निवासं महावीरं तत्र दोग्धुमगमन्नित्यर्थः। तदेवाह— "वत्सासो न" यथा वत्साः "मातृभिः" जननीभिः सहतया सङ्गच्छन्ते जामिभिर्बन्धुभिः सहिता गावः "मिथः" प्रत्येकं "नसन्त" सङ्गच्छन्ते महावीरम् ॥ २ ॥

अथ तृतीया।

२ ३ १ २ ३ १ २    ३ २ ३ १ ३ ३ २
उपस्रक्वेषुबप्सतःकृण्वतेधरुणन्दिवि।
१ २ ३ २उ ३ १२
इन्द्रेअग्नानमःस्वः ॥ ३ † ॥ १८

महावीरस्य "स्रक्वेषु" "बप्सतः" ज्वालया भक्षयतोऽग्नेः "नमः" अन्नं "धरुणम्" "इन्द्रे" "अग्ना"—इति वक्ष्यमाणत्वात् इन्द्राग्न्योर्धारकमन्नं "दिवि" अन्तरिक्षे‡ "उप कृण्वते" उप कुर्वते ऋत्विजः यदाग्निर्महावीरं दहति तदा तस्योपर्युभयविधं क्षीरम् आसेचयन्तीति शेषः ॥ ३ ॥ १८

---

* 'इन्द्राग्नी'--इति वि०।

† ऋ० वे० ६, ५, १६, ५।

‡ 'दिवि—द्युलोके इन्द्रे अग्नौ नमस्कारं कुर्वते स्वर्गलोकस्याप्राप्येत्यर्थः' —इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ तदिदासइति तृचात्मकं द्वितीयं सूक्तम्,

तत्र प्रथमा ।

१र २र ३ १ २ ३ २ ३ १ २ ३ २ ३ २ ३ १ २
तदिदासभुवनेषुज्येष्ठंयतोजज्ञउग्रस्त्वेषनृम्णः ।

३१ २ ३ १र २र ३ ३ २ ३ २उ ३ २ ३ १ २
सद्योजज्ञानोनिरिणातिशत्रूननुयंविश्वेमदन्त्यूमाः ॥ १* ॥

"तत्" जगत्कारणत्वेन सर्ववेदान्त-प्रसिद्धम्† "इत्"[शब्दोऽवधारणे] "भुवनेषु" [भू सत्तायां (भ्वा०प०)] सत्सु पृथिव्यादिषु लोकेषु मध्ये तत् जगत्कारणं ब्रह्मैव "ज्येष्ठं" प्रशस्ततमम् "आस" बभुव, तस्य परमार्थ-सत्वात् तद्व्यतिरिक्तानां व्यावहारिक-सत्वात् [यद्वा, ज्येष्ठं वृद्धतमं जगत्कारणत्वेन सर्वेषामादिभूतं बभूव। अस्तेर्लिटि "छन्दस्युभयथा (३, ४, ११७)"—इति सार्वधातुकत्वाद् "अस्तेर्भूः (२, ४, ५२)"—इति भूभावाभावः। यद्वा, वृद्धं तदेव ब्रह्म स्वप्रकाशतया सन्दीदीपे। अस गति दीप्त्यादानेषु (भ्वा० उ०), अस्माल्लिटि रूपम्] "यतः" उपादानभूतात् यस्माद् ब्रह्मणः "उग्रः" उद्गूर्णः त्वेषनृम्णः प्रदीप्त-बलः सूर्य्यात्मकइन्द्रः "जज्ञे" जातो बभूव [श्रूयते हि—"चक्षोः सूर्य्यो अजायत"—इति, "सूर्य्याचन्द्रमसौ धाता यथापूर्व्वमकल्पयत्"—इति च। "जनिकर्त्तुः प्रकृतिः (१, ४, ३०)"—इति प्रकृतेरपादान-सञ्ज्ञायां यत इति पञ्चमी।

* ऋ० वे० ८, ७, १, १ ।

† 'तत् इति पादपूरणः'—इति वि०





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



जज्ञे इति "गमहनेत्यादिनोपधा-लोपः ( ६, ४, ९८ ), "द्विर्वचनेऽचि ( १, १, ५९)"—इति तस्य स्थानिवद्भावात् द्विर्वचनादि, "यद्वृत्तान्नित्यम् ( ८, १, ६६)"इति—निघात-प्रतिषेधः]। स च "जज्ञानः" जायमानः "सद्यः" शीघ्रं "शत्रून्" शातयितॄन् सन्देहादीन् राक्षसान् "नि रिणाति" निहिनस्ति [ यद्वा, उपासकानां पापरूपान् शत्रून् निहन्ति। यथा च "सद्यो ह्येष जातः पाप्मानमपहत"—इति। जज्ञान इति जनेर्लिटः कानचि रूपमेतत्। रिणाति—रीगति रेषणयोः क्र्यादिकः ( प० ), "प्वादीनां ह्रस्वः ( ७, ३, ८० )"—इति ह्रस्वतम् ] "विश्वे" सर्वे जनाः [अवन्ति रक्षन्तीति] "ऊमाः" प्राणिनः [अवतेरौणादिको मन् प्रत्ययः "ज्वरत्वरेत्यादिना ( ६,४, २०) वकारोपधयोः स्थाने ऊठ्] सर्वे प्राणिनः "यं" सूर्य्यात्मकमुद्यन्तमिन्द्रम "अनु" लक्ष्य "मदर्थमुदगात् मदर्थमुदगात्"—इति "मदन्ति" हृष्यन्ति [ मदी हर्षे ( दि० प०) व्यत्ययेन शप् ( ३, १, ८५ ) ; तथाच ब्राह्मणम्—"भूतानि वै विश्वऊमास्तएनमनुमदन्ति उदगादुदगादिति"—इति। तैत्तिरीयकञ्च—"तस्मात्सर्व एव मन्यते मां प्रत्युदगादिति"—इति। यद्वा, यं स्तुत्यादिभिर्माद्यन्तमनुपश्चात् सर्वे प्राणिनः अभीष्ट-प्राप्त्या हृष्यन्ति "अनुर्लक्षणे ( १, ४, ८५ )" —इति अनोः कर्मप्रवचनीयत्वात् "कर्मप्रवचनीय-युक्ते द्वितीया ( २, ३, ८ )" स इन्द्रो जज्ञे इत्यन्वयः॥ १॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीया ।

३ १र २र३ ३ २ ३ १ २ ३ १ २ ३ १ २
वावृधानः शवसा भूर्योजाः शत्रुर्दासाय भियसन्दधाति ।
१ २ ३ २ ३ २ ३ १ २ ३ १ २र १ २
अव्यनच्च व्यनच्च सस्नि सन्तेनवन्त प्रभृता मदेषु ॥ २ * ॥

"शवसा" बलेन "वावृधानः" वर्द्धमानः, अतएव "भूर्योजाः" "शत्रुः" शातयिता† इन्द्रः "दासाय" उपक्षय-कारिणे शत्रवे‡ "भियसं" भीतिं "दधाति" विदधाति करोति "अव्यनत् च व्यनत् च" [ विविधमनिति श्वसितीति व्यनत्, स-प्राणकं जङ्गमं, तद्विलक्षणमव्यनत् स्थावरम् ] तदुभयमपि "सस्नि" संस्नातम् इन्द्रेण सम्यक् शोधितं भवति [स्नातेः "आदृगमहनः(३,२,१७१)" —इति व्यत्ययेन कर्मणि किन् प्रत्ययः । यद्वा, अन्तर्णीत-ण्यर्थात् कर्त्तर्येव किन्, वृष्ट्यादिना सम्यक् स्नापयिता शोधयिता भवति ; "न लोकाव्यय (२,३,६९)"—इति कर्मणि षष्ठ्याः प्रतिषेधः] । शिष्टः पादः प्रत्यक्षकृतः—हे इन्द्र ! "ते" तव "मदेषु" हर्षेषु हविषा स्तुत्या च जन्येषु सत्सु "प्रभृता" प्रभृतानि प्रकर्षेण धृतानि पोषितानि वा सर्वाणि भूतजातानि "सन्नवन्त" सङ्गच्छन्ते स्तोतुं हवींषि च दातुं समूहीभवन्तीत्यर्थः [ नवतिर्गति-कर्मा ( निघ० २,१४,२८) । प्रभृता—प्रपूर्वात् बिभर्त्तेः कर्मणि निष्ठा, "शे-

---

* ऋ०वे० ८, ७, १, ९ ।

† शत्रुः—प्रथमैकवचनमिदं षष्ठ्येकवचनस्य स्थाने द्रष्टव्यम् शत्रोः'—इति वि० ।

‡ 'दासाय—चतुर्थ्येकवचनं षष्ठ्येकवचनस्य स्थाने द्रष्टव्यम् । दासस्य दमन-स्वभावस्य'—इति वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



छन्दसि बहुलम् (६, १, ७०)"—इति शे-लोपः, "गतिरनन्तरः (६, २, ४९)"—इति गतेः प्रकृतिस्वरत्वम् ॥ २ ॥

अथ तृतीया।

२उ ३ १ २ ३ २ ३ २उ ३ २उ १ १ २
त्वेक्रतुमपिवृञ्जन्तिविश्वे द्विर्यदेतेत्रिर्भवन्त्यूमाः।
३ १२ २२ ३ १ २ ३
स्वादोःस्वादीयःस्वादुनासृजा
२ ३ २उ ३ १ २ ३ १ २
समदःसुमधुमधुनाभियोधीः ॥ ३ * ॥ १९

हे इन्द्र! "त्वे" त्वयि "सुपां सुलुक् (७, १, ३९)"—इति सप्तम्येकवचनस्य शे आदेशः] "विश्वे" सर्वे यजमानाः "क्रतुम्" अनुष्ठेयं कर्म "वृञ्जन्ति" समापयन्ति "अपि" [—शब्दो ब्राह्मणोक्तः सर्वभूतानां सर्वमनसां समुच्चयार्थः सर्वाणि पृथिव्यादीनि भूतानि सर्वेषां प्राणिनां मनांसि सर्वे यज्ञक्रतवश्च व्याप्ते त्वय्येव यजमानैः परिसमाप्यन्त इत्यर्थः। तथा च ब्राह्मणम्—"त्वयीमानि सर्वाणि भूतानि मनांसि सर्वे क्रतवोऽपि वृञ्जनीत्येतदाह" —इति] "यद्" यस्मात् "एते" "ऊमाः" तर्पकाः† [अवतेस्तर्पणार्थादौणादिको मन् प्रत्ययः,"ज्वरत्वरेत्यादिना (६,४,२०)वकारोपधयोरूठ्] ईदृशा यजमानाः पूर्वमेकाकिनः सन्तः पश्चात् "द्विः" द्विवारं स्त्रीरूपेण पुंरूपेण च जाताः सन्तः पुनरपत्येन सार्द्धं "त्रिः" त्रिवारं जन्मभाजो भवन्ति। एक एवात्मा स्त्रीपुं-

* ऋ० वे० ८, ७, १, ३।

† 'ऊमाः देवाः'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



रूपेण जायते "अर्द्धो वा एष यत् पत्नीति" श्रुतेः। पुत्रोऽप्यात्मैव—"आत्मा वै पुत्रनामासि"—इति श्रुतेः। यत एवमेभिर्द्वंद्वा भवन्ति, ततो वा गम्यते त्वय्येवानुष्ठितं सर्वं कर्म परिसमापयन्तीति; तथा च ब्राह्मणम्—"द्वौ द्वौ सन्तौ मिथुनौ प्रजायेते प्रजापत्यै"—इति] हे इन्द्र! त्वञ्च "स्वादोः" प्रियाद् गृहधनादेरपि "स्वादीयः" स्वादुतरं प्रियतरमपत्यं "स्वादुना" स्वादुभूतेन मातापित्रात्मकेन* "संसृज" संयोजय [यद्वा, "स्वादुना" मिथुन-भावेनोत्पन्नं तदपत्यमपि संयोजय]। एतदेवाह—"अदः" अपत्यं "मधु" मधुरं "मधुना" मद-हेतुना मिथुनान्तरेण पौत्रेण वा "सु" सुष्ठु "अभि योधीः" अभियोधय अभितः क्रीड़य† [धातूनामनेकार्थत्वात् युद्धाति रत्र क्रीड़ार्थे वर्त्तते। "मिथुनं वै स्वादु प्रजा स्वादु"—इत्यादि ब्राह्मणमत्रानुसन्धेयम्॥ ३॥ १९

३ ४ ३र ४ ५ ३र २ ३र-४र ५ १
॥ श्यैतम्॥ तदिदासभुव। नेषू२४औहोवा। ज्या

२ र र १ ७ ५ ५
यिष्ठंयतोजन्यउग्रः। त्वेषानृम्णा२३४ः। औ९हा। स

२र १ २ १ ३
द्योजज्ञानः। नायिरा२३यिणा। तिशा२। जू२३४

५ १ २ २ १ ३ ५र
ना। नुयंविश्वायिमा३दा। ऊम्मायि। त्यू२मा२३४औ

---

* 'स्वादोः सोमस्य, स्वादीयः आस्वादनकराः, स्वादुना सोमेन'—इति वि०।

† 'सुमधु—शोभनं मधु सोमाख्य, मधुना—द्रोणकलशेन, अभियोधीः—आभिमुख्येन योधयति'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



र ४र र ३ ४५ ३र २ ३र ४र ५ १
ह्वोवा ॥(१) वावृधानःशव । साभू३४औहोवा । रा

र २र र र १ २ ५
ओजाःशत्रुर्द्दासायभिय । सन्दाधा१ता२३४यि । ओ६

५ १ २ १ २ १ ३
हा । अत्यनत्वत्य । नाच्चार३सा । ह्निमार्म् । तार३

५ १ २ २ १ ३
४यिना । वन्तप्रभात्तो३मा । ऊम्माथि । दार्यिषूर३

५र र ३र ४३ ४५ ३ २ ३र ४५ ५
४औहोवा ॥(२) त्वे क्रतुमपिवृ । जता ३४ औहोवा ।

१ २र र र १ २ ५ ५
वायिश्वेद्दिय्यं देतेत्रिभं । वन्ताऊ१मार३४ः । औ६हा ।

२र १र र २ र १ र २ १ ३
स्वादोःस्वादीयःस्वादु । नासा२३ज्जो । समा२ । दा२

५ १ २ २ १ ३ ५र
२४ःह । मधुमधूना३भा । ऊम्माथि । यो२धा२३४औ

र ३ ५
होवा । वा२३४ह्व(३) ॥ १२ * ॥ [१] १९

अथ त्रिकद्रुकेष्विति तृचात्मकं तृतीयं सूक्तम्,

तत्र प्रथमा ।

१ २ ३ १र २र ३ २
त्रिकद्रुकेषुमहिषोयवाशिरन्तुविशुष्म

३ १ २र ३ १ २ ३ १ २ ३ २
स्तृम्पत्सोममपिवद्विष्णुनासुतंयथावशम् ।

---

* ऊ० गा० १३प्र० २ख० ११सा० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ २ ३ २ ३ २ ३ १ ९ ३ २ ३ १र
सईंममादमहिकर्म्मकर्त्तवे महामूरुं९

२र १ २ ३ २ ३ १र २र ३ १र २र
सैनं९सश्चद्देवोदेवं९सत्यइन्दुःसत्य मिन्द्रम् ॥ १* ॥

"महिषः" महान् पूज्यः "तुविशुष्मः" बहु-बलः "तृम्पत्" [ तृप प्रीणने तुदादिः ( प० ) ] तृप्यन् इन्द्रः "त्रिकद्रुकेषु" ज्यो.तिर्गौरायुरित्येतन्नामकेषु आभिप्लविकेष्वहःसु "सुतम्" अभिषुतं "यवाशिरं" यवमयसक्तुभिर्मिश्रितम् [ आङ्पूर्वस्य श्रीणातेः क्विपि "अपस्पृधेथाम् (६,१,३६)"—इत्यादिना "शिरइत्यादेशः" तं "सोमं" "विष्णुना" सह "अपिबत्" "यथावशम्" अवशत् पूर्वं यथा तं सोमं तथा अपिबत् [वश कान्तौ (अदा०प०) "बहुलञ्छन्दसि ( २,४,७३ )"—इति शपो लुगभावः] पीतः "सः" सोमः "मह्नां" महान्तम् "उरुं" तेजसा विस्तीर्णम् "ईम्" एनम् इन्द्रं "ममाद" अमादयत्। किमर्थम्? "महि" महत् वृत्र-हननादि-लक्षणं कर्म कर्त्तवे कर्त्तुं "सत्यः" "इन्दुः" स्रवन् "देवः" द्योतमानः "सः" सोमः "सत्यं" यथार्थभूतं "देवं" सोमं कामयमानम् "ईम्" एनम् "इन्द्रम्" "सश्चत्" [ सश्चतिर्व्याप्ति-कर्मा ] व्याप्नोतु ॥

"तृम्पन्"-"तृम्पत्"—इति पाठौ, "सत्यइन्दुस्सत्यमिन्द्रम्"—"सत्यमिन्द्रंसत्यइन्दुः"—इति अस्मिन्नृचे प्रत्येकमृगवसाने व्यत्ययेन पाठौ ॥ १ ॥

---

* पू० आ० ५, २, ३, १ (१भा० ९०९ पृ०) = ऋ० वे० २, ६, २८, ३।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीया ।

३ २ ३ १२ १२ ३१२ २२
साकञ्जातःक्रतुनासाकमोजसाववक्षिथ
३ २ ३ २ ३क२र ३१उ ३ १ २
साकंवृद्धोवीर्यैःसासहिमृधोविचर्षणिः ।
२ ३ २ २ ३ २उ ३१३१२ ३ १ २
दाताराधस्तुवतेकाम्यंवसुप्रचेतनसैनꣳ
१ २ ३२ ३१२ २२ ३१२ २२
सश्चद्देवोदेवꣳसत्यइन्दुःसत्यमिन्द्रम् ॥ * २ ॥

हे इन्द्र! त्वं "क्रतुना" कर्मणा प्रज्ञया वा "साकं" सह "जातः"† "साकम्" "ओजसा" बलेन "ववक्षिथ" विश्वं वोढुमिच्छसि [ वहेः सन्नन्तस्य लिटि मन्त्रत्वादाम् न भवति ]। किञ्च हे "प्रचेतन" प्रकृष्ट-ज्ञानेन्द्र ! त्वं "वीर्यैः" शत्रु-हननादि-लक्षणैः पराक्रमैः "साकं" "वृद्धः" प्रवृद्धः "मृधः" हिंसकान् सङ्ग्रामान् वा "सासहिः" ["न लोकाव्ययेति (२,३,६९) षष्ठी-प्रतिषेधः] तेषामभिभविता‡ "विचर्षणिः" पुण्यकृतोऽपुण्यकृतश्च विशेषेण द्रष्टा "स्तुवते" स्तोत्रं कुर्वाणाय यजमानाय "राधः" साकं "काम्यं" प्रार्थनीयं "वसु" धनं "दाता" सन् ववक्षिथेति समन्वयः। सैनमिति परोक्ष-निर्देशः सिद्धार्थः ॥

"प्रचेतन"—इति छन्दोगानां विशेष-पाठः ॥ २ ॥

---

* ऋ० वे० ९, ६, २८, ३ ।

† 'साकं जातः सदा जातः सद्यो वा जातः'—इति वि० ।

‡ 'सासहिः—साधनशीलः'—इति वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ तृतीया ।

२ ३ १ २ ३ १ २ ३ १ २ ३ १
अधत्विषीमाꣳअभ्योजसाक्रुविꣳयुधा

२ ३ १र २र ३ २ ३ १ २
भवदारोदसीअपृणदस्यमज्मनाप्रवावृधे ।

१ २ ३ २ ३ २ ३ १ १ ३ १ २ ६
अधत्तान्यञ्जठरेप्रेमरिच्यतप्रचेतय

१ २ ३ २ ३ २ ३ १र २र ३ १र २र
सैनꣳसश्चद्देवोदेवꣳसत्यइन्दुःसत्यमिन्द्रम् ॥ ३†॥२०

"अध" अथ सोमपानादनन्तरं "त्विषीमान्" इन्द्रः "ओजसा" बलेन "क्रुविं" क्रुवि-नामासुरं‡ "युधा" युद्धेन "अभ्यभवत्" अभिभूतवान्। किञ्च स इन्द्रः "रोदसी" द्यावापृथिव्यौ "आ अवृणत्" स्व-तेजसा समन्तात् पूरयामास। तथा "अस्य" पीतस्य सोमस्य "मज्मना" बलेन "प्र वावृधे" प्रकर्षेण वर्द्धते [ यद्वा, 'अस्य' क्रुवेः असुरस्य 'मज्मना' सारेण 'रोदसी' अपूरयत् स इन्द्रः सोमं द्विधा विभज्य "अन्यं" भागं स्वकीये "जठरे" "अधत्त"। "ईम्" एनम् अपरं भागं देवेभ्यः "प्रारिच्यत" प्रारेचयत् [एतेनार्द्धमिन्द्राय अर्द्धमन्येभ्योऽपि देवेभ्य इत्युक्तं भवति।

* "क्रिविं"—इति क० पु० पाठः।

† ऋ० वे० २, ६, २८, २।

‡ 'क्रुविं—कूपस्थानीयम्'—इति वि०।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



तथाच तैत्तिरीयकम्—"यत् सर्वेषामर्द्धमिन्द्रं प्रति तस्मादिन्द्रो देवतानां भूयिष्ठभाक्तमः"—इति]। हे इन्द्र! त्वं "प्रचेतय" एवम्भूतं सोमं देवांश्च सम्यक् ज्ञापय प्रापयेत्यर्थः। अन्यत् पूर्ववत्॥

"प्रचेतय"—इति विशेष-पाठः॥ ३॥ २०

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य त्रयोदशस्याध्यायस्य षष्ठः खण्डः॥ ६॥

---

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थ-महेश्वरः॥ १३॥

## ॥ इति षष्ठः प्रपाठकः* ॥ ६॥

इति श्रीमद्राजाधिराज-परमेश्वर-वैदिकमार्गप्रवर्त्तक-श्रीवीर-बुक्क-भूपाल-साम्राज्य-धुरन्धरेण सायणाचार्य्येण विरचिते माधवीये सामवेदार्थप्रकाशे उत्तराग्रन्थे त्रयोदशोऽध्यायः॥

---000---

* 'षष्ठः प्रपाठकः परिसमाप्तः समाप्तश्चैतद्दवामदनग्रामसत्कम्'—इति । य० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.